गुणवृत्तित्वादाश्रयलिङ्गतैव । भरिमा पृथ्वी । वरिमा तपस्वी । इत्यादि । "अल्" । प्रभव· 'प्रभवस्तु पराक्रमे । जलमूले जन्महेतौ [1]ज्ञानस्य स्थानआदिमे' । सम्भव 'सम्भवस्तु पुमान् हेतावुत्पत्तौ मीलकेऽपि च । [2]आधारानतिरिक्तत्वमाधेयस्य च सम्भव' ॥ प्रश्रय अनौद्धत्यम् । प्रतिश्रय –ससद् आस्पद च । विघस [3]भुक्तशेषम् । सयम इन्द्रियनिग्रह· । नियम '[4]यन्त्रणाया प्रतिज्ञाया नियमो निश्चये व्रते' । उपयम विवाह । निगद पाठ । प्रक्वण वीणाध्वनि । प्रत्यय· 'प्रत्यय [5]ग्रथितत्वे च [6]संज्ञादौ ज्ञान एव च । आचारे शपथे रन्ध्रे विश्वासाधीनहेतुषु' ॥ अधीने वाच्यलिङ्ग । [7]राजप्रत्यया· प्रजा । परिचय - याच्ञा [8]संस्तवश्च । क्षय· 'कल्पान्ते [9]निलये पुसि क्षयो[10]ऽपचययक्ष्मणो[11] । पाश 'पुमान् [12]कचान्ते सङ्घाते [13]कर्णान्ते शोभनार्थक । [14]छात्राद्यन्ते च निन्दार्थ पाश पक्ष्यादिबन्धने' ॥ पक्ष्यादिबन्धने पुन्नपुसको वक्ष्यते, औणादिकोऽप्ययम् । अनुशय 'पुमाननुशयो द्वेषे पश्चात्तापा[15]ऽनुबन्धयो' देशविशेषेऽपि । चय· 'चय समूहे [16]प्राकारमूलबन्धे [17]समाहृतौ' । स्थूलोच्चय 'स्थूलोच्चयस्त्व[18]साकल्ये [19]गण्डोपल[20]वैरण्डयो । गजाना मध्यमगतौ' । सङ्ग्राम युद्धम् । पादावर्त्त· अरघट्ट । मोक्ष अपवर्ग । प्रणय 'प्रणय [21]प्रसरे प्रेम्णि याच्ञावि[22]स्रम्भयोरपि' । नय –नीति [23]नैगमादिश्च । अनय 'व्यसनान्यशुभ दैव विपदित्यनयास्त्रय' । सनय –पश्चादवस्थायि बलम्, मेलकश्च । निस्राव [24]ओदनमण्ड । समुदय –रणम् सह [25]उद्गमश्च । समुदाय 'समुदायो गणे रणे' । प्रलय 'प्रलयो मृत्युकल्पान्त[26]मूर्च्छा- येषु प्रयुज्यते' । महालय 'परमात्मनि तीर्थे च विहारे च महालय' । अत्यय 'अत्य- योऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयो' । निपात चादि । स्तव स्तुति । उत्सव [27]उत्सेक । [28]अमर्ष –[29]इच्छोत्पत्ति [30]महश्च । आश्रव 'आश्रवोऽङ्गीकृतौ क्लेशे त्रिलिङ्गस्था [31]वचनस्थिते' ।

---

नपुंसकत्वसाधनार्थमिति । 'भावे त्वतल्' (७।१।५५) इति प्रत्ययादारभ्य 'ब्रह्मणस्त्व' (७।१।७७) इति त्वमभिव्याप्य ये त्व–य–एयण् इत्यादि प्रत्ययास्तेषां नपुंसकत्वमुक्तमिति वचनसाधनार्थम् [illegible] । [1]ज्ञानस्य स्थान आदिमे इति ज्ञानस्य गङ्गादीनां दर्शनस्य प्रथमं स्थानं हिमवदादि तत्र, यल्लक्ष्यम् 'सुरापगाया प्रभवो हिमाचल' इति, गङ्गाया प्रभवो दर्शनस्थानं हिमाचल इत्यर्थ । [2]आधारानतिरिक्तत्वमाधेयस्येति आधेयस्य वस्तुन आधाराद् अनतिरिक्तत्वम्, अनाधिक्यं यथा 'सम्भवति द्रोणं स्थाल्यामि'ति । [3]भुक्तशेषमिति भुक्तोज्झितम् । [4]यन्त्रणायामिति बन्धने । [5]ग्रथितत्वे इति ग्रथायाम् । [6]संज्ञादौ इति सन् स्यादिति तद्धितादि सम्बन्धिनी, यल्लक्ष्यम् 'सोऽभवद्वरवधूसमागम प्रत्ययप्रकृतियोगसंनिभ' इति । [7]राजप्रत्यया इति राज्ञ प्रत्यया राजप्रत्यया राजाधीना इत्यर्थ । [8]संस्तव इति लोके ओळखाण पिछाण इति प्रसिद्धि । [9]निलये इति गृहे । [10]अपचय इति हीनता । [11]यक्ष्मेति लोके क्षयनरोग । [12]कचान्ते सङ्घाते इति पाशशब्द कचान्ते समूहार्थ यथा केशपाश । [13]कर्णान्ते शोभनार्थक इति पाशशब्द कर्णान्ते प्रशंसार्थ । एव [14]छात्राद्यन्ते निन्दार्थ इति । [15]अनुबन्ध इति आसक्ति । [16]प्राकारमूलबन्ध इति कोट्टपीठम् । [17]समाहृतौ इति सञ्चयने । [18]असाकल्ये इति असामस्त्ये । [19]गण्डोपल इति स्थूलपाषाण । [20]वैरण्ड इति–इह वरण्डशब्द समूहार्थ । [21]प्रसरे इति विस्तारे । [22]विस्रम्भ इति विश्वास । [23]नैगमादिरिति नैगम–सङ्ग्रह–व्यवहार–ऋजुसूत्र शब्द–समभिरूढ–एवम्भूतलक्षणा सप्त । [24]ओदनमण्ड इति ओसावण । [25]उद्गम इति उदय । [26]मूर्च्छाय इति मूर्च्छानष्टचेष्टत्वम्, तस्य आय आगमनम् । [27]उत्सेक इति वीरभाव । [28]अमर्ष इति रौद्रभाव । [29]इच्छोत्पत्ति रिति इच्छाप्रादुर्भाव, इच्छाप्रसर इत्यपरे । [30]मह इति महोत्सव । [31]वचनस्थिते इति आज्ञाकारके ।

स्रव घर्ण । अपह्नव 'स्नेहापलापेऽपह्नव' । निह्नव 'अविश्वासेऽपलापे निकृतावपि निह्नव' । अभिषव 'पुमानभिषव स्नाने मद्यसन्धान-यज्ञयो' । प्रसव 'तोकोत्सरयो फले पुष्पे प्रसवो गर्भमोचने' । क्षव -क्षुतम् राजिका च । द्रव-नर्म्म इति पलायन च । विद्रव पलायनम् । जव वेग, जपाया तु शिंशपादित्वात्स्त्रीत्वम् । आसव शीधुः । लव -कालविशेष लेशश्च । सवर आस्रवनिरोध । आदर निर्बन्ध । वश 'वश प्रभुत्व-आयत्ते आयत्तत्वाभिलापयो' इत्यजय । गौडस्तु 'आयत्तता प्रभुत्वेच्छे वशो परवशे त्रिषु । सुतेभीस्त्रीषु वन्ध्याया स्त्रीगव्या च वशास्त्रिया'मित्याह । गम -गमन सदृशपाठश्च । आगम सिद्धान्त । सङ्गर 'विपद्याऽऽजौ क्रियाकारे सङ्गरोऽङ्गीकृतौ विषे । शमीफले तु स्यात्स्त्रीयम्' । अवतर अवतरणम् । परिकर 'प्रगाढगात्रिकाबन्धे पर्यङ्कपरिवारयो । समारम्भे विवेके च गणे परिकरो नरि' । व्यतिकर -व्यसन व्यतिषङ्ग विपर्ययश्च । ग्रह 'ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे । सूर्यादौ पूतनादौ च सैंहिकेयोपरागयो' । परिग्रह 'पत्नीपरिजनाऽऽदानमूलशापा परिग्रहा' । विग्रह 'विग्रह समरे काये विस्तार-प्रविभागयो' । प्रतिग्रह 'ग्रहान्तरे स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे । द्विजेभ्यो विधिवद्देये तद्ग्रहे च प्रतिग्रह' । उपग्रह 'उपग्रहो भवेद्बन्धामनुकूलन एव च' । अभिग्रह 'अभि-ग्रहोऽभिग्रहणेऽप्यङ्ग्नियोगेऽपि गौरवे' । निग्रह 'बन्धके भर्त्सने पुंसि मर्यादाया च निग्रह' । शल्यग्रह घर्ण । समज उदजश्च-पशुप्रेरणम् । उपसर 'स्त्रीगवीषु पुङ्गवाना गर्भाधानाय प्रथम सरणम् । ग्लह -द्यूतपण मूलकपण परिमिता मुष्टि । सम्मद प्रम-

---

अपलापे इति परकृतोपकारादेरकथने लोके ओळवणओ इति प्रसिद्धे । निकृतौ इति मायायाम् । मद्यसन्धान इति मद्य क्षयाणा । तोकमिति अपत्यम् । क्षुतमिति नासिकाशब्द, छीकि इत्यथ । राजिकेति राई । नर्मेति क्रीडा । द्रुतिरिति शीघ्रता । आस्रवनिरोध इति आस्रवति आगच्छति पापमस्मादिति आस्रव चित्तव्यापार, तस्य निरोधो निषेध आस्रवनिरोध । आयत्ते इति परवशे । आयत्तत्वमिति परवशत्वम् । सुतेति पुत्री । इभीति हस्तिनी । स्त्री इति नारी । वन्ध्यायामिति लोके वाझि इति प्रसिद्धायाम् । स्त्रीगव्यामिति स्त्री चासौ गौश्च स्त्रीगवी 'गोस्त्रपुरुषात्' (७।३।१०५) इति अट्समासान्त, तस्यां धेनौ इत्यथ, वन्ध्यगव्यामित्यपरे यदाहु 'वशानाया वन्ध्यगव्या हस्तिन्यां दुहितर्यपि' इति । विपदीति आपदि । आजौ युद्धे । क्रियाकारे इति व्यवस्थास्थापने । शमीफले इति सांगरी इति प्रसिद्धे । पर्यङ्क इति पयस्तिका, पालठी इत्यर्थ । समारम्भे इति आरम्भे । व्यतिषङ्ग इति सम्बन्ध । अनुग्रह इति प्रसाद । निर्बन्ध इति आसक्ति । पूतनादाविति राक्षसीविशेषादौ । सैंहिकेयोपरागयोरिति राहुग्रहणयो । पत्नीति स्त्री । परिजन इति परिवार । आदानमिति स्वीकार । मूलमिति आदि । शाप इति शपथ इति क्षीरस्वामी । समरे इति सङ्ग्रामे । प्रविभाग इति वाक्य समासाद्य आरभकपदसमूह । ग्रहान्तरे इति प्रतिपक्षग्रहे । पतद्ग्रह इति पिचलादिमय ताम्बूलप्रक्षेपणादिभाजनम् । द्विजेभ्यो विधिवद्देये इति ब्राह्मणेभ्यो दानद्रव्ये इत्यनेकार्थवृत्तौ । तद्ग्रहे इति दानद्रव्यग्रहे । बन्धामिति हठाद्दृष्टस्त्रियाम् । अभिग्रहणे इति नियमे । अभियोगे इति उद्यमे । बन्धक इति धनिकस्य यदधमर्णेन उत्तमर्णस्य भूम्यादि आयत्त क्रियते, लोके अडागओ इति प्रसिद्धि । स्त्रीगवीषु इति स्त्रियश्च ता गावश्च स्त्रीगव्य, 'गोस्त्रपुरुषात्' (७।३।१०५) इति अट्समासान्त, गाव इत्यथ, तासु स्त्रीगवीषु । पुङ्गवानामिति पुमांसश्च ते गावश्च पुङ्गवास्तेषां पुङ्गवानां बलीवर्दानामित्यर्थे, यदनेकार्थ -पुङ्गवो गवि भेषजे' इति 'गोस्त्रपुरुषात्' इति

दक्ष–हर्ष । अन्तर्घन· अन्तर्घणश्च–मध्यप्रदेश· । प्रघण प्रघाणश्च–अलिन्द । निघोघौ गुणवृत्तित्वादाश्रयलिङ्गौ । सङ्घ· प्राणिसमूह । उद्घन·–यस्योपरि काष्ठादि हन्यते । अपघन अङ्गम् । उपघ्न निकटाश्रय· । अयोघन· द्रुघणश्च–लोहमुद्गर । परिघ –अर्गला परिघात आयुध च । समाह्वय प्राणिद्यूत सङ्ग्रामश्च । आह्वय नाम । निह्व –आह्वा ज्ञान मखश्च । आहव रणम् । आहावः निपानम् । ह्व –आह्वाऽऽह्वानाऽध्वराह्वा । वध हिंसा । व्यध ताडनम् । जप·–नि शब्द मन्त्रावर्तनम् । मद 'मदो रेतसि कस्तूर्या गर्वे हर्षेभदानयो । मद्येऽपि मद आख्यातो मदी कृषकवस्तुनि' ॥ क्वण शब्द । यम 'यमो दण्डधरे ध्वाङ्क्षे सयमे यमजे त्रिषु । शरीरसाधनापेक्षनित्यकर्मणि चोच्यते ॥ मृत्यूपरमयोरपि' ॥ आरव शब्द । आप्लव स्नानम् । अवग्रह 'गजालिके वृष्टिरोधे प्रतिबन्धेऽप्यवग्रह । स्वतन्त्रत्व-निषेधेऽपि' । प्रग्रह 'प्रग्रह स्यात्तुलासूत्रे बन्दौ नियमने भुजे । हयादिरश्मौ रश्मौ च सुवर्ण-हलिपादपे' । प्रावार वस्त्रविशेष· । समुच्छ्रय 'वैरोत्सेधौ समुच्छ्रय' । इत्यादि ॥ किश्तिव् । क्यन्त श्तिवन्त च नाम पुल्लिङ्ग भवेत् । कि· । अय वृत्ति । वृतूङ्धातु तदर्थश्च । श्तिव् । अय पचति । डुपचींष् धातु तदर्थश्च । श्तिव्साहचर्यात् 'इकिश्तिव् स्वरूपार्थे (५।३।१३८) इति विहितस्यैव केर्ग्रहणम् ॥ ननङौ । नप्रत्ययान्त नङ्प्रत्ययान्त च नाम पुल्लिङ्ग भवेत् । न· स्वप्न । 'स्वप्न स्वापे प्रसुप्तस्य विज्ञाने दर्शनेऽपि च' । रक्ष्ण त्राणम् । यत्न उत्साह । प्रतियत्न 'सस्कारे प्रतियत्न स्यादुपग्रहणलिप्सयो·' । प्रश्न पृच्छा । नङ्–विश्न । विच्छ-नम् भावे ॥ घघञौ । घप्रत्ययान्त घञ्प्रत्ययान्त च नाम पुल्लिङ्ग भवेत् । घ· कर 'करो

---

भङ्गसमासान्त । अलिन्द इति–यो हि बहिर्द्वारामवर्तिचतुष्किकान्से भवति स [ उपलिन्दकाख्य ] उच्यते, लोके [ बारणा री बाहीरली बीजीगई ] टोडली इति प्रसिद्धि । [ निघ इति निर्विशेपम् निश्चयेन वा हन्यन्ते ज्ञायन्ते निघा वृक्षा , निघा शालय , निघा बृहतिका, निघ वस्त्रम्, तुल्यदीर्घविस्तारपर्यायो निघशब्द , यदमर 'विष्वक्समे निघ ', 'समन्तात्समे समस्तुल्यारोहपरिणाहे' इति च तट्टीका । परिघात इति परि समन्तात् हननम् । आयुधमिति गुरज इति प्रसिद्धि । प्राणिद्यूतमिति प्राणिभिर्मेषकुक्कुटादि भिर्द्यूत प्राणिद्यूतम् । आह्वेति नाम । आह्वानमिति आकारणम् । नि शब्द मन्त्रावसनमिति शब्द विना मन्त्रादिगुणनम् । रेतसीति शुक्रे । कृषकवस्तुनीति भादि इति प्रसिद्धि । दण्डधरे इति कृतान्ते । यमजे इति यमलजाते । शरीरसाधनापेक्षनित्यकर्मणीति अहिंसासूनृतास्तेयमब्रह्माकिञ्चनतालक्षणे । उपरम इति निवृत्ति । गजालिके इति गजललाटे । स्वतन्त्रत्वनिषेधे यो राजादिकस्य स्वातन्त्र्य निषेधयति अमात्यादिस्तत्र । तुलासूत्रे इति येन धृत्वा तोल्यते तत्र । बन्दौ इति हठहृतस्त्रियाम् । नियमने इति बन्धने । हयादिरश्मौ इति वागि रासि इत्यादिप्रसिद्धायाम् । रश्मौ इति किरणे । सुवर्णहलिपादपे इति कृतमालवृक्षे, लोके किरमालओ । वस्त्रविशेष इति उत्तरासण । उत्सेध इति उच्चति । →| इति अत्प्र त्ययान्तशब्ददुर्गपदार्था । |← किश्तिव् इति किप्रत्ययान्तशब्दस्य पुस्त्वमुक्त तदुपलक्षणम्, तेन इप्रत्य यान्तस्यापि पुस्त्व भवति, यत –ककारानुबन्धो गणनिषेधार्थ एव न तु तस्यान्यत्फलम् । पर न ॥ औणादिककिप्रत्ययस्य पुस्त्वम् । प्रसुप्तस्य विज्ञाने दर्शने इति दृष्टपूर्वस्य स्मरण विज्ञान तत्र, अदृष्टपूर्वस्य स्मरण दर्शन तत्र, उभयोरपि सूहणा इति प्रसिद्धि । सस्कार इति सतो गुणान्तराधान सस्कारस्तत्र । उपग्रहणमिति आधानम् । →| इति नप्रत्ययान्तशब्ददुर्गपदार्था । |← विच्छनमिति गमनम् । →| इति

वेर्पोपले रश्मौ पाणौ प्रत्यायशुण्डयोः । परिसर 'स्मृत परिसरो मृत्यौ देवोर्पान्तप्रदेशयोः' । उरश्छद कवचम् । प्रच्छद उत्तरच्छदश्च–शय्योत्तरपट, छदस्य तु पुन्नपुंसकता वक्ष्यते । आकर 'पुमानाकर उत्पत्तिस्थाने श्रेष्ठसमूहयोः' । आतर –तरपण्य नदीतीर्थं च । विषय –प्रबन्धायस्य यो ज्ञात स तस्य विषय । 'पुमान् इन्द्रियार्थे जनपदे देशगोचरयोरपि' । भव 'प्राप्तीशक्षेमससारमात्रोत्पत्तिषु ना भवः' । गोचर' विषय । सचर मार्ग । वह'–वृषस्कन्धदेश वायुश्च । व्यज पन्थाः । आपण विपणि । निगम 'निगमो वणिजे पुर्यां कटे वेदे वणिक्पथे' । धत्त–अंकोट, शिंबलमली च । कप आकषः निकषश्च–स्वर्णादिशाण, 'शाणे तु निकष पुंसि रक्षसा मातरि स्त्रियाम्' । आरान खातविशेष ॥ इत्यादि ॥ घञ्, पाद 'पादो बुध्नाङ्घ्रितुर्यांशरश्मिप्रत्यन्तपर्वताः' । रोग व्याधि । वेश –वेश्यागृह वेषश्च । स्पर्श 'रजाया स्पर्शवे स्पर्शो दानस्पशनयोरपि' । खदिरसार चन्दनसारश्च–स्थिर खदिरादिभाग । अतीसार व्याधि । सार बलम् । विसार मत्स्य । पाक पचनम् । प्रपञ्च –माया विस्तारश्च । परीवाप –परिवार, परितो वीपत्याग जलाधारश्च । विस्रम्भ 'विस्रम्भ केलिकलहे विश्वासे प्रणये वधे' । आरम्भ 'आरम्भस्तु वधे दर्प त्वरायामुद्यमे पुमान्' । परिवेश 'वेष्टने परिवेश स्याद्भानो सविधमण्डले' । परिवेष 'पुल्लिङ्ग परिवेष स्यात्परिधौ परिवेषणे' । सहर्ष प्रभञ्जने च पुंसि स्यात्सहर्ष स्पर्धने मुदि' । उच्छ्वास 'उच्छ्वास प्राणनश्वासगद्यबन्धगुणान्तरे' । श्रीवास 'श्रीवासो कुन्दधूपे ना पङ्कजे पीववाससि' । प्रग्राह 'प्रग्राह स्यात्तुलासूत्रे दूंपादिप्रग्रहेऽपि च' । परिवाह 'परिवाहो जलोच्छ्वासे राजयोग्ये च वस्तुनि' । व्यायाम 'व्यायामो दुर्गसञ्चारे वियामे पौरुषे श्रमे' । दश 'दश स्यात्खण्डने दोषे

---

१ लूप्रलया तशब्ददुर्गपदार्था । [ऽ] वेर्पोपले इति करहा गडा वा इति प्रसिद्धे । प्रत्याय इति राजदेय भाग । देवमिति विधि । उर्पान्तप्रदेश इति प्रान्तभूमि । कवचमिति सन्नाह । शय्योत्तरपट इति उछियाबड । तरपण्यमिति तरणमूल्यम् । प्रबन्धायस्य यो ज्ञात स तस्येति, यस्य प्रबन्धाधारिताद् यो ज्ञात प्रसिद्ध स तस्य विषय इत्युच्यते । 'यस्य मत्स्यादेर्योऽनवादिर्ज्ञात प्रसिद्धस्तत्र वर्तते' इति क्षीरस्वामी । इर्षा इति रुद्र । कटे इति लोके त्रिन्न । अंकोट इति बगला । शिंबलमली इति लोके धूम (छूम ?) इति प्रसिद्धि, यदाह 'वक्रो वसुक इयुक्त शिवाङ्क शिवशेखर । महापाशुपतश्चैव सुमत शिवमल्लिका' इति । [ऽ] इति घप्रत्यया तशब्ददुर्गपदार्था । [ऽ] बुध्न इति मूल्यम् । अङ्घ्रिरिति चरण । तुर्यांश इति लोके पाओ । रश्मिरिति किरण । प्रत्यन्तपर्वता इति मूलपर्वतपार्श्वे लघुपर्वता इत्यर्थ । केलिकलहे इति सम्भोगकलहे । प्रणये इति स्नेहे । भानो सविधमण्डले इति सूर्यस्य समीपवर्तिनि मण्डले । परिधाविति सूर्यमण्डले । परिवेषणे इति भोजननिवेषणे, लोके परीसणओ । प्रभञ्जने इति वायौ । प्राणनमिति जीवन मायुरित्यर्थ । श्वास इति पवनश्वसितम् । गद्यबन्धगुणान्तरे इति उदाहरण यथा 'गद्यपद्यमयी चम्पू साङ्कोच्छ्वासा च वध्यते' इति । कुन्दधूपे इति कणगूगल इति प्रसिद्धे, श्रीवास इति वा पर्यायान्तरम्, यदाह 'श्रीवेष्टो' वृक्षधूपश्च क्षीरश्रेष्ठो बलद्रुम । श्रीवास पायसश्चान्य स्त्यान स्याद्धृतदधि' इति । तुलासूत्र इति येन तुला धार्यते [तणा इति भाषा] तत्र । [दूंपादिप्रग्रहे इति गवादिरश्मौ रस्सि वागि इत्यादि प्रसिद्धि । दुर्गसञ्चारे इति चाणक्योक्तदुर्गसान्तराणामुपलक्षण तत्र यथा 'शमव्यायामाभ्यां प्रतिविहित

दशो मर्मणि कीर्त्तितः । सर्पक्षतेऽपि सत्राहवनमक्षिकयोरपि' ॥ वनमक्षिकाया स्त्रीपुंसलिङ्गो वक्ष्यते ॥ विकाशो वीकाशो नीकाशश्च--रहः प्रकाशश्च । अपदेशः स्थानम् । व्याज --हेतु, प्रसिद्धिश्च । प्रकाशः 'स्यादातपे प्रकाशो ना स्फुटताहासयोरपि', प्रकटाऽतिप्रसिद्धयोस्त्वाश्रयलिङ्ग । रोमाञ्चः पुलक । सङ्केत'--समय संज्ञा च । उपसर्ग --उपद्रव प्रादिश्च । प्रास' कुन्त । घास. यवसम् । निषङ्ग उपासङ्गश्च--तूणीर । सम्प्रहार सस्फोट' समुत्कर्षश्च--रणम् [ सम्प्रहार सस्फोट. । समुत्कर्ष चरणम् (?) ] ॥ उत्सङ्ग अङ्क । कोप क्रोध रोप मक्ष अमर्षश्च--प्रतिघ' । योग 'योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु । वपु - स्थैर्यप्रयोगे च विष्कम्भादिषु भेषजे । विश्रब्धघातिनि द्रव्योपायसंनहनेष्वपि ॥ कार्मणेऽपि च योग स्यात्' ॥ भोग' 'पालनेऽभ्यवहारे च योषिदादिभृतावपि । भोग सुखे धने चाहे. शरीरफणयोरपि' ॥ आभोग परिपूर्णता । अभिषङ्ग --शाप क्लेशः पराभवश्च । छन्द'--अभिप्राय स्वातन्त्र्य च । निर्वाद --वादाभाव कौलीन[15] निश्चितवादश्च । प्रसाद '[16]काव्यमाणे प्रसादोऽनुरोधस्वास्थ्यप्रसत्तिषु' । आमोद --हर्ष, गन्धश्च । याम 'प्रहरे संयमे याम ' । प्रकार.--भेद सादृश्य च । प्रावार बृहतिका, स्त्रीवेऽपीति कश्चित् । आसार 'आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले' । सङ्कार[20] 'सङ्कारोऽग्निचटत्कारे संमार्जन्यऽवपुञ्जिते । नरदूषितकन्यायां सङ्कारी' । आकार --आकृति इङ्गित च । अभिहार '[25]अभिहारोऽभियोगे च चौर्ये संनहनेऽपि च' । अवहार 'अवहार स्मृतश्चौरे द्यूतयुद्धादिविश्रमे । निर्मन्त्रणोपनेतव्यद्रव्ये ग्राहाव्ययादसि' । सस्त्याय --सङ्घात संनिवेश गृह च । प्राय 'मरणेऽनशने प्राय पुंसि बाहुल्यतुल्ययो ', तुल्ये वाच्यलिङ्ग । व्यूह 'व्यूहो ना [30]बलविन्यासे निर्माणे वृन्दतर्कयो ' । समूह सङ्घात । निवेश 'निवेश [31]शिबिरोद्वाह-

विन्यास भूपते । परं प्रत्यावाप फलति हुतसेकस्तरुरिव' । वियाम इति तिर्यक् बाहू प्रसारितौ व्याम इति यावत्, यदुक्तं 'अथ व्यामे वियाम स्याद्बाहुचापप्रतनूतल' इति लोके वामनान इति प्रसिद्धि । व्याज इति छद्म । आतपे इति उद्योते । स्फुटतेति प्रकटता । यवसमिति तृणम् । प्रतिघ इति इर्ष्या । [ कोपाद्या पञ्च रोसपर्याया इत्यर्थ ] । सङ्गतिरिति सङ्गम । युक्तिरिति योजनम् । वपु स्थैर्यप्रयोग इति रसायनम् । विश्रब्धघातिनीति विश्वासघातिनि । उपाय इति सामदानादि । संनहनमिति सन्नाह । अभ्यवहारे इति भोजने । योषिदादिभृताविति वेश्याभाटके, आदिशब्दाद्राजादे करादिलक्षणो भोग । शाप इति मिथ्याभिशसनमनिष्टावधारण च, लोके सराप । कौलीनमिति लोकापवाद, यदाह 'कौलीन जनवादे' इति, जनवादो लोकापवाद इति तु तद्वृत्ति । काव्यमाणे इति काव्यगुणे । अनुरोध इति अनुग्रह । बृहतिकेति उत्तरासण । प्रसरणे इति तृणकाष्ठादिहेतवे प्रसारस्तन । अग्निचटत्कारे इति अग्निचटत्कृतिशब्दे । संमार्जनीति लोके बुहारी । अवपुञ्जिते इति सपांसुतृणसमूहे, लोके ऊकरडओ इति प्रसिद्धि । नरदूषितकन्यायामिति भुक्तकन्यायाम् । इङ्गितमिति भावसूचक चेष्टितमित्यनेकार्थवृत्ति । अभियोगे इति उद्यमे । संनहने इति सन्नाहे । द्यूतयुद्धादिविश्रमे इति द्यूतयुद्धादिविश्रान्तौ । निर्मन्त्रणोपनेतव्यद्रव्यमिति 'शर्करादिस्वादूकृत भक्ष्यम्' इति अनेकार्थवृत्ति तत्र । संनिवेश इति रचना । बलविन्यासे इति बलस्य सैन्यस्य चक्रादिरूपेण विन्यासो बलविन्यास, यदाह 'दण्डो मण्डलभोगौ चाप्युत्सङ्गश्चावलो दृढ' । व्यूहास्तेषा विशेषा स्युश्चमूव्यूहादयोऽपि च' इत्यनेकार्थवृत्ति, तत्र । शिबिरो-

विन्यासेषु'। निर्वेश 'मूर्च्छने पुंसि निर्वेशो भोगवेतनयोरपि'। प्रदेश 'प्रदेशो देशमात्रे स्यात्तर्जन्यङ्गुष्ठसम्मिते। भित्तावपि'। लेश लव। अवरोह 'अवरोहोऽवतरणे तरोर्विलतोद्गमे'। रुञ्ज'—सह कैञ्चश्च। व्याज –शाठ्य अपदेशश्च। अपभ्रंश 'पतने स्यादपभ्रंशो भाषाभेदाऽपशब्दयो'। आरोह 'आरोहो दैर्घ्यमानयो'। आरोहणे नितम्बे च संमुच्छ्रयनिषादिनो'। कम्पः वेपथु। उच्छ्राय उत्सेधः। उपबर्हः उपधानम्। परिबर्ह'—परिच्छदः वस्तु धनम् नृपार्हं च छत्रचामरादि। दर्श –दर्शो दुमम्पर्क, तत्रैव वैदिके विधि अवलोकने च। आपीड –शेखरः विरोध, सर्षप, दत्तशिखा। दध हन्याम्। आचाम ओदनमण्ड। आतङ्क रोगाभयशङ्का, दुःखवियोगतापे पुंनपुंसको वक्ष्यते। विवेक पृथग्भाव। सन्तान 'सन्तान सन्ततौ देववृक्षे चाऽपत्यगोत्रयोः'। पाव' 'पाव पुंसि दन्तो रोगे मणौ शिक्ष्ये मुदन्तरे'। भ्रम 'पुन्छम्, तथा 'भ्रमोऽम्बुनिर्गमे भ्रान्तौ कुन्दाख्यशिल्पियन्त्रके'। मूर्च्छायां तु स्त्रीपुंसलिङ्गो वक्ष्यते। विभ्रमः—भ्रान्ति हावश्च। सम्भ्रम 'सम्भ्रम पुंसि संवेगे साध्वसादरयोरपि'। प्रक्रम सामर्थ्यम्। विक्रम –शक्ति, क्रीय च। अनुक्रम परिपाटि। उपक्रम'—चिकित्सा आरम्भः उपधा च। निष्क्रम 'निर्गमे दुष्कुले पुंसि बुद्धिसम्पदि निष्क्रमः'। पराक्रमः शौर्यं उद्योगश्च। अभिक्रम रिपुयात्रा। क्रम 'क्रम शक्तौ परीपाट्या क्रमभरणकल्पयो'। पीठ मण्डलम्। निवास गृहम्। विसर्ग त्याग। गोसर्ग प्रभातम्। निसर्ग –स्वभावः, सृष्टिश्च। सर्गः 'सर्ग स्वभावनिर्मोक्षनिश्चयाऽध्यायसृष्टिषु', मोहोत्साहयोरपि। अपवर्ग 'क्रियावसानसाफल्येऽपवर्गस्त्यागमोक्षयो'। प्रतिसर्ग सृष्टि। भङ्ग –ऊर्मि, अभिभवश्च। आक्रन्द 'आक्रन्द क्रन्दने ह्वाने मित्रेदारुणयुद्धयो'। आकर्ष 'आकर्ष शारिफलके पाशके द्यूत

२० शब्दविन्यासेष्विति नेपथ्यविन्यासे विवादे न्यासमात्रे च इति। मूर्च्छने इति मोहे [ भोग इति उपभोग ]। वेतन इति कर्ममूल्य। तरोरङ्गे इति शाखाया स्कन्धादध प्रदेशे। विलतोद्गमे इति लताङ्कुरे। कैञ्च इति सजलप्रदेश। नितम्बे इति कटीकट्याम्। संमुच्छ्रय इति ऊर्ध्वमानम्। निषादीति गजारोह। उत्सेध इति उच्चत्वम्। उपधानमिति उच्छीपक, लोके उसीसओ। परिच्छद इति परिवार। दर्शो दुमम्पर्क इति अमावस्या। तत्रैव वैदिके विधिरिति अमावास्यामेव कृष्णपक्षा यवार। शेखर इति पुष्परचितमुकुटम्। सर्षप इति सद्राम। ओदनमण्ड इति भक्तधावनम्। सन्ततौ इति प्रवाहे यथा 'असौ 'सरिद् नदीनां सन्तानस्तानव याति'। अपत्यमिति पुत्रपौत्रा। गोत्रमिति वंश। शिक्ष्ये इति रज्जुपक्षे, लोके सीकओ। अम्बुनिर्गमे इति जलनिर्गमे। भ्रान्तौ इति भ्रमक्षि मद मूर्च्छायां च। कुन्दाख्यशिल्पियन्त्रक इति सिंघाडा शराग इति वा। संवेगे इति भयादिभिश्चित्त व्याक्षेपात् त्वरणम्, सत्र। शक्तिरिति पादविक्षेप। उपधेति धर्मादिना सचिवपरीक्षा। उद्योग इति उद्यम॥ कल्प इति न्यायः शास्त्र वा। न्याये यथा, 'कोऽय क्रमो यत्परिहृत्य दक्षतां प्रयाति वेक्ष्य मनुचर भवान्?'। शास्त्रे यथा 'क्रममधीते'॥ मण्डलमिति कुष्ठभेद। निर्मोक्ष इति त्याग। अध्याय इति अधीयते इत्यध्याय, महाकाव्यादौ विश्रान्तिस्थानम्, यथा 'सर्गबन्धो महाकाव्यम्' इति। क्रन्दने ह्वाने इति रोदनशब्दसयुक्ते आकारणे। मित्रमिति सखा। शारिफलकमिति चतुरङ्गफलकादि [ चउरगउ बाजवट चउपट इत्यादि ]। पाशके इति देवने, लोके पासा, अन्ये तु पाशकशब्देन उद्गाणा दारमय रज्जुबन्धनार्थं पादकटकमुच्यन्ते, लोके दुचकी इत्याहु। द्यूते इति लोके जूअओ।

इन्द्रिये । [1]आकर्षणेऽपि चाकर्ष [2]'कोदण्डाभ्यासवस्तुनि' ॥ अनुकर्ष –[3]रथाध काष्ठम्, अनुकर्षणं च । प्रतीहार –द्वारं द्वारपालश्च । सम्पराय –व्यापत्ति[4] आयतिश्च, युद्धे तु पुन्नपुंसको वक्ष्यते । प्रादेश –प्रदेशिन्यङ्गुल्या सहाङ्गुष्ठान्तरम् । अनुबन्ध 'अनुबन्धः [5]प्रकृत्यादेर्दोषोत्पादे [6]विनश्वरे । [7]मुख्यानुयायिनि शिशौ [8]प्रकृतस्यानुवर्त्तने' ॥ [9]अनुबन्धी च हिक्कायां तृष्णायामपि कथ्यते स्त्रिया बाहुलकात् ॥ सम्बाध –भग, सङ्कुले त्वाश्रय-लिङ्ग । अभिमान –दर्प ज्ञानं प्रार्थना हिंसा च । आश्रव स्थानम् । भाव 'भाव' [10]सत्तास्वभावाभिप्राय[11]चेष्टात्मजन्मसु । [12]क्रियालीलापदार्थेषु [13]विभूति[14]र्बुधजन्तुषु' ॥ अनुभाव 'अनुभाव प्रभावे स्याग्निश्चये [15]भावसूचने' । नाश –क्षय तिरोधानं च । प्रैष 'प्रेषणे मर्दने प्रैष' । दोष –दुष्टि, वातादिश्च, रात्रौ तु तन्नामत्वात्स्त्रीत्वम् । भाग अंश । प्राकार साल । विहार –क्रीडा चेष्टा च, भिक्षुस्थानप्रतिवर्ययोस्तु पुन्नपुंसको वक्ष्यते । रय वेग । विवध –[16]पर्याहार भार मार्गश्च, दीर्घत्वे वीवध । नीशार –[17]हिमानिल-निवारण पट । निष्पाव –'निष्पाव [18]शूर्पपवने [19]राजमाषे [20]कडङ्गरे । [21]पवने शिबिकाया च [22] निष्पावो [23]निर्विकल्पके' ॥ सराव शब्द । उद्यार उद्यमनम्, नपुंसकोऽप्ययमिति शाकटायन । उद्राव पलायनम् । उद्ग्राह [24]उद्ग्रहणम् । [25]निर्ग्राहस्ते वृषल भूयात् । [26]पांत्र-प्रमाह । सङ्ग्राहो मल्लस्य, मुष्टिरित्यर्थः । संयाव सम्मिश्रणम् । सन्द्राव सन्द्रावश्च–पलायनम् । नाय नीति । उन्नाय [27]उन्नयनम् । अवनाय [28]अवनयनम् । परिणाय –शारीणां सर्वतो नयनमित्यर्थः । परिभाव अवज्ञा । संस्ताव –देश, यज्ञे यत्र समेत्य स्तुवन्ति । प्रस्राव प्रस्रवणम् । प्रद्राव पलायनम् । प्रस्तार –छन्दसां प्रस्तरणम् । विस्तार –पटस्य । निगाल –अश्वगलोद्देश –[29]यत्र देयमणिरावर्त्त । उत्कार –धान्यस्य राशिरित्यर्थः । नीवारा व्रीहय । एषोऽत्र न्याय –यथाप्राप्तकरणम् । पर्याय –परिपाटि, अवसरश्च । तय राजविशाय

---

[1]आकर्षणे इति आकृष्टौ । [2]कोदण्डाभ्यासवस्तुनीति धानुष्काणां बाहुदृढीकरणार्थं बालुकादिभृतवस्तुपात्रविशेष तत्र । [3]रथाध काष्ठमिति गल्मनकम् । [4]आयतिरिति उत्तरकाल । [5]प्रकृत्यादेर्दोषोत्पादे इति प्रकृतिप्रत्ययागमादेशानां च कार्याधमासज्यते ॥ [6]विनश्वर उच्चारितप्रध्वंसी सो ह्यनुबन्ध इति, यदमर 'दोषोत्पादेऽनुबन्धः स्यात् प्रकृत्यादिविनश्वरे' इति ॥ दोषोत्पादे इति दोषोत्पादने । [7]मुख्यानुयायिनीति प्रधानानुगामिनि । [8]प्रकृतस्यानुवर्त्तने इति विहितस्य अनुवर्त्तने, यथा 'सानुबन्धा कथं न स्युः सम्पदो मे निरापद' इति । [9]अनुबन्धीति इह गौरादित्वात् (२।४।१९) ङीप्रत्यय । [10]सत्तेति विद्यमानता । [11]चेष्टेति कायकृतो व्यापार । [12]क्रियेति धात्वर्थ , यथा 'धात्वर्थ केवल शुद्धो भाव इत्यभिधीयते' । [13]विभूतिरिति ऐश्वर्यम् । [14]बुध इति नाट्योक्त्या विद्वान्, यदाह 'भावो विद्वान्' नटपण्डित इत्यर्थ । [15]भावसूचने इति रत्यादि सूचने कटाक्षादौ । [16]पर्याहार इति तृणजलाद्यादीनामन्यत आनयनम् । [17]हिमानिलनिवारण पट इति लयाइघामसुखशीतनाशक वस्त्रम् । [18]शूर्पपवने इति शूर्पेण छाण इति प्रसिद्धेन नीरजीकरणे । [19]राजमाषे इति वल्लनाम्नि धान्ये । [20]कडङ्गरे इति तुसे । [21]पवने इति सामान्यनिधूलीकरणे । [22]शिबिकायामिति मुद्गादि-फलिकायाम् । [23]निर्विकल्पके इति कृतनिश्चये । [24]उद्ग्रहणमिति वणिजां तार्किकाणां चोद्ग्राहणिका, चन्द्र-स्योद्ग्रहण च । [25]निर्ग्राह इति शाप । [26]पांत्रप्रमाह इति पात्रलिप्सा 'प्राक्लिप्सायाम्' (५।३।५७) इति घञ् ।

पर्यायेण राजनि शयनमित्यर्थ । पुष्पावचाय —आसन्नपुष्पोच्चयनम् । आनाय '[2]चिति । काय 'काय स्वभावलक्ष्ये च मङ्के मूर्तौ [3]कं[4]दैवते', [5]मनुष्यतीर्थेऽपि क्लीवम । निकाय' 'निकायो निलये लक्ष्ये सहताना समुच्चये । [6]एकार्थभाजि निवहे परमात्मनि चेष्यते' ॥ '[7]एकतण्डुल-निश्राय '। उन्माथ कूटयन्त्रम । ( लोचूइ् ) उल्लोच [8]वितानम् । सरफोट सरफेट सपेटश्च-युद्धम् । आनर्त —समर नृत्तस्थानम्, देशविशेष, जल च । प्रासाद —देवतानृपगृहम्, मण्डपश्च । कासमर्द [9]वेपवारभेद । अवतार नद्यादितीर्थम् । न्याय [10]पञ्चावयववाक्यादि । आधार 'आधार [11]आलवालेऽधिकरणे[12]ऽम्बुविधारणे । उदङ्क [13]धृताद्युद्धानम् । आनाय जालम् । आराम स्नातविशेष इत्यादि । द कि'—न्यासन्नकाद्धातोर्य कि प्रत्ययो विहित-स्तदन्त नाम पुल्लिङ्ग भवेत् । आदि प्राथम्यम । व्याधि रोग । आधि '[14]बन्धक व्यसन चित्तपीडाऽधिष्ठानमाधय ' । उपाधि —[15]धर्मचिन्ता [16]कैतवम् कुटुम्बव्यापृत विशेषण च । उपधि कपटम् । उपनिधि [16]न्यास । प्रतिनिधि प्रतिबिम्बम् । सन्धि 'सन्धि पुमान्सु-रङ्गाया [17]भेदे [18]संघट(ट्ट?)ने [19]अङ्गे'। परिधि —[20]परिवेष, [21]चक्रप्रान्त, [22]यज्ञतरुशाखा च । अवधि 'अवधिस्त्ववधाने स्यात्काले सीम्नि बिलेऽपि च' । प्रणिधि —प्रार्थनम [23]अवधानम् [24]चरश्च । समाधि —[25]प्रतिसमाधानम् नियम [26]मौनम चित्तैकाग्र्य च । विधि —काल [27]कल्प ब्रह्मा, [28]विधिवाक्य विधानम् दैव प्रकारश्च । वालधि पुच्छम् । शब्दधि कर्ण । जलधि समुद्र । अन्तर्धि [29]व्यवधा । प्रचेस्तु [30]नेमी स्त्रीपुसयम, रोगविशेषे च क्लीवम्, शिरोधेस्तु

[1]उच्चयनमिति ऊर्ध्व नयनम् । [2]अवनयनमिति अधोनयनम् । मग्रेति मध्यगल्लेदेशे । पर्यायेणेति अनुक्रमेण । [2]चितिरिति मृतस्य दाहाय शय्यारूपाणि दारूणि । [3]कंदैवते इति को ब्रह्मा दैवतमस्य तस्मिन् कंदैवते । [5]मनुष्यतीर्थे इति कनिष्ठयोर्मूले यत्त मनुष्यतीर्थ तत्र, यदाह 'मूलेऽङ्गुष्ठस्य स्याद्ब्राह्म तीर्थं काय कनिष्ठयो' इति । [6]एकार्थभाजि निवहे इति एकप्रयोजनाय मिलिते सङ्घे । [7]एकतण्डुलनिश्राय इति तण्डुलानां निश्रा यत्तण्डुलनिश्राय, तण्डुलानां कश्चिन्मानविशेष इत्यर्थ । एव एकतण्डुलाना अवक्षायो मानविशेषस्तण्डुलावक्षाय इत्यपि । [8]वितानमिति चन्द्रोदय लोके चद्रुआ इति प्रसिद्धि । [9]वेपवारभेद इति कासन्दओ इति प्रसिद्धि यदाह कासमर्दोऽरिमर्दश्च कासारि कर्कशस्तथा । कालकमक इत्युक्त स च स्यात्कासमर्दक इति । [10]पञ्चावयववाक्यादिरिति प्रतिज्ञाहेतुदृष्टान्तोपनयननिगमनलक्षण । [11]आलवाले इति थाणओ । [12]अम्बुविधारणे इति अम्भसा बन्धे । [13]धृताद्युद्धानमिति टीपरओ टीपरी इत्यादि प्रसिद्धि 卐 इति घञ्प्रत्ययान्तादुर्गशब्द पदाया । 卐 [14]बन्धक इति यद्धमर्णेन उत्तमर्णस्य भूम्यादि आयत्त क्रियते, अन्गणओ इति प्रसिद्धि । [14]अधिष्ठानमिति आधारः । [15]धर्मचिन्तेति धर्मध्यानम्, यल्लभ्यम् 'विनोपाधि शास्त्र तणतुषबुसप्रख्यमधुना' इति । [16]न्यास इति मोसणि इति प्रसिद्धि । [17]भेदे इति विश्लेषे । [18]संघट(ट्ट?)ने इति श्लेषे । सधानसहिता गुणविशेषा अपि सद्घटनभेदा एव, तत्र सन्धाने उदाहरण यथा 'सख्य कि करवाणि यान्ति शतशो यत्कञ्चुके सन्धय' इति । सहितागुणविशेषयोर्यथा 'मा स्म सखि विजानन्तु मा स्म जानन्तु विग्रहम् । आख्यान यदि शृण्वन्ति भूपास्तेनैव पण्डिता ' इति । [19]अङ्गे इति योनौ । [20]परिवेष इति सूर्यमण्डलम् । [21]चक्रप्रान्त इति धार । [22]यज्ञतरुशाखेति यज्ञयोग्यवृक्षशाखा । [23]अवधानमिति समाधि । [24]चर इति हेरिक लोके हेरू । [25]प्रतिसमाधानमिति उत्तरम् । [26]मौनमिति ध्यानवचनाभावादि । [27]कल्प इति विनियोगशास्त्रम्, यथा यथाविधिहुताग्नीनामिति । [28]विधिवाक्यमिति विधानवाक्यम् । [29]व्यवधा इति लोके ढाकणओ । [30]नेमौ इति

स्त्रीत्वम्, इषुधेस्तु स्त्रीपुंसत्वं वक्ष्यते । इत्यादि ॥ भावे खः—भावेऽर्थे यः खो विहितस्तदन्तं नाम पुल्लिङ्गं भवेत् । आशितस्य भवनं आशितम्भवो वर्त्तते, तृप्तिरित्यर्थः । भाव इति किम् ? आशितो भवत्यनया आशितभवा पञ्चपूली ॥ अकर्तरि च कः स्यात्—भावे कर्तृवर्जिते च कारके यः कः प्रत्ययस्तदन्तं नाम पुल्लिङ्गं भवेत् । आखूनामुत्थानम् आखूत्थः । विहन्यतेऽनेनास्मिन्वा विघ्नः—अन्तराय इत्यादि । अकर्तरि चेति किम् ? जानातीति ज्ञा—परिषत् ॥ आर्या ॥ १ ॥

हस्तस्तनौष्ठनखदन्तकपोलगुल्फ—केशान्धुगुच्छदिनसर्तुपतद्ग्रहाणाम् ।
निर्यासनाकरसकण्ठकुठारकोष्ठ—हेमरविपर्वविषनोलरथाशनीनाम् ॥ २ ॥
श्वेतद्रुगात्मधुरजासिकफाभ्रपङ्क—मन्थत्विषा जलधिशेवधिदेहभाजाम् ।
मानद्रुमाद्रिविषयाशुगशोणमास—धान्याध्वराग्निमरुतां समिदां तु नाम ॥ ३ ॥

हस्तादीनां नाम जलध्यादीनां तु समिदां सप्रभेदानामपि पुल्लिङ्गं भवति । हस्तनाम. पञ्चशाखः करः, शयः—अयं शय्यायामपि यान्तत्वात्पुंसि । भुजाबाह्वोर्दलं पालनं शमः इत्यादि ॥ हस्तशब्दस्य तु पुन्नपुंसकत्वं वक्ष्यते ॥ स्तननाम. स्तनः पयोधरः कुचः वक्षोजः इत्यादि ॥ ओष्ठनाम. ओष्ठः अधरः दन्तच्छदः इत्यादि ॥ नखनाम. करजः कररुहः मदनाङ्कुशः पुनर्भवः इत्यादि । नखं पुन्नपुंसकं, नखरस्तु त्रिलिङ्गः ॥ दन्तनाम. दन्तः, दशनः अयं रुद्रटेन क्लीबेऽपि निबद्धः 'दशनानि च कुन्दकलिकाः स्युः' इति, तच्चिन्त्यम् । द्विजः रदः मुखालङ्करणं रदनः इत्यादि ॥ कपोलनाम. कपोलः गण्डः गल्लः इत्यादि ॥ गुल्फनाम. गुल्फः गुडः प्रपदः आप्रपदः खुरकः निस्तोदः, पादशीर्षः इत्यादि । हस्तिगुल्फस्तु मौहः । घुटिकघुण्टकघुटगुल्फास्तु स्त्रीपुंसलिङ्गा वक्ष्यन्ते ॥ केशनाम. केशः शिरोजः अङ्गजः शिरोरुहः चिकुरः चिहुरः, कचः—अयं बाहुल्कात् शुष्कव्रणेऽपि पुंसि, गुरौ पुत्रे तु देहिनामत्वात्सिद्धम्, ईभ्यां तु योनिमन्नामत्वात्स्त्रीत्वम् । अस्रः वेल्लितास्र इत्यादि, वृजिनश्च, यद्गौडः—'वृजिनं कल्मषे क्लीबं केशे ना कुटिले त्रिषु' । कुन्तलश्च, यद्गौडः—'कुन्तलाः स्युर्जनपदो हलो वालश्च कुन्तलः', हले बाहुलकात्पुंसि । वालः पुन्नपुंसको वक्ष्यते, तद्विशेषोऽपि केशः—कुरलः अलकम् । अन्धुः कूपस्तन्नाम अन्धुः प्रहिः प्रहिः इत्यादि । कूपस्तु स्त्रीपुंसलिङ्गः ॥ गुच्छनाम गुच्छः गुत्सः गुलुच्छः गुच्छकः गुलुच्छः इत्यादि । स्तवकस्तु पुन्नपुंसको वक्ष्यते ॥ दिननाम. घस्रः सूर्याङ्कः । दण्डयाम —अयमगस्तिकीनाशयोरपि, इत्यादि । दिनदिवसवासराणां पुन्नपुंसकत्वम्, दिवाह्नोस्तु नपुंसकत्वं वक्ष्यते ॥ स इति समासस्याख्या पूर्वेषाम्, सनाम बहुव्रीहि

---

चमूधारायाम् । >ﾐ इति किप्रत्ययान्तशब्ददुर्गपदार्था । <ﾐ आशितस्येति सूत्रस्य । आखूत्थ इत्यत्र 'स्थादिभ्यः कः' (५।३।८२) इति कः ॥ १ ॥ गुल्फ इति लोके गिरिया सघाम-प्रपद । आप्रपद इति पादाग्रमितीहान्ये भिन्दन्ति, स भेदोऽस्माचार्येणाश्रित इति । गुरौ पुत्रे इति बृहस्पतिपुत्रे । ईभ्यामिति हस्तिन्याम्–अजादिपाठात्कचा इति भवति । अलक इति ललाटस्योपरि कुटिलकेश, यदाह 'स तु भाले

अव्ययीभाव द्वन्द्व इत्यादि ॥ ऋतुनाम. हेमन्त श्रीष्म तपात्यय इत्यादि । वसन्त-शिशिरनिदाघा पुम्नपुंसका, शरत्प्रावृड्वर्षास्तु स्त्रीलिङ्गा वक्ष्यन्ते । ऋतुरुदन्तत्वादेव पुंसि ॥ पतद्ग्रहनाम. आचेल्काधारस्तम्भ पतद्ग्रह पादग्राह प्रतिग्रह प्रतिग्राह इत्यादि ॥ निर्यासनाम. गुग्गुलु श्रीवेष्ट श्रीवेष्ट सर्जरस कुन्दुरु घनसारसिताभ्रौ इत्यादि । उपत्र । यद्गौड —'स्त्रिया वाणसुताराल्योरुपा स्याद्गुग्गुलौ पुमान्', वामिति स्याश्रयलिङ्ग । उलूखल नपुंसकम्, निर्यासस्तु पुम्नपुंसको वक्ष्यते, कुन्मोदुग्धन्ते तु वाहुल्यकात्पुंसके ॥ नाकनाम. स्वर्ग त्रिदिवालय ऊर्ध्वलोक देवलोक इत्यादि । स्वःशब्दोऽव्ययम्, नाकत्रिदिवयो पुम्नपुंसकत्वम्, दिवत्रिविष्टपयोर्नपुंसकत्वम्, द्यौर्दिवोश्च स्त्रीत्वं वक्ष्यते ॥ रसा. शृङ्गाराद्यवस्थाम 'शृङ्गारवीरकरुणाद्भुतहास्यभयानका । बीभत्सरौद्रौ च रसा शान्तश्च' । वत्सलस्तु पुत्रादिस्नेहात्मा रतिभेद एव । एषु शृङ्गार पुम्नपुंसको वक्ष्यते । गौडस्तु—'शृङ्गारवीरौ बीभत्स रौद्र हास्य भयानकम् । करुणा चाद्भुत शान्त वात्सल्य च रसा दश' इति शृङ्गारवीरावेव पुंस्याह ॥ कण्ठनाम. कण्ठ —शब्दाश्रये संनिधाने ध्वनौ च धमन्तत्वात्पुंसि । अवटु गल नाल श्रोतस धमनीधर इत्यादि ॥ कुठारनाम परश्वध परश्वध परशु पर्शु स्वधिति छिदि भिदि इत्यादि । कुठारस्तु स्त्रीपुंलिङ्ग ॥ कोष्ठनाम कोष्ठ कुसूल वलत (?) इत्यादि । हैमनाम. 'किराततिक्तो हैमश्च काण्डतिक्त किरातक । भूनिम्बोऽनार्यतिक्तश्च नैरानो रामसेनक' इत्यादि ॥ अरिनाम. अरि द्विषन् प्रत्यर्थी रिपु अभिमाति अभियाति दस्यु पर परिपन्थक सपत्न असुहृत् दुर्हृत् विपक्ष दुर्भिद भ्रातृव्य जिगृहीलासि आततायी शत्रु शात्रव इत्यादि ॥ वर्षनाम वत्स वत्सर संवत्सर परिवत्सर समत्, दुर्गेस संवदित्यव्ययमपि । इद्वत्सर इडा-वत्सर शरत् इत्यादि, परवाणिश्च, यद्गौड —'परवाणि पुमान् धर्माध्यक्षवत्सरयोरपि' । वर्षहायना दास्तु पुनपुंसका, शरत्समे तु स्त्रीलिङ्गे ॥ विषनाम गर प्रदीपन भक्षगुव क्ष्वेड सौराष्ट्रिक शौल्किकेय दारद वत्सनाभ आदीपनरःउम मधुरक इत्यादि । विष-कालकूट-गरल-हलाहल-हालाहल-हालहल-रामोला पुम्नपुंसका वक्ष्यन्ते, मधुरस्य तु वाहुल्यकान्नपुंसकत्वम् ॥ बोल औषधिविशेषनाम बोल गन्धरसः प्राण पिण्ड गोपरस गोप रस इत्यादि । शशश्च यद्गौड —'बोले रोमे[13] पशौ शश । नैरान्तरे च' । रथनाम.

भ्रमरक, कुरलो भ्रमरालक' इति, लोके भमरओ भमरि इति वा प्रसिद्धिः । तपात्यय इति वर्षा ऋतु । आचेल्काधार इति चर्वितताम्बूलादिस्थानम् । श्रीवेष्ट इति श्रीवृष्ट । श्रीवृष्टश्रीवेष्टशब्दौ कनक-गुग्गुलनाम्नी इत्यन्ये भिन्दति, यदाह 'श्रीवेष्टो वृकधूपश्च क्षीरशीर्षो मल्लद्रुम । श्रीवासः पायसश्चान्यस्थान क्याहुस्तद्विदधि' इति । वत्सलस्तु पुत्रादिस्नेहात्मा रतिभेद एवेति— वत्सल इत्ययं शब्द पुत्रादिस्नेहरूपो रतिभेदो न तु रस इत्यर्थ' इति स्वमते । मदनद्रुमे इति मयणहलवृक्षे । संनिधाने इति समीपे । हैमनामेति लोके किराइतओ नाम । दुर्गस्येति दुर्गाचार्यस्य मते । धर्माध्यक्ष इति धार्मिक । शरत्समे इति वर्षवाचके शरत् समा इति शब्दौ । औषधिविशेष इति बीआबोल । [13]लोमे इति रोमवृक्षे । नैरान्तरे इति कामशास्त्रोक्तलक्षणे नरभेदे यथा 'शशो वृषोऽश्व इति लिङ्गतो

पताकी शताङ्ग , स्यन्दन –पुन्नपुंसकोऽयमिति गौडशेष , चकीलादि । रथस्तु स्त्रीपुंसलिङ्गो वक्ष्यते ॥ अशनिर्वज्रस्तन्नाम दम्भोलि॰ पविः शतधार शितिधार भिदु हीरक शम्ब स्वरुरित्यादि । अशनि स्त्रीपुंसलिङ्गो वज्रकुलिशौ तु पुन्नपुंसकौ वक्ष्येते, भिदुर बाहुलकान्नपुंसकम् ॥ २ ॥

श्वेतः कपर्दस्तन्नाम श्वेत कपर्द॰ वराट इत्यादि, सञ्ज्ञायां स्वार्थिके के श्वेतक वराटक कपर्दक॰ । ह्रस्वाल्पयो कपि श्वेतिका वराटिका कपर्दिका । वराटकशब्द एव स्त्रीपुंसलिङ्ग इति दुर्गः । कपर्दकोऽप्येवमिति बुद्धिसागर ॥ प्लव उडुप तन्नाम प्लव॰ कोल इत्यादि । भेलश्च, यदाह–'भेल. प्लवे भीलुके च निर्बुद्धिमुनिभेदयो॰' । उडुपस्तु पुन्नपुंसको वक्ष्यते ॥ आत्मनाम. आत्मा जीव पुद्गल क्षेत्रज्ञ –प्रधाने त्वस्याश्रयलिङ्गता । पुरुष चेतन विष्णु इन्द्र इत्यादि ॥ मुरजो मर्दलस्तन्नाम मुरज मर्दल मृदङ्ग मुरजभेदोऽपि मुरज अङ्की आलिङ्गी ऊर्ध्वक , आहुश्च–'हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वक । आलिङ्गश्चैव गोपुच्छो मध्यदक्षिणवामगा ' । नाट्ये चेते भेदा॰ (रूढा ) । असिनाम. असि निस्त्रिंश खड्ग मण्डलाग्र. धाराङ्ग कौक्षेयक तरवारि करवाल धाराधर करपाल निपत्र विशसन तीक्ष्णवर्त्मा तीक्ष्णमार्ग चन्द्रहास चन्द्रभास दुरासद श्रीगर्भ विजय धर्म्मपाल शस्त्र इत्यादि । ऋष्टिस्तु स्त्रीपुंसलिङ्गो वक्ष्यते ॥ कफनाम. कफ श्लेष्मा खट खेट प्रतिश्याय पीनस इत्यादि ॥ अभ्रं मेघस्तन्नाम मेघ अम्बुद मिहिर कन्धर पर्जन्य शातकुम्भ नभ्राट् जीमूत घन इत्यादि । विर्वर्पिपुर्घनाघन , ईशनमत्तगजवाचित्वे त्वभिधेयवल्लिङ्गम् , अभ्रस्य तु नपुंसकत्वं वक्ष्यते ॥ पङ्कनाम. कर्दम शाद निषद्वर चिक्खिल्ल खञ्जन खल्न भालेय इचिकिल इत्यादि, पङ्कजम्बालौ तु पुन्नपुंसकौ वक्ष्येते ॥ मन्थनाम. मन्थ मन्थान मन्था वैशाख खजक क्षुब्ध इत्यादि ॥ रश्मिनाम. अंशु –अयं रवावपि यदाह–'अंशुर्लेशे रवौ रश्मौ' । उस्र , गवि तु देहयोनिमज्ञामदत्वात्स्त्रीपुंसत्वे । गभस्ति उपधृति शिखी भानु अभीशु । अभीषु –मूर्धन्योपान्त्य , यद्गौड 'अभीषु प्रग्रहदीधिती ।' हरिश्च, यदाह–'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु । सिंहाश्वकपिभेकाहिशुकलोकान्तरेष्वपि ॥ हरिर्वाच्यवदाख्यातो हरित्कपिलवर्णयो ' । मयूख ,–अयं शोभाज्वालयोरपि बाहुलकात्पुंसि । रश्मि –अयं रश्मौ स्त्रियां वक्ष्यते । प्रग्रह इत्यादि ॥ त्विड्रुचिद्युतिदीधितय स्त्रीलिङ्गा ॥ रोचि –शोचिषी तु द्विस्वरसन्त-

नायकभेदा ' इति ॥ २ ॥ कपर्दकोऽप्येवमिति कपर्दकशब्दोऽपि स्त्रीपुंसलिङ्ग इत्यर्थ । उडुपमिति लोके प्रायशो । मुनिभेद इति विनिरसाशाकचा । विर्वर्पिपुर्घनाघन इति यथोदीर्णो मेघ स घनाघन उच्यते इत्यर्थ । ईशनमत्तगजवाचित्वे त्वभिधेयवल्लिङ्गमिति–घनाघनशब्द इन्द्रमत्तगजे वाच्ये देहिनाम त्वात् त्रिलिङ्ग इत्यर्थ । मन्थनामेति मन्थानकनाम । रश्मिनामेति किरणनाम । रश्मौ इति किरणे । गवीति धेनौ । प्रग्रहदीधिती इति प्रग्रह अश्वादिबन्धनरज्जु , लोके अश्वानां वाधि वृषभादीनां रासि इति प्रसिद्धि । दीधितिरिति किरण । ज्वालेति अग्निशलका । रश्मौ इति लोके राड्ढ तत्र ।

त्वान्नपुंसके, गोमरीचिवृक्षभयस्तु स्त्रीपुंसलिङ्गा वक्ष्यन्ते ॥ **जलधिनाम.** जलधि अर्णव समुद्र । महाकच्छ –पश्चिमाशापतौ तु देहिनामत्वात्सिद्धम् । सागर पारावार कुवलय सरस्वान् । अकूपार –अयं कूर्मराजेऽपि । इत्यादि ॥ तत्प्रभेदनाम–क्षीरोद लवणोद घृतोद सुरोद इक्षूद स्वादूद दध्युद इत्यादि ॥ **शेवधिनाम.** शेवधि निधि । तत्प्रभेदनाम–'महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च चर्चाश्च निधयो नव' ॥ पद्मस्य स्थिरभविन्दो नपुंसकत्वम्, अब्जसङ्खयोश्च पुंनपुंसकत्वम्, श्रिया तन्नामत्वाद्देवताया तु योनिमन्नामत्वात्स्त्रीत्वं वक्ष्यते, व्यूहे मान्तत्वान्नागविशेषे तु देहिनामत्वादेव पुंस्त्वम् ॥ **देहभाजा नाम.** देही प्राणी शरीरी जन्मी । जन्मन्शब्दोऽकारान्तोऽप्यस्तीति 'ऽतोऽनेकस्वरात्'(७।२।६)इतीन् । नन्तात्तु व्रीह्यादित्वात्(७।२।५)। जन्यु । जन्तो पुंनपुंसकत्वं वक्ष्यते ॥ तत्प्रभेदनाम–ब्राह्मण क्षत्रिय वैश्य शूद्र वणिक् आर्य म्लेच्छ अनूचानगणी, यद्गौड –'अनूचाने गणि पुमान्' । कवि कृष्टिपण्डितौ पति अतिथ्यातिथ्यौ–अतिथियोग्ये त्वातिथ्य त्रिलिङ्गम् निषादी सारथि ऋषि सुहृत् दूत धूर्त छात्र पुत्र पिता भ्राता जामाता नैप्ता घण्ट शैण्ट देवदत्त जिनदत्त इत्यादि ॥ तथा सुर अमृतान्धा देव त्रिदशा इत्यादि ॥ तत्प्रभेदा –इन्द्र चन्द्र आदित्य पूषा बुध शुक्र बृहस्पति शनैश्चर स्रष्टा विष्णु । रैवतमहेश्वरौ । बलदेव विनायक विशाख । स्मरेश्वरौ । गन्धर्व –अयं मरणजन्मनोरन्तराभवदेहे शरभे तुरगेऽपि । यम कीनाश, अयं क्षुद्रकर्षकयोराश्रयलिङ्ग । जीवितेश, अयं प्रियेऽपि । समवर्ती इत्यादि ॥ तथा असुर दैत्य दानव दैतेय पातालनिलय इत्यादि ॥ तत्प्रभेदा –बलि त्रिपुर पाक वृत्र पुलोमा अहि बल नमुचि अन्धक मय वाय (?) बाण गज हिरण्यकशिपुरित्यादि ॥ तथा मकर पाठीन कुम्भीर मत्स्य शश सूकर शरभ शृगाल व्याल सप्ति कार

तत्प्रभेदनामेति समुद्रविशेषनाम । शेवधिनामेति निधाननाम । तत्प्रभेदनामेति निधानभेदनाम । चर्चा इत्यय शब्दो निधानभेदवाची सन्त । इभबिन्दौ इति हस्तिना यौवने रक्तबिन्दवस्तान । व्यूहे इति चक्रादिरूपेण सैन्यविन्यासे । नागविशेषे इति महापद्मनाग । तत्प्रभेदनामेति प्राणिविशेषनाम । अनूचानगणा इति सागवेदवेदकवाचकौ दौव । नैनास्तु साङ्गसिद्धान्तवेदकवाचकौ इत्याहु । अतिथ्यातिथ्यौ इति अतिथिशब्दातिथ्यशब्दौ प्राघुणकवाचकौ । नैप्ता इति पौत्र लोके पोतरा । घण्ड इति वृषमिति लोके सूनतिप्रतीति प्रसिद्धि । शैण्ड इति नपुंसक । तत्प्रभेदा इति देवभेदा । रैवतमहेश्वरौ इति रैवतशब्दो महेश्वरशब्दश्च महादेववाचकौ, यदाह रैवत स्यादुज्जयन्ते सुवर्णाली पिनाकिनि' इति । विनायक इति गणेश । विशाख इति स्वामिकार्तिकेय । स्मरेश्वराविति स्मरशब्देन ईश्वरशब्देन च काम उच्यते यदाह 'ईश्वर स्वामिनि शिवे । मन्मथेऽपीति' । गन्धर्व इति नभश्चर । अयं मरणजन्मनोरन्तराभवदेहे इति अयं गन्धर्वशब्द मरणजन्मनोर्मध्ये यो देहो यातनाशरीरम्, तत्र । शरभे इति अष्टापदनाम्नि । अयं क्षुद्रकर्षकयोरिति–अयं कीनाशशब्द क्षुद्रे कर्षके च वर्तते । क्षुद्रशब्देन इह कृपण लुब्ध कृतघ्नो वा उच्यते कृपणे यथा 'कीनाशमद्धन क्षुद्र' लुब्धे कृतघ्ने च यथा 'लुब्ध कीनाश स्यात्कीनाशोऽप्युच्यते कृतघ्नश्च । योऽश्नाति चाममांस स कीनाशो यमश्चैव' । कर्षक शब्देनात्र हालिक इति । अयं प्रियेऽपीति अयं जीवितेशशब्द प्रिये भर्तर्यपि ज्ञेय । तत्प्रभेदा इति असुरभेदा । व्याल इति दुष्टगज चित्रकादि, सिंहोऽप्युच्यते । सप्तिरिति घोटक ।

बक कङ्क मयूर पारावत सर्पविपक्षौ मत्कुण इत्यादि ॥ मानविशेषनाम. तूल कुडव प्रसृत इत्यादि ॥ द्रुमनाम. द्रुम —अयं पारिजातयक्षेश्वरयोरपि । अनोकह वृक्ष उद्भिज्ज । विष्टर तरु विटपी अङ्घ्रिप अङ्घ्रिप वनस्पति नग अग । तत्प्रभेदनाम—ताल तमाल हिन्ताल सरल सर्ज चूतमाकन्दौ । अङ्कोठ कुठ—फलेऽप्यनयो पुस्त्वमिलेवे । अर्जुन पियाल वञ्जुल धव लकुच लवङ्ग इत्यादि ॥ मन्दारान्यो त्वग्वृक्षा । वनस्पति अपुष्पफलवान् अवकेशी अफल वानस्पत्य पुष्पफलवान् । मुमूर्षुभिरधोमुखा हैमा ये दृश्यन्ते विवशारया ॥ शिंशपापाटलादीना तु शिंशपादिरन्त्योऽस्त्वम् ॥ अद्रिनाम. अद्रि, अयं द्रुमार्कयोरपि । गिरि अहार्य जीमूत बलाहक धर । अवि —अयं मेषाऽर्कयो-र्नामत्वादेव पुंसि । अग नग पर्वत इत्यादि ॥ तत्प्रभेदनाम रैवत त्रिकूट अस्त उदय मेरु हिमवान् महाहिमवान निषध नील रुक्मी शिखरी इत्यादि ॥ विषय इन्द्रियमाह्यस्तनाम गन्ध, घ्राणग्राह्योऽर्थ । तद्भेदेऽपि—परिमल, अयं विमर्देऽपि, यद्गौड —'स्याद्विमर्दे परिमलो गन्धे जनमनोहरे । रतोपमर्दविकसद्देहरागादिसौरभे' ॥ सुरभि पूति ॥ स्पर्शस्त्वग्माह्य, तद्भेदोऽपि—कठिन मृदु शीत उष्ण गुरु लघु स्निग्ध रूक्ष ॥ रस पुन्नपुंसक, तद्भेदस्तु—मधुर लवण कटु तिक्त अम्ल । अमेरन्येर्वा रूपमित्यम्लोऽपि । तुवरकषायौ पुन्नपुंसकौ ॥ वर्ण पुन्नपुंसको रूप पुन्नपुंसक वक्ष्यते, तद्भेदस्तु—श्वेत पीत शुक्ल सित धवल वलक्ष पाण्डर पाण्डुर पाण्डु रक्त अर्जुन कृष्ण असित ध्याम धूमल धूम्र लोहित श्याम श्यामल मेचक शितिकण्ठाभ रक्त शोण पद्मारुण पाटल लोहित पीत पिङ्ग पिशङ्ग रोचनार्जुन पिञ्जर पिङ्गल कपिश कपिल कद्रु कडार हरि, नील पुन्नपुंसको वक्ष्यते ॥ हरित हरित् चित्र कर्बुर किर्मीर कल्माष शबल एत इत्यादि । तद्वति त्वाश्रयलिङ्गतैव ॥ शब्द

सर्पविपक्षौ इति विपक्षशब्देनापि सर्प उच्यते, तेन द्विवचन लिङ्गैक्यज्ञापनार्थम् । मत्कुण इति लोके माकण । तूल इति पीतय मानम्, उ-मानमिति दुर्गे । कुडव इति प्रसृतद्वयम् । अयं पारिजातयक्षेश्वरयोरिति–द्रुमशब्द पारिजाते धनदे च वर्तते, यदाह 'द्रुमस्तरौ पारिजाते द्रुम किंपुरुषेश्वरे' । चूतमाकन्दाविति आम्रनाम्नी । अंकोठ इति लोके आकुल यदाह 'अंकोठोऽकुल्ल कोरेची'त्यादि । कुठ इति लोके खोपलोठ । फलेऽप्यनयोरिति अंकोठकुठवृक्षयो फले । पियाल इति राजादन चारोली इति प्रसिद्धि । लकुच इति लोके वडहर इति प्रसिद्धि, यदाह 'लकुचे लिकुचो ग्रन्थिमत्फल इति । अपुष्पफलवानिति न विद्यन्ते पुष्पाणि यस्यासौ अपुष्प पुष्परहित, फलानि विद्यन्ते यस्यासौ फलवान् फलयुक्त, तत कर्मधारये अपुष्पफलवान् वनस्पतिरुच्यते । अफल इति फलरहित अवकेशीत्युच्यते । पुष्पफलवानिति पुष्पाण्येव फलानि विद्यते यस्यासौ पुष्पफलवान् वानस्पत्य इत्युच्यते । मुमूर्षुभिरधोमुखा हैमा सुवर्णवर्णा ये दृश्यन्ते विलोक्यन्ते ते विवशारया वृक्षा भण्यन्ते । अयं द्रुमार्कयोरपीति–अद्रिशब्दो वृक्ष-सूर्ययोरर्थे प्रवर्त्तते, यदाह 'अद्रिस्तु पर्वते सूर्ये शाखिनि चे'ति । अयं मेषाऽर्कयोरिति–अविशब्द मेषे सूर्ये च । विमर्दे इति मर्दने । गन्धे जनमनोहरे इति जनानां मनो हरतीति जनमनोहरस्तस्मिन् ईदृशे गन्धे इत्यर्थ । रतोपमर्दविकसद्देहरागादिसौरभे इति रते उपमर्द रतोपमर्दस्तेन यो विकसद्देहरागादिस्तस्य सौरभे सौगन्ध्ये । देहरागादीति उपलक्षणमिद तेन अन्यदपि यत् देहादौ घृष्ट सत् आघ्राति तदपि

श्रोत्रमाह्यार्थ । शब्द स्वर ध्वनि निर्ह्राद नाद रव घोष । तद्भेदोऽपि—तुमुल कल कलकल गम्भीर मर्मर निस्वन उदात्त अनुदात्त स्वरित प्लुत षड्ज ऋषभ गान्धार मध्यम पञ्चम धैवत निषादः इत्यादि ॥ शब्दशब्दौ पुन्नपुंसकौ ॥ देशोऽपि विषय—पञ्चाला मगधा कलिङ्गा चेद्य कारूष काश्मीरा पुन्नय इत्यादि ॥ आशुग नाम आशुग, पत्री मार्गण पृषत्क पतत्रि पतत्री शिलीमुख विशिख खग कलम्बः, काम्भ्य —अथ कलहंसेऽपि । स्वरु शरारित्यादि, शरु कोपवज्रयोरपि ॥ तद्भेदनाम—क्षुरप्र, विषदिग्धलिप्तकौ, प्रक्ष्वेडननाराचावित्यादि ॥ शरबाणकाण्डाः पुन्नपुंसकाः । इषुस्त्रिलिङ्गो भल्लश्च, स्त्रीपुंसलिङ्गो वक्ष्यते । शोणो नदोपलक्षणम्, समास—नद ह्रद । तद्भेदनाम—हिरण्यवाह लौहित्य वंक्षु सिन्धु उद्धव शोण पद्म महापद्म निगिन्द केसरी पौण्डरीक महापौण्डरीक इत्यादि ॥ मासनाम, द्विपञ्च । तद्भेदोऽपि—कार्त्तिककौमुदौ सहः चैत्र वैशाख ज्येष्ठ आषाढ नभा इत्यादि ॥ मासतपःशुक्राख्तु पुन्नपुंसका वक्ष्यन्ते ॥ धान्यनाम व्रीहि । स्तम्बकरिरित्यादि ॥ धान्यशीलयोस्तु सयुगयान्तरधामपुंनपुंसकमेव ॥ तद्भेदनाम—व्रीहिर्यवो मसूरो गोधूमो मुद्गमाषतिलचणका अणव प्रियङ्गुकोद्रवमयुष्टका । शालिराढक्य त्रिपुट कैलायकुलत्थौ द्रोणसप्तदशानि धान्यानि ॥ माषास्तु पुन्नपुंनाथाढकीप्रियङ्गू तु स्त्रीलिङ्गे । मसूर स्त्रीपुंसलिङ्ग । शण च नपुंसके वक्ष्यते ॥ अध्वरनाम अध्वर मख यज्ञ क्रतु अहीन इष्ट्य मवः सत्तर मेध स्तोम यानिः आहव इत्यादि ॥ तद्भेदनाम—अग्निष्टोम अत्यग्निष्टोम इत्यादि ॥ वितानवाजपेयराजसूयानां पुन्नपुंसकत्वम्, वर्हि सत्रयोस्तु नपुंसकत्वं वक्ष्यते ॥ अग्निनाम, अनल शिखी बहुल कृशानु, विभावसु भास्कर प्रभाकर —एते[10] त्रयो रव्यादपि । तमोपह —अथ चन्द्रार्कयोरपि । आशुशुक्षणि —अस्याण्यन्तस्यापि बाहुलकात्पुंस्त्वम् । पावक जातवेदा उपर्बुध इत्यादि, पिङ्गलश्च—यदाह 'पिङ्गल स्यान्मुनौ रुद्रे चण्डांशो पारिपार्श्विके' । निधिभेदे[11] कपायमो

परिमर्शेनोच्यत इति । तुमुल इति व्याकुलो रव । कलकल इति कोलाहलः । मर्मर इति वस्त्रपत्रादीनां शब्द । निस्वन इति धनुषा शब्द । षड्ज इति षड्जादय सप्त तन्त्रीकण्ठोद्भवा शब्दा । देशोऽपि विषय इति विषयशब्देन देशोऽप्युच्यते तेन देशविशेषनाम । आशुगनामेति बाणनाम । पत्त्रीति पत्त्राणि पिच्छानि सन्त्यस्य पत्त्री, ततोऽस्य शब्द । तद्भेदनामेति बाणभेदनाम । विषदिग्धलिप्तकौ इति यो विषेण अञ्जित स बाणो दिग्धो लिप्तकश्चोच्यते । प्रक्ष्वेडननाराचौ इति च सर्वलोहमयो बाणः स प्रक्ष्वेडनो नाराचश्च कथ्यते । कार्त्तिककौमुदौ इति कौमुदशब्देन कार्त्तिक उच्यते तेन द्विवचनम् । सहाः इति सन्त शब्दो मार्गशीर्षाथः । नभा इति सन्त शब्द श्रावणार्थ । तप इति माघ । शुक्र इति ज्येष्ठ । कैलाय इति मालवदेशप्रसिद्धो धान्यविशेष, यस्य तिउडा इति प्रसिद्धिः । द्रोणसप्तदशानीति सप्तदशानां पूरण सप्तदश 'सङ्ख्यापूरणे डट्' (७।१।१५५) शण सप्तदशो येषु तानि, यथा । एते त्रयो रव्यादपीति विभावसुभास्करप्रभाकरा शब्दा सूर्येऽपि । आशुशुक्षण्यन्तस्यापीति आशुशुक्षणि शब्दस्य अणिप्रत्ययान्तस्य स्त्रीत्वे प्राप्तेऽपि । चण्डांशो पारिपार्श्विके इति सूर्यस्य पिङ्गलनाम्नि समीप वर्तिनि, यदाह 'माठर पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्विकाः' इति, लोके सूर्ये रा पासवाण । निधिभेदे

पिङ्गल कपिलेऽन्यवत् ॥ कैरायिकाया वेश्याया पिङ्गला कुमुदस्त्रियाम् ॥ तत्प्रभेदनाम—गार्हपत्यः आहवनीय आनाय्य परिचाय्य उपचाय्य समूह्य चित्य प्रणीत इत्यादि ॥ मरुन्नाम, मरुत् मारुत वात पवमान प्रभञ्जन अनिल चल स्मर समिर समीर अभ्रारि रजोरुक् उमश्रवा । तत्प्रभेदनाम—अपान प्राण व्यान उदान कूर्म कृकर धनञ्जय, नाग देवदत्त इत्यादि ॥ समानस्तु पुन्नपुंसके वक्ष्यते । वसन्ततिलके ॥ २—३ ॥

> वर्होऽच्छदेऽहिर्वप्रे व्रीह्यग्न्योर्हायनवर्हिषौ ।
> मस्तुः सक्तौ, स्फटिकेऽच्छो, नीलमित्रौ मणीनयोः ॥ ४ ॥

वर्होऽच्छदे—छद —पर्ण पिच्छ च, ततोऽन्यस्मिन्वाच्ये वर्हशब्द पुल्लिङ्ग । वर्ह परिवार । छदे तु प्रतिपदपाठात्पुन्नपुंसकत्वम्, वर्ह वर्हम्—कलाप पर्ण च ॥ अहिर्वप्रे—वप्रे केदारे वाच्ये अहिशब्द पुल्लिङ्ग —अहिर्वप्र । वृत्रे देहिनामत्वात्पुंस्त्वम् । सर्प्पे तु प्रतिपदपाठात्स्त्रीपुंसत्व वक्ष्यते ॥ व्रीह्यग्न्योर्हायनवर्हिषौ—हायनशब्दो वर्हि शब्दश्च यथासङ्ख्य व्रीहावग्नौ च वाच्ये पुल्लिङ्ग । हायनो व्रीहि । अन्यत्र हायन हायनम्—वर्षम् रश्मिश्च, प्रतिपदपाठात्पुन्नपुंसकत्वम् । वर्हि —अग्नि, रत्नमाला—'वर्हिरुक्तो वृहद्भानु' । अन्यत्र प्रतिपदपाठात्पुन्नपुंसकत्वम् । अयमिद वा वर्हि —दर्भ । अग्निनामत्वादेव पुंस्त्वे सिद्धे द्विस्वरमन्तलक्षणनपुंसकत्वबाधनार्थं वचनम् ॥ मस्तुः सक्तौ—सक्तौ धानाविकारे वाच्ये मस्तुशब्द पुल्लिङ्ग । 'अय मस्तु —सक्तु' अमरलिङ्गशेष । अन्यत्र तु स्वन्तत्वान्नपुंसकत्वमेव, इद मस्तु—दधिमण्ड ॥ स्फटिकेऽच्छः—स्फटिके वाच्येऽच्छशब्द पुल्लिङ्ग, अच्छ स्फटिक, यद्गौड —'स्फटिकेऽच्छोऽमले त्रिषु', भल्लूके तु देहिनामत्वात्सिद्धम् । अच्छमित्याभिमुख्येऽव्ययमप्यस्ति ॥ नीलमित्रौ मणीनयोः—मणौ, इने—आदित्ये च यथासङ्ख्य वाच्ये नीलशब्दो मित्रशब्दश्च पुल्लिङ्ग । नील —मणि । वर्णे तु प्रतिपदपाठात्पुन्नपुंसकत्वम् । तद्वति स्वाश्रयलिङ्ग । निधौ तु निधिनामत्वात्सिद्धम्, वृक्षभेदे तु

---

इति निधानभेदे, यदाह 'नैसर्प्पः पाण्डुकश्चाथ पिङ्गल सर्वरत्नक । महापद्म कालमहाकालौ माणव शङ्खको' इति । कैरायिकायामिति पिङ्गलानाम्नि पक्षिणि भइरवी अथवा धीवरी इति प्रसिद्धि तत्र ॥ षड्सन्वराजस्तृतीयवर्गादौ 'पोदकी श्रपणकाकपिङ्गलाजम्बुक प्रियतमा च पञ्चमी'त्यादीति । कुमुद स्त्रियामिति नैऋतदिग्गजस्त्री तत्र । गार्हपत्य इत्यादय सव अग्निविशेषा यज्ञे प्रसिद्धाः । मरुन्नामेति वायुनाम । अपान इति ग्रीवापश्चाद्भागपृष्ठगुदपादपश्चाद्भागगामी यः पवन सोऽपान इत्युच्यते । यदाह 'अपान पवनो मन्यापृष्ठपृष्ठान्तपार्ष्णिग' इति । प्राण इति नासिकादिषु भ्रमणशीलो यो वात स प्राणः, यदाह 'प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठान्तगोचर' इति । व्यान इति सर्वशरीरव्यापी, यदाह 'सर्वत्वग्वृत्तिको व्यान' इति । उदान इति कण्ठतालुभ्रूमध्यवर्त्ती, यदाह 'उदानो हृच्छिरोऽन्तरे' इति । एव कूर्म्मादयोऽपि देवदत्तान्ता देहवायव । समान इति सन्धिहृदयनाभिसमुद्भव, यदाह 'समान सन्धिहृन्नाभिषु' इति ॥ ३ ॥ वृत्रे इति वृत्रनाम्नि दानवे । रश्मिरिति किरण । वृहद्भानुरिति अग्नि । धानाविकारे इति लोके सातू इति प्रसिद्धे । दधिमण्ड इति दही नी घरि । भल्लूके इति रिछ इति प्रसिद्धे । अच्छमित्याभिमुख्ये इति अच्छमिति अदन्तोऽयम्, शब्दरूपताविवक्षायां मेदाश्रयणे नपुंसकत्वम् । वृक्षभेदे इति महिन्दी (गुली ?) नाम्नि वृक्षे, यदाह 'नलिनी नीलिका काली मामपा तूणी

श्रोत्रग्राह्यार्थ । शब्द स्वर ध्वनि निर्घोष नाद रव घोष । तद्भेदोऽपि–तुमुल कल कलरव गम्भीर मर्मर निस्फार उदात्त अनुदात्त स्वरित षड्ज पञ्चम ऋषभ गान्धार मध्यम पञ्चम धैवत निषाद इत्यादि ॥ रवकोलाहलौ पुनपुसकौ ॥ देशोऽपि विषयः–पञ्चाला मगधा कलिङ्गा चेद्य काशय कश्मीरा सृञ्जय इत्यादि ॥ आशुग नाम. आशुग पत्री मार्गण पृषत्क पतत्रि पतत्री शिलीमुख विशिख खग कलम्ब, कादम्ब –अय कलहंसेऽपि । खरु शर इत्यादि, शरु कोपवज्रयोरपि ॥ तद्भेदनाम–क्षुरप्र, निर्दिग्धलिप्तकौ, प्रक्ष्वेडननाराचावित्यादि ॥ शरवाणकाण्डा पुनपुसका । इषुस्त्रिलिङ्गो भल्लश्च, स्त्रीपुंसलिङ्गो वक्ष्यते । शोणो नदोपलक्षणम्, तन्नाम–नद ह्रद । तद्भेदनाम–हिरण्यवाह लौहित्य वक्षु सिन्धु उद्ध्य शोण पद्म महापद्म तिगिञ्छ केसरी पौण्डरीक महापौण्डरीक इत्यादि ॥ मासनाम. द्विपक्ष । तद्भेदोऽपि–कार्तिककौमुदी सैंहा चैत्र वैशाख ज्येष्ठ आषाढ नैभा इत्यादि ॥ मासतैष शुक्रास्तु पुनपुसका वक्ष्यन्ते ॥ धान्यनाम व्रीहि । स्तम्बकरिरित्यादि ॥ धान्यसीत्ययोस्तु सयुक्तयान्तरवाभ्यु सपस्त्यमेव ॥ तद्भेदनाम–व्रीहिर्यवो मसूरो गोधूमो मुद्गमाषतिलचणका अणव प्रियङ्गुकोद्रवमयुष्टका । शालिराढक्य त्रिपुटा कैलायकुलत्थौ शणसप्तदशानि धान्यानि ॥ माषाणू पुनपुसकावाढकीप्रियङ्गू तु स्त्रीलिङ्गे । मसूर स्त्रीपुंसलिङ्ग । शण च नपुसक वक्ष्यते ॥ अध्वरनाम अध्वर मख यज्ञ क्रतु अहीन पृष्ट सव सत्तर मेध स्तोम वाजि आहव इत्यादि ॥ तद्भेदनाम—अग्निष्टोम अत्यग्निष्टोम इत्यादि ॥ वितानवाजपेयराजसूयाना पुनपुसकत्वम्, बर्हि सत्रयोस्तु नपुसकत्व वक्ष्यते ॥ अग्निनाम. अनल शिखी वह्नि कृशानु, विभावसु भास्कर प्रभाकर –एते त्रयो रवावपि । तमोपह –अय चन्द्रार्कयोरपि । आशुशुक्षणि –अस्याण्यन्तस्यापि बाहुलकात्पुस्त्वम् । पावक जातवेदस उषर्बुध इत्यादि, पिङ्गलश्च–यदाह 'पिङ्गल स्यान्मुनौ रुद्रे चण्डांशो पारिपार्श्विके । निधिभेदे कपावग्नौ

परिमलेनोच्यते इति । तुमुल इति व्याकुलो रव । कलकल इति कोलाहल । मर्मर इति पत्रपत्रादीनां शब्द । विस्फार इति धनुषा शब्द । षड्ज इति षड्जादय सप्त तन्त्रीकण्ठोद्भवा शब्दा । देशोऽपि विषय इति विषयशब्देन देशोऽप्युच्यते तेन देशविशेषनाम । आशुगनामेति बाणनाम । पत्रयाति पत्राणि पिच्छानि सन्त्यस्य पत्री, नवोऽय शब्द । तद्भेदनामेति बाणभेदनाम । निर्दिग्धलिप्तकौ इति यो विषेण ग्रथित स बाणो दिग्धो लिप्तकश्चोच्यते । प्रक्ष्वेडननाराचौ इति य सर्वलोहमयो बाण स प्रक्ष्वेडनो नाराचश्च कथ्यते । कार्तिककौमुदी इति कौमुदशब्देन कार्त्तिक उच्यते तेन द्विवचनम् । सैंहा इति सप्त शब्दो मार्गशीर्षाय । नैभा इति सप्त शब्द श्रावणाय । तैष इति माघ । शुक्र इति ज्येष्ठ । कैलाय इति मालवदेशप्रसिद्धो धान्यविशेष यस्य तिउडा इति प्रसिद्धि । शणसप्तदशानीति सप्तदशानां पूरण सप्तदश 'सङ्ख्यापूरणे डट्' (७।१।१५५) शण सप्तदशो येषु तानि, तथा । एते त्रयो रवावपीति विभावसुभास्करप्रभाकरा शब्दा सूर्येऽपि । अस्याण्यन्तस्यापीति आशुशुक्षणि शब्दस्य अणिन्नन्तस्य स्त्रीत्वे प्राप्तेऽपि । चण्डांशो पारिपार्श्विके इति सूर्यस्य पिङ्गलनाम्नि समीप वर्तिनि, यदाह 'माठर पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्विका' इति, लोके सूर्ये ॥ पारम्पाण । निधिभेदे

पिङ्गल कपिलेऽन्यवत् ॥ केरायिकाया वेश्याया पिङ्गला कुमुदस्त्रियाम् ॥ तत्प्रभेदनाम—गार्हपत्य· आहवनीय आनाय्य परिचाय्य उपचाय्य समूह्य चित्य प्रणीत इत्यादि ॥ मरुन्नाम· मरुत् मारुत वात पवमान· प्रभञ्जन अनिल चल स्मर समिर समीर· अभ्रारि रजोक्क् उग्रश्रवा । तत्प्रभेदनाम—अपान प्राण व्यान उदान कूर्म ककर ४ धनञ्जय नाग देवदत्त इत्यादि ॥ समानस्तु पुन्नपुसको वक्ष्यते । वसन्ततिलके ॥ २–३ ॥

> वर्होऽच्छदे ऽहिश्चर्मे व्रीह्यश्योर्हायनवर्हिषौ ।
> मस्तुः सक्तौ, स्फटिकेऽच्छो, नीलमित्रौ मणीनयोः ॥ ४ ॥

वर्होऽच्छदे—छद —पर्णं पिच्छ च, ततोऽन्यस्मिन्वाच्ये वर्हशब्द पुल्लिङ्ग । वर्ह परिवार । छदे तु प्रतिपदपाठात्पुन्नपुसकत्वम्, वर्ह वर्हम्—कलाप पर्णं च ॥ अहिश्चर्मे—चर्मे केदारे वाच्ये अहिशब्द पुल्लिङ्ग —अहिश्चर्म । वृत्रे देहिनामत्वात्पुस्त्वम । सर्पे तु प्रतिपदपाठात्स्त्रीपुसत्व वक्ष्यते ॥ व्रीह्यश्योर्हायनवर्हिषौ—हायनशब्दो वर्हि शब्दश्च यथासङ्ख्य व्रीहावग्नौ च वाच्ये पुल्लिङ्ग । हायनो व्रीहि । अन्यत्र हायन हायनम्—वर्षम् रश्मिश्च, प्रतिपदपाठात्पुन्नपुसकत्वम् । वर्हि —अग्नि·, रत्नमाला—'वर्हिरुक्तो वृहद्भानु ' । अन्यत्र प्रतिपदपाठात्पुन्नपुसकत्वम् । अयमिद वा वर्हि —दर्भ । अग्निनामत्वादेव पुस्त्वे सिद्धे द्विस्वरसन्तलक्षणनपुसकत्वबाधनार्थं वचनम् ॥ मस्तुः सक्तौ—सक्तौ धानाविकारे वाच्ये मस्तुशब्द पुल्लिङ्ग । 'अय मस्तु —सक्तु ' अमरलिङ्गशेष । अन्यत्र तु स्वन्तत्वान्नपुसकत्वमेव, इद मस्तु—दधिमण्ड ॥ स्फटिकेऽच्छः—स्फटिके वाच्येऽच्छशब्द पुल्लिङ्ग, अच्छ स्फटिक, यद्गौड·—'स्फटिकेऽच्छोऽमले त्रिषु', भल्लूके तु देहिनामत्वात्सिद्धम् । अच्छमित्याभिमुख्येऽव्ययमप्यस्ति ॥ नीलमित्रौ मणीनयोः—मणौ, इने—आदित्ये च यथासङ्ख्य वाच्ये नीलशब्दो मित्रशब्दश्च पुल्लिङ्ग । नील —मणि । वर्णे तु प्रतिपदपाठात्पुन्नपुसकत्वम् । तद्वति स्वाश्रयलिङ्ग । निधौ तु निधिनामत्वात्सिद्धम्, वृक्षभेदे तु

---

इति निधानभेदे, यदाह 'नैसर्प्य पाण्डुकश्चाथ पिङ्गल सवरक्षक । महापद्म कालमहाकालो माणव शङ्खकौ' इति । केरायिकायामिति पिङ्गलानाम्नि पक्षिणि भइरवी अथवा चीबरी इति प्रसिद्धि तत्र ॥ पद्मसन्तरानस्तृतीयवर्गादौ 'पोदकी भयणकाकपिङ्गलाजम्बुक प्रियतमा च पञ्चमी'त्यादीति । कुमुद स्त्रियामिति नैर्ऋतदिग्गजस्त्री तत्र । गार्हपत्य इत्यादय सर्वे अग्निविशेषा यज्ञे प्रसिद्धा । मरुन्नामेति वायुनाम । अपान इति ग्रीवापश्चाद्भागपृष्ठगुदपादपश्चाद्भागगामी य पवन सोऽपान इत्युच्यते । यदाह 'अपान पवनो मन्यापृष्ठपृष्ठान्तपार्ष्णिग' इति । प्राण इति नासिकादिनि क्रमणशीलो यो वात स प्राणः, यदाह 'प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठान्तगोचर' इति । व्यान इति सर्वत्वचावर्ती, यदाह 'सर्वत्वग्वृत्तिको व्यान' इति । उदान इति कण्ठतालुभ्रूमध्यवर्ती, यदाह 'उदानो हृच्छिरोऽन्तरे' इति । एव कूर्मादयोऽपि देवदत्तान्ता देहवायव । समान इति सन्धिहृदयनाभिसमुद्भव, यदाह 'समान सन्धिहृन्नाभिषु' इति ॥ ३ ॥ वृत्रे इति वृत्रनाम्नि दानवे । रश्मिरिति किरणः । वृहद्भानुरिति अग्नि । धानाविकारे इति लोके सातु इति प्रसिद्धे । दधिमण्ड इति दही नी घरि । भल्लूके इति रिछ इति प्रसिद्धे । अच्छमित्याभिमुख्ये इति अच्छमिति अदन्तोऽयम्, शब्दरूपत्वाविवक्षाया भेदाश्रयणे नपुसकत्वम् । वृक्षभेदे इति महिन्दी( गुली ? )नाम्नि वृक्षे, यदाह 'नलिनी नीलिका काली ग्राम्या तूणी

शिंशपादित्वान्नील च, यदाह—'नील कृष्णो नगान्तरे। नील कपीश्वरे नीली वृक्ष-लाञ्छन-भेदयो' ॥ नीलान्तत्वान्महानील, यदाह—'महानीलो भृङ्गराजे मणिनागविशेषयो' ॥ मिश्र—इन, देहिनामत्वेनैव मित्रस्य पुंस्त्वे सिद्धे तदुपादान नियमार्थम्, तेन सुहृदि सयुक्तरान्तत्वान्नपुंसकत्वम् ॥ सङ्कीर्णविपुलावृत्तम् ॥ ४ ॥

कोणेऽस्रश्चषके कोशस्तलस्तालचपेटयोः ।
अनातोद्ये घनो भूम्नि दारप्राणासुजल्वजाः ॥ ५ ॥

**कोणेऽस्रः**—कोणे वाच्येऽस्रशब्द पुंलिङ्ग, अस्र कोणं । अन्यत्र इदमखम—अश्रु रुधिर च, सयुक्तरान्तत्वान्नपुंसकत्वमेव, केशे तु केशनामत्वान्न पुंस्त्वम् ॥ **चषके कोशः**—कोशशब्दश्चषके वाच्ये पुंलिङ्ग, कोश चषक । असाकारे शिम्बायां च त्रिलिङ्गो भाण्डागारादौ तु पुन्नपुंसको वक्ष्यते ॥ **तलस्तालचपेटयो**:—तालस्ताङ्गुष्ठमध्यम पाणि: नितम्बिशृक्षनिक्षेप ग्राहमुष्टिश्च, चपेटो विस्तृताङ्गुलि पाणि, तयोर्वाच्ययोस्तलशब्दः पुंलिङ्ग । तल —तालश्चपेटश्च । अन्यत्र यथाप्राप्त वक्ष्यते । तलान्तत्वात्प्रतल चपेट । द्वौ सहतौ वामदक्षिणौ प्रतलौ सिंहतलश्च ॥ **अनातोद्ये घनः**—आतोद्यमुपलक्षण नृत्तस्य । आतोद्यमध्यमनृत्ताभ्यामन्यत्र घनशब्द पुंलिङ्ग, घन —मन्थादि, आतोद्यनृत्ययोस्तु नान्तत्वान्नपुंसकत्वम्, यद्गौड —'कांस्यतालादिवाद्य च मध्यनृत्त घन घना । सान्द्रदार्ढ्य-दृढोऽन्योघमुस्तविस्तारमुद्गरा' ॥ **भूम्नि दारप्राणासुजल्वजा**:—एते पुंलिङ्गा भूम्नि बहुत्वे एव च प्रयोक्तव्या । एते दारा कलत्रम् । एते प्राणा असवश्च जीवितम् । एते जल्वजा उल्प । क्वचिदेकवचनमपि दृश्यते । यथा 'धर्मप्रजासम्पन्ने दारे नान्य कुर्वीत' । 'निर्भ्रन्प्रिय प्राणमिवाभिमानम्' । 'उल्पो जल्वज प्रोक्त' । असुसाहचर्यात्तद्वाचिन एव प्राणशब्दस्य बहुत्वविधि । पुंस्त्व णान्तत्वादर्थान्तरेष्विव सिद्धम्, यद्गौड —'समीरणे गन्धरसे बले हृदयमारुते । प्राणो ना पूरिते वाच्यलिङ्ग पुंभूम्नि चासुषु' ॥ पर्यायक्रम् ॥ ५ ॥

---

विशोधनी'ति । नगान्तरे इति नीलनाम्नि पर्वत । कपीश्वरे इति वालिनाम्नि वानरे । लाञ्छनभेद इति लक्षणवस्त्रविशेष । भृङ्गराजे इति भाङ्गरा इति प्रसिद्धे । तदुपादानमिति मित्रशब्दोपादानम् ॥ ४ ॥ कोणे इति खूणओ । अश्रु इति लोके आंसू । चषक इति मदिरापानभाजनम् । असाकारे इति पडीयार । शिम्बायामिति मुद्गादिफलिकायाम् । सिंहतलश्चेति न केवल तला वरात्प्रतलशब्द पुंलिङ्ग । वाम दक्षिणौ द्वौ प्रतलौ चपेटौ सहतौ मिलितौ सिंहतलोऽभिधीयते । सिंहो हि मिलिताभ्यां चपेटाभ्यां हन्ति, सोऽपि पुंलिङ्ग इत्यर्थ । यदमर 'द्वौ सहतौ सिंहतल प्रतलौ वामदक्षिणौ' इति । 'सहत सङ्गत गात्राति सहतल इत्यपरे' इति वृत्तौ । आतोद्यादिति वाद्यात् । मध्यमनृत्तादिति उत्तममध्यमसुकुमारभेदेन त्रिधा नृत्त भवति; तेन मध्यमशब्दाऽभिधेय यत् नृत्त तस्मात् । सान्द्रमिति निबिडम् । दार्ढ्यमिति काठिन्यम् । दृढमिति कठिनम् । अन्द इति मेघ । ओघ इति समूह । मुस्तमिति लोके मोथ । मुद्गर इति लोहादीना लोके मोगरओ । धर्मप्रजासम्पन्ने दारे नान्य कुर्वीतेति-प्रजाधर्माविधर्मै सन्तानसयुक्ते दारे कलत्रे नान्य न अपरं दार कुर्वीत । निर्भ्रन् प्रिय प्राणमिवाभिमानमिति-प्रिय वल्लभ प्राणमिव जीवितमिव अहङ्कार निभ्रन् । तद्वाचिन इति असुवाचकस्य । अर्थान्तरेष्विवेति वक्ष्यमाणेषु अर्थान्तरेषु इव । समीरणे इति सामान्यपवने । गन्धरसे इति-बीजाबोल इति प्रसिद्धे । हृदयमारुते

कान्तश्चन्द्रार्कनामायःपरो यानार्थतो युगः ।
यश्च स्यादसमाहारे द्वन्द्वोऽश्वनडवाविति ॥ ६ ॥

कान्तश्चन्द्रार्कनामायःपरः—चन्द्रार्कनामभ्योऽयःशब्दाच्च परः कान्तशब्दः पुल्लिङ्गः—चन्द्रकान्तः इन्दुकान्तः चन्द्रोपलः अर्ककान्तः सूर्यकान्तः भास्वत्कान्तः अर्कोपलः, अयस्कान्तः—लोहाकर्षको मणिः ॥ यानार्थतो युगः—यानार्थपूर्वपदो युगशब्दः पुंसि—यानयुगः शकटयुगः अनोयुगः रथयुगः, परवल्लिङ्गत्वप्राप्तावस्य वचनम् ॥ 'यश्च स्यादसमाहारे द्वन्द्वोऽश्वनडवाविति—यश्चाऽसमाहारे इतरेतरयोगे द्वन्द्वोऽश्वनडवाविति स पुल्लिङ्गः—अश्वश्च वडवा च इमावश्ववडवौ, द्विवचनमतन्त्रम्, तेनेमेऽश्ववडवाः । 'अश्ववडवपूर्वापराधरोत्तराः' (३।१।१३३) इति निर्देशाद्ध्रस्वत्वम् । असमाहार इति किम्? अश्ववडवम् । द्वन्द्व इति किम्? अश्वो वडवा अस्य अश्ववडवमुन्मुग्धं कुलम् । अश्ववडवा स्त्री । द्वन्द्वस्य परवल्लिङ्गत्वात्स्त्रीत्वप्राप्तौ वचनम् ॥ पथ्यावक्त्रम् ॥ ६ ॥

इतः परं स्वरान्तव्यञ्जनान्तक्रमेण शब्दा उदाहरिष्यन्ते ॥

तत्र स्वरान्तेषु ककारोपान्त्यादिक्रमेणाऽकारान्ता उदाह्रियन्ते ॥

वाकोत्तरा नक्तकरङ्कराङ्का न्युङ्खोत्तरासङ्गतरङ्गरङ्गाः ।
परागपूगौ सुगमस्तुलिङ्गकुडङ्गकालिङ्गतमङ्गमङ्गाः ॥ ७ ॥

वाकोत्तरपदा नक्तकादयश्च शब्दाः पुल्लिङ्गाः । अनूच्यत इत्यनुवाकः—ऋग्यजुःसमूहात्मकं वाक्यम् । सूक्तो वाकः सूक्तवाकः । शंयुर्वाकः शंयुवाकः, शंयुशब्दः 'कंशंभ्याम्' (७।१।२८) इति मत्वर्थीयान्तः । घञन्तत्वादेव सिद्धे भावे एव नियतं पुंस्त्वम्, भावादन्यत्र घञन्तस्याश्रयलिङ्गतापि भवतीति ज्ञापनार्थं वचनम्, तेन बद्धं काष्ठमित्यादि सिद्धम् । यद्वाऽनुक्रान्तोऽनुगतो वा वाकोऽनयाऽनेन वा कुलेन सा तद्वा अनुवाकः, एवं सूक्तवाकः । अन्यपदार्थस्य स्त्रीनपुंसकत्वेऽपि पुंस्त्वार्थम् ॥ अथ कान्तास्त्रयः—नक्तकः—द्रवद्रव्यपवनवस्त्रम् । रल्लकः—पक्ष्मकम्बलः, उपलक्षणत्वात् पाण्डुकम्बल इत्यपि । यद्गौडः—'स्यात्पाण्डुकम्बलः श्वेत[10]प्रावार[11]ग्रावभेदयोः' । अङ्कः 'अङ्कः [12]स्थानेऽन्ति[13]के [14]मन्तौ [15]रूप-

इति—नासामहृदयनाभिपादाङ्गुष्ठान्तनिर्गमनशीले ॥ ५ ॥ लोहाकर्षको मणिरिति लोके चुम्बकपाषाण इति प्रसिद्धिः । [2]यानयुग इति यानयोर्युगं युग्मम्, यानस्य युगमीशाबन्धनमिति वा यानयुगः । इह युगशब्देन यो वृषभादीनां स्कन्धे आरोप्यते स युगशब्देनोच्यते, लोके जूसर इति प्रसिद्धिः । एवमन्येऽपि, यद्वैजयन्ती 'युगोऽस्त्री स्यन्दनाद्यङ्गे क्लीबं युग्मे कृतादिके' इति, अन्यस्तु युगं युगलम् । 'कृतयुगं त्रेतायुगं द्वापरयुगं कलियुगं चत्वारि नपुंसके' इति दुर्गलिङ्गानुशासनवृत्तौ ॥ [3]अतन्त्रमिति अपारमार्थिकम् । [4]ह्रस्वत्वमिति 'न गोश्वान्त०' (२।४।९६) इति सूत्रेण, तत्र गौणत्वात् पुल्लिङ्गसामर्थ्यादापोऽपि निवृत्तिर्न समुदायस्य पुल्लिङ्गत्वात् ॥ ६ ॥ [5]वाकोत्तरपदा इति वाक इति उत्तरपदं येषां ते वाकोत्तरपदाः । [6]अनुक्रान्त इति भणितः । [7]अनुगत इति आश्रितः । [8]द्रवद्रव्यपवनवस्त्रमिति द्रवं च तद् द्रव्यं च द्रवद्रव्यं तस्य पवनवस्त्रं गलनकादीत्यर्थः, लोके गलणओ । [9]पक्ष्मकम्बल इति लोके कामळि इति प्रसिद्धिः । [10]श्वेतप्रावार इति श्वेतकम्बलः, यदाह 'स्यात् पाण्डुकम्बलः श्वेतकम्बलग्रावभेदयोः' । [11]ग्रावभेद इति पाषाणभेदः । [12]स्थाने इति एकद्वित्र्यादिगणनान्यासे । [13]... । [14]मन्तौ इति अपराधे । रूपकमिति

कोत्सङ्गलक्ष्मसु । नाटकादिपरिच्छेदे चित्रयुद्धे च भूषणे' ॥ रङ्गरक्षणयोस्तु वनामत्वादङ्कस्य चान्तिकनामत्वान्नपुंसकत्वे प्राप्ते वचनम् । अथ खान्तः—न्युङ्ख पदोङ्कारः । सम्यङ्-मनोहरे त्वाश्रयलिङ्गः, यद्वोड—'न्युङ्खः साम्नि पैडोङ्कारकेष्वपि सम्यङ्मनोहरे' ॥ अथ गान्ता पञ्चदश ॥ उत्तरासङ्ग वैकक्ष्यम् । अर्थप्राधान्यात्कम्बल इत्यपि, यदाह—'कम्बलो नागराजे स्यात्सास्नाप्रावारयोः कृमौ । कम्बलश्चोत्तरासङ्गे कम्बलं सलिले मतम्' । तरङ्ग ऊर्मिः । रङ्ग नर्तनस्थानम् । पराग—धूल्यादि 'परागः सुमनोरेणौ धूलीस्नानीययोरपि । गिरिप्रभेदे विख्यातावुपरागेऽपि चन्दने' ॥ पूग—संघः, क्रमुकश्च । पुंनपुंसकोऽयमिति कश्चित् । 'पूगः क्रमुकवृन्दयोः' इत्यन्यः ॥ खङ्ग भिन्दिपालः । अर्थप्राधान्याद्भिन्दिपालोऽपि ॥ मस्तुलुङ्ग मस्तिष्कम् ॥ कुडङ्ग वृक्षलतागहनम्, स्वार्थिके के कुडङ्गक—तदेव, गृहं च ॥ कालिङ्ग भूमिकर्कारुः, वल्लिनामत्वात्स्त्रीत्वे फलनामत्वान्नपुंसकत्वे वा प्राप्ते वचनम् । दन्तावलभुजङ्गयोस्तु देहिनामत्वात्पुंस्त्वमेव । राजपर्यङ्कवाची तु यष्टीनामत्वात्स्त्रीत्वम् ॥ तमङ्ग इन्द्रकोशः ॥ मङ्ग—धर्म नौः शिरश्च ॥ उपजातिः ॥ ७ ॥

वेगसमुद्गावपाङ्गवर्गावर्घार्घौ मञ्चसपुच्छपिच्छगच्छाः ।
वाजौजकिलिञ्जपुञ्जमुञ्जा अवटः पट्टहठप्रकोष्ठकोष्ठाः ॥ ८ ॥

एते शब्दाः पुंलिङ्गाः ॥ वेग—रयः किंपाकफलम् प्रवाहः मूत्रादिप्रवृत्तिः मलोत्सर्गः प्रभावः शृङ्गारभावः रेतश्च ॥ समुद्ग—संपुटः—समुद्गच्छतीति डे रूपम्, सम उद्गेषु घञि घञन्तत्वादेव सिद्धम् । अपाङ्ग—नेत्रान्तः तिलकश्च । वर्ग सजातीयः । रङ्गवेगवर्गाणां घञन्तत्वेन पुंस्त्वे सिद्धे गंप्रत्ययार्थं वचनम् ॥ अथ घान्तौ—ओघ—समूहः परम्परा द्रुतनृत्तम् उपदेशः प्रवाहश्च । अर्घ—मूल्यम्, पूजाविशेषश्च, उणादौ घप्रत्ययान्तोऽयम् । घञन्तस्य तु पुंस्त्वं सिद्धमेव ॥ अथ चान्तः—मञ्च—राजासनम् पर्यङ्कश्च । अथ छान्ता-

रूपकशब्देन नाटकादि उच्यते यदाह 'रूपकं नाटकादिषु,' तेन दशरूपके नवमो रूपकभेदोऽङ्क उच्यते । उत्सङ्ग इति खोला । नाटकादिपरिच्छेदे इति नाटकादिसम्बन्धी यथा प्रथमोऽङ्कः । चित्रयुद्धे इति कौतुकसङ्ग्रामे । पदोङ्कारा इति प्रथमसामवेदस्य पदः ओङ्कारः, सामवेदस्य आदौ हि पदोङ्कारो गीयते । सम्यङ्मनोहरे इति सम्यक् चासौ मनोहरश्चेति कर्मधारयस्तत्र । सास्नेति गोगलकम्बलः । प्रावार इति ऊर्णामयं वासः इहोच्यते, इत्यनेकार्थटीका । सुमनोरेणौ इति पुष्परजसि । धूलीति सामान्यरजः । स्नानीयमिति स्नाति तेनेति स्नानीयं चूर्णं पिष्टिकादि, लोके पीठी । गिरिप्रभेदे इति पश्चिमाचले । विख्यातौ इति सुभार्या प्रभुभार्या च प्रसिद्धौ । उपरागे इति सूर्यचन्द्रयोर्ग्रहणे । संघ इति समूहः । क्रमुक इति सोपारी । भिन्दिपाल इति भिन्दिपालो नाम हस्तिक्षेप्यो महाफलो दीर्घदण्ड आयुधविशेषः, लोके गाण्डओ इति प्रसिद्धिः । मस्तिष्कमिति मस्तकस्नेहः । वृक्षलतागहनमिति वृक्षैर्लता-भिश्चाच्छादितान्तरालं स्थानम् । तदेवेति वृक्षलतागहनम् । भूमिकर्कारुरिति, कूष्माण्डविशेषः । दन्तावलभुजङ्गयोरिति गजसर्पयोः । राजकन्या इति राजचिर्भिट्याम् । इन्द्रकोश इति हर्म्य-निर्यूहः । गृहादेर्बहिर्निर्गत दारु इत्यर्थः, घर मांहे मीसिरा घोडला अथवा बारणारा घोडला, यदाह 'इन्द्रकोशस्तमङ्गकः' इति ॥ ७ ॥ संपुट इति लोके दाबडओ इति प्रसिद्धिः । गंप्रत्ययार्थमिति औणादिक-गंप्रत्ययार्थम् । परम्परेति अनुक्रमः । द्रुतनृत्तमिति—'द्रुतविलम्बितमध्यमौघस्तत्त्वं घनं क्रमात्' इति ।

त्रयः—पुच्छ पश्चाद्भाग, यदाह—'पुच्छः पश्चात्प्रदेशे स्यात्' । लाङ्गूले तु पुन्नपुंसको वक्ष्यते ॥ पिच्छ पुच्छम्, यद्गौड —'पिच्छो लाङ्गूलके पुमान्' । गच्छ अभिमतसङ्ख्यापर्यवसानम् ॥ अथ जान्ताः पञ्च—वाज पिच्छम् । ओज विषमसङ्ख्या । किलिञ्ज कटः । पुञ्ज राशि । मुञ्ज शरेषीका । अथ टान्तौ—अवट—रन्ध्रम्, कूप, खिल कुहुकजीवी च, अस्य रन्ध्रनामत्वाद्वाजस्य तु पिच्छनामत्वान्नपुंसकत्वे प्राप्ते वचनम् ॥ पट्ट 'पट्ट पेषणपाषाणे व्रणादीना च बन्धने । चतुष्पथे च राजादिशासनान्तरपीठयो ॥ पट्टी ललाटभूषाया पट्टी लाक्षाप्रसादने' । स्त्रीत्व तु बाहुलकात् ॥ अथ ठान्ताश्चत्वारः—हठः—बलात्कार वारिपर्णी च । प्रकोष्ठ 'भूपकक्षान्तरे पुंसि प्रकोष्ठ कूर्परादध हस्ते च विस्तृतकरे' ॥ कोष्ठ 'कुसूलात्मीययो कोष्ठ कुक्षेरन्तर्गृहस्य च' । औपच्छन्दसिकम् ॥८॥

अङ्गुष्ठगण्डौ लगुडप्रगण्डकरण्डकूष्माण्डगुडाः शिखण्डः ।
वरण्डरुण्डौ च पिचण्डनाडीव्रणौ गुणभ्रूणमलक्तकुन्तौ ॥ ९ ॥

एते शब्दा पुंलिङ्गा । अङ्गुष्ठ अङ्गुलिविशेष ॥ अथ डान्ता दश—गण्ड । 'गण्ड कपोले पिटके योगभेदे च गण्डके । गण्ड मैवीरे चिह्ने स्यादश्वभूषणबुद्बुदे' ॥ लगुड लोहमय प्रहरणम् । प्रगण्ड कूर्परांसयोर्मध्यम् । करण्ड भाण्डविशेष ॥ कूष्माण्ड—गणभेद, भ्रूण, कर्कारुश्च । देव्यां योनिमन्नामत्वादौषध्यां तु वह्निनामत्वात्स्त्रीत्वम् ॥ गुड—इक्षुविकार गोलकश्च, ह्रस्वार्थे कपि गुडक, गुडस्य ल्त्वे गुलिका । अल्पह्रस्वे कपिति स्त्रीत्वम् । ह्रस्वो गोल इत्यर्थ । हस्तिसन्नाहे तु स्त्रीपुंसलिङ्गो वक्ष्यते ॥ शिखण्ड—चूडा, शिखिशिखा, बर्हश्च ॥ वरण्ड 'वरण्डो नाऽन्तरावेदौ समूहमुखरोगयो' । के

खिल इति क्षेत्रादावप्रतिहतस्थानम् । कुहुकजीवीति कुहुक इन्द्रजाल तेन जीवति कुहुकजीवी इन्द्रजालिक इत्यर्थ । पेषणपाषाणे इति यस्मिन् कस्तूरिकादि पिष्यते तत्र, लोके ओरसियओ । राजादिशासनान्तरमिति राजादीनां शासनान्तर आदेशान्तरम्, लोके राजारओ पट्टओ । एव अन्येषामपि । पीठं इति लोके पाटओ । लाक्षाप्रसादने इति मुनिलोध्रवृक्षे, यदाह 'क्रमुक पट्टिकारोध्रो वल्कल स्थूलवल्कलः । शीर्णपर्णो बृहत्पुष्प पट्टी लाक्षाप्रसादन' इति । वारिपर्णीति पत्रनाम शाकम् । भूपकक्षान्तरे इति राज्ञा गृहमध्ये, यथा—'वल्गति बाहा प्रथमप्रकोष्ठे' । कूर्परादध इति कूर्परादधोभाग, कलाचिका लोके पहूचा (कलाइ) । हस्ते च विस्तृतकरे इति इह करो हस्ताग्रमात्रमेव तेन विस्तृतहस्ताग्रे इत्यर्थ । कुसूल इति धान्यागारं कोठार इति प्रसिद्धि । कुक्षेरन्तर्गृहस्य चेति कुक्षेरन्त उदरमध्यम् गृहस्याभ्यन्तर अपवरकादयम् ॥ ८ ॥ पिटके इति स्फोटके लोके मासगांठि 'यथा क्लिष्यत्युचे पिहितगुरुगण्डो स्तनधिया' । योगभेदे इति विष्कम्भयोगादृशमस्तत्र । गण्डके इति एकशृङ्गो जीवविशेष, लोके गाडा इति प्रसिद्धिस्तत्र । मैवीरे इति सुभटे, यद्रूपम्, 'त्रिभुवनगण्ड' । अश्वभूषणबुद्बुदे इति अश्वाना भूषणे बुद्बुदाकारत्वात् बुद्बुदस्तत्र, लोके मच्छीयारणओ । भाण्डविशेष इति करण्डियओ इति प्रसिद्धि । गणभेद इति केलिकिलाख्य । भ्रूण इति बाल । कर्कारुरिति लोके कोहलओ । देव्यामिति अम्बिकादेवीति प्रसिद्धायाम् । औषध्यामिति विदारीति प्रसिद्धायाम्, यदाह 'विदार्यां तु स्वादुकन्दा पुष्पकन्दा शृगालिका । वृक्षादनी चर्मकषा कूष्माण्डी चाश्ववल्लभा' इति । इक्षुविकार इति लोके गुल । गुडक इति बालक्रीडनक लोके गेडिपओ लट्टू इति भाषान्तरम् । चूडेति काकपक्ष इत्यनेकार्थवृत्तौ, लोके चोटी इति प्रसिद्धि । बर्ह इति पिच्छम् । वरण्ड कुड्यम्, तृणकाष्ठादिभारश्चेत्युणादि यथा ('वरण्डक्रमदण्डाभ्यामारुरोह द्विप क्षुधा' वरण्डशब्देन लोके डागरा अथवा छज्ज इत्यनयोर्नामाऽप्युच्यते) । अन्तरावेदौ [इति लोके वरण्डी तत्र]

वरण्डक भित्ति ॥ रुण्ड कैबन्ध । रुण्डान्तरमाह्वारुण्ड सेकेपात्रम् ॥ पिचण्ड —उदरम्, पशोरवयवश्च ॥ अथ णान्तास्त्रयः—नाडीयुक्त नाड्या वा व्रण नाडीव्रण रोगविशेष । व्रणशब्दस्य पुनपुसकत्वात्तत्पुरुषे परवल्लिङ्गताप्राप्तौ पुस्त्वार्थं वचनम् ॥ गुण पैटः । तन्तौ मौर्व्यां दोपैतरे सूपकारे शुंम्बे वृकोदरे सन्ध्यादौ शुक्लादौ शौर्यादौ त्यागादौ सत्त्वादौ च णान्तत्वादेव पुस्त्वम् ॥ भ्रूण गर्भिणी । शिशौ स्त्रीगर्भे च णान्तत्वादेव पुस्त्वम् ॥ गुणस्या-शुक्लनामत्वेन नपुसकत्वे भ्रूणस्य तु योनिमन्नामत्वेन स्त्रीत्वे प्राप्ते पाठ ॥ अथ तान्ताः सप्त—अलक्त यौवक , स्वार्थिके के अलक्तक । क्षुन्त प्रास , यद्बोड —'प्रासे गैवेधुकाया ना क्षुन्त स्त्री गुग्गुलद्रुमे । युधिष्ठिरजनन्या च' । अर्थप्राधान्यात् शल्यपरा च—दीर्घायुधा अपि । उपजाति ॥ ९ ॥

पोतः पिष्टात' पृषतश्चोत्पातव्रातावर्थकपर्दा ।
बुद्बुदगदमगदो मकरन्दो जनपदगन्धरकन्धमगाधः ॥ १० ॥

एते श—ा पुल्लिङ्गा । पोत —प्रवहण शिशुश्च । पिष्टात पैटवास ॥ पृषता निन्दव , प्रायेण बहुवचनान्तोऽयम् । मृगवाचिनस्तु देहिनामत्वादेव पुस्त्वम् ॥ उत्पात उपसर्ग । व्रात समूह । अथ थान्त—अर्थ । 'अथ प्रकारे विषये वित्तकारणवस्तुषु । अभिधेयेऽपि शब्दाना निवृत्तौ च प्रयोजने' ॥ धननामत्वेन नपुसकत्वे प्राप्तेऽस्य पाठ ॥ अथ दान्ता' पद्—कपर्द हरजटाबन्ध । वराटवाचिनस्तु वनामत्वादेव पुस्त्वम् ॥ बुद्बुद तैलादिसस्थानविशेष । गद —व्याधि विष्णोरनुजश्च । अगद औषधम् ॥ मकरन्द पुष्परस । अथप्राधान्या मरन्द इत्यपि ॥ जनपद —जनसमूह विषय करदश्च कुटुम्बी ॥ अगद—जनपदयोर्भेषजनामत्व—पदान्तत्वाभ्या नपुसकत्वे प्राप्ते पाठ ॥ अथ धान्ताश्च-त्वार'—गन्ध । 'गन्धो गैन्धक आमोदे लेशे सम्बन्धिगर्वयो' । गन्धये अर्थप्राधान्यात्

इति गृहमध्ये दारुपरिष्कृता चतुरस्रा त्रिभागि भू लोके सेनरट । कैबन्ध इति मस्तकरहित मृतकम् । सेकेपात्रमिति सेकस्य सिञ्चनस्य पात्र सेकपात्र येन कृत्वा वृक्षादय सिच्यन्ते, लोके गरहण्ड ( घडि ) इति प्रसिद्धि , यथा 'वारण्डेन मुने कन्या वनखण्ड लिपिक्षति' । पैट इति पक्षम् । दोपैतरे इति दोषाभ्यसिन् । सूपकारे इति लोक सूआर । शुंम्बे इति रज्जौ, लोके दोरा । वृकोदरे इति भीमे यथा 'धृतराष्ट्रोऽपि गुणप्रिय ' अत्र हि विरोधाभासे गुणश—दन विराटगृहे सूपकारत्वात् भीमसेन उच्यते । सन्ध्यादौ इति सन्धिविग्रहयानासनद्वैधीभावसश्रये । शुक्लादौ इति शुक्लादयो वैशेषिको क्ताश्चतुर्विंशतिरत्र । शौर्यादौ इति शौर्यगाम्भीर्यस्थैर्यादयस्तत्र । सत्त्वादौ इति सत्त्वरजस्तमासि तत्र । यौवक इति अलवओ । गैवेधुकाया इति वरटीधान्ये ॥ ९ ॥ पैटवास इति येन कुङ्कुमचूर्णादिना कृत्वा पटो वास्यते तद्द्रव्यम्, लोके पडवासओ । प्रकारे इति भेदे । विषय इति गोचरे, यथा 'इन्द्रियाणीन्द्रियार्थेषु । वित्तमिति द्रव्यम् । कारणमिति हेतु । अभिधेयेऽपि शब्दानामिति—शब्दाना वाक्षि, लोकोत्तया अरथ, यथा 'वागर्थाविव सम्पृक्तौ' । निवृत्तौ इति निवर्तने । यथा मशकार्थो धूम , मशक निवृत्तये इत्यर्थ ॥ तैलादिसस्थानविशेष इति लोके पुम्पोटा, आदिश—दाद् घृततैलादेरपि । विषय इति देश । करद(दी)श्चेति [ करदश्च कुटुम्बी इति कर राज्यग्राह्य ददातीति करद , करदाता हालिक इत्यर्थ ] जवणओ इति प्रसिद्धि (?) । गैन्धके इति लोके गन्धप इति प्रसिद्धि । आमोदे इति परिमले । लेशे इति

गन्धक पर्वत॰ नवनीत गुल्मादिरित्यापि ॥ स्कन्ध 'प्रकाण्डेऽसे नृपे स्कन्ध काये व्यूहसमूहयो ' ॥ अगाध विवरम् । निलनामत्वान्नपुंसकत्वे प्राप्तेऽस्य पाठ । अस्थाघाल-ङ्कृतयोस्तु गुणवृत्तित्वादाश्रयलिङ्ग । यद्गौडः—'अगाधाऽस्थाघमस्थागमस्ताघमतलस्पृशि' ॥ बुद्बुदगदमित्यत्र, जनपदगन्धमृकन्वमित्यत्र च समाहार ॥ १० ॥

अर्द्धसुदर्शनदेवनमह्नाऽभिजनजनाः परिघातनफेनौ ।
पूपापूपौ सूपकलापौ रेफः शोफः स्तम्बनितम्बौ ॥ ११ ॥

एते शब्दा पुंल्लिङ्गा । अर्द्ध खण्डम् । ग्रामार्द्ध , अर्द्ध पटी, अर्द्ध नगरम् । समांशे नपुंसकत्वस्य वक्ष्यमाणत्वाद्विषमांशवृत्तिरिहार्द्धशब्द ॥ अथ नान्ताः सप्त—सुदर्शन —विष्णु-चक्र शक्रपुर च, मेरुजम्व्वा तु स्त्रीपुंसलिङ्गो वक्ष्यते ॥ गौडस्तु—'आज्ञौषधभिदो स्त्री स्याद्विष्णोश्चक्रे सुदर्शन । महेन्द्रनगरे क्लीब' मित्याह ॥ देवन अक्ष । क्रीडाव्यवहारवि-जिगीषासु तु नान्तत्वान्नपुंसकत्वमेव ॥ अह इति 'सङ्ख्यात॰' (७।३।११७) इति 'सर्वांश॰' (७।३।११८) इति च कृतसमासान्तोऽह्नशब्द । सङ्ख्यातमह सङ्ख्याताह , सर्वमह सर्वाह्न , पूर्वमह पूर्वाह्न । एव सायाह्न , प्रारम्भो मध्य चाह्न प्राह्न मध्याह्नः । अपराह्नस्तु पुन्नपुंसको वक्ष्यते । परवल्लिङ्गतापवादोऽह्नस्य पाठ ॥ अभिजन 'कुले ख्याता-वभिजनो जन्मभूम्या कुलध्वजे' । जन॰ लोक । परिघातन —अयोबद्धो लगुड ॥ फेन डिण्डीर , अर्थप्राधान्याद्बिधिकफ इत्यपि ॥ अथ पान्ताश्चत्वारः—पूपोऽपूपश्च—भक्ष्यभेद ॥ सूप मुद्गादिविकार , सूपकारे तु देहिनामत्वात्सिद्धम् । अर्थप्राधान्यात्सूद इत्यपि । यद्गौड —'व्यञ्जने सूपकारे च सूद सूपवदिष्यते' । पूपादीनामन्ननामत्वेन नपुंसकत्वे प्राप्ते पाठ ॥ कलाप 'कलाप संहतौ[10] बर्हे[11] काञ्च्या भूषणतूणयो ' । पिच्छनामत्वान्नपुंसकत्वे प्राप्तेऽस्य पाठ ॥ अथ फान्तौ—रेफ अवद्यम्, वर्णविशेषे तु विषयनामत्वेनैव पुंस्त्वम् । शोफ श्वयथु ॥ अथ बान्ताश्चत्वार—स्तम्ब —आलानम्, व्रीह्यादीना प्रकाण्डविशेषश्च । तत्र चार्थप्राधान्याद्गुच्छोऽपि ॥ नितम्ब 'स्त्रियाः पश्चात्कटौ सानौ नितम्ब कटिरोधसो ' । द्वे (१०—११) अप्यापातलापरान्तिके ॥ ११ ॥

शम्बाम्बौ पाञ्चजन्यतिष्यौ पुष्यः सिचयनिकाय्यरात्रवृन्नाः ।
मन्त्रामित्रौ कटप्रपुण्ड्राराः कल्लोलौल्लौ च खल्लतल्लौ ॥ १२ ॥

---

अल्पे, यथा 'जलदगन्धिरराजत सानुमान्' । अत्र हि जलदाना गन्धोऽल्पस्त्व यत्र स जलदगन्धि 'वाल्पे' (७।३।१४६) इति इत्समासान्त । प्रकाण्डे इति वृक्षजङ्घायाम् । व्यूह इति सैन्यरचनाविशेष , यदाह 'व्यूहस्तु बलविन्यास ' इति । अस्थाघ इति लोके अथाघ ॥ १० ॥ शक्रपुरमिति अमरावति । ख्यातौ इति कीर्त्तौ । भक्ष्यभेद इति लोके पूवा । मुद्गादिविकार इति प्रहितम् । सूपकार इति भक्तकार , लोके सूआर इति प्रसिद्ध । व्यञ्जने इति प्रहितनाद्वि । संहतौ[10] इति समूहे । बर्हे[11] इति पिच्छे । काञ्च्यामिति[12] कटि-मेखलायाम् । तूण[13] इति भाथओ । [14] । व्रीह्यादीनां[15] प्रकाण्डविशेषश्चेति-धान्य वृक्षादीनां जङ्घाविशेषः । स्त्रियाः[16] पश्चाद्भागे । कटिरिति[17] पुरुषस्यापि श्रोणि । शेषं ३२

एते शब्दा पुंल्लिङ्गा । शम्य मुसलाग्रसो लोहमण्डलक । अशो तु सग्रामत्वादेव पुंस्त्वम् ॥ अम्य' सेरकादीनाम् ॥ अथ यान्ता षड्—पाञ्चजन्यः—विष्णुशङ्ख पोटगलश्च ॥ तिष्य पुष्यश्च—कलियुगम्, नक्षत्रे बहुल ग्रभेदेनानेन मांसविशेषे तु मासनामत्वात्पुंस्त्वम् ॥ सिचय वस्त्रम्—अनुक्तनामत्वेन नपुंसकत्वे प्राप्तेऽस्य पाठ । निकाय्य निवास ॥ अथ रान्ताः सप्त—रात्र इति 'सङ्ख्यावेक०' (७।३।११९) इति 'सङ्ख्यास०' (७।३।९७) इति च कृतसमासान्तो रात्रिशब्द । पुण्या रात्रि पुण्यरात्र । वर्षारात्र दीर्घरात्र चिररात्र पूर्वरात्र अपरात्र अर्द्धरात्र अहोरात्राविमौ । एकत्वसमाहारे च पुंनपुंसकौ वक्ष्यते । परवल्लिङ्गतापवादोऽस्य पाठ ॥ सूत्र' 'सूत्रो रिपो घने ध्याते शैले शक्रे च दानवे' । ध्वान्तार्थं आरम्भ ॥ मन्त्र —मन्त्रादिलक्षण पाड्गुण्यसमर्थना आर्षश्च ॥ अमित्र वैरी—अरिनामत्वादेव सिद्धे सयुत्तरान्तलक्षणनपुंसकत्वबाधनार्थमस्य पाठ' ॥ षण्ड समूह । पुण्ड्र 'पुण्ड्रो दैत्यविशेषेक्षुभेदयोरतिमुक्तके । चिन्ने कृमौ पुण्डरीके पुंसि भूम्नि नीवृति' ॥ आर आरकूट । द्रव्यनामत्वान्नपुंसकत्वे प्राप्तेऽस्य पाठ ॥ अथ लान्ताः पञ्चविंशतिः—कल्लोल तरङ्ग, तरङ्गेऽर्थप्राधान्यादुल्लोलोऽपि । ओल सूरण । यद्गौड — 'आर्द्रसूरणयोरोल' । राल 'कृतो वस्त्रभेदे ना रालो निम्ने च वातपे' । रालो ध्यादल-पादायमर्दनास्यरजि स्त्रियाम्' ॥ तल्ल तडागविशेष ॥ औपच्छन्दसकम् ॥ १२ ॥

कण्डोलपोटगलपुद्गलकालबालवेला गलो जगलहिङ्गुलगोलफालाः ।
साद्वेलो बहुलतण्डुलपत्रपालवातूलतालजङ्गला भूमलो निचोलः ॥ १३ ॥

एते शब्दा पुंल्लिङ्गा । कण्डोल —पिटकाख्य भाजनम् । पोटगल —काश नडश्च । पुद्गल —परमाणु देह आत्मा च ॥ काल 'कालो मृत्यौ महाकाले समये यमकृष्णयोः । कृष्णनिवृति माला च नीलीमञ्जिष्ठयोरपि ॥ काली गौर्या क्षारकीटे कालिनामाष्टभेदयो । नैवाम्बुवाहवृन्दे च परिवादेऽपि च क्वचित्' ॥ बाल अश्वकरिबालधि । मुंढो [illegible] बालुकबालिकयाम् । यद्गौड —'ना बाल कुन्तले दन्तान्लघोटकवालधौ । बाल्यलिङ्गोऽर्भके मूर्खे

इति कुलम् ॥ ११ ॥ सेरकादीनामिति—'सरको मदिरापात्रे मदिरापानसद्मनो.' इति ... शब्दा इत्यर्थ । पोटगल इति काश । कलियुगमिति अत्र युगम् । मांसविशेषे इति तिष्यपुष्यशब्दौ पौषमासे इत्यर्थ । घने इति मेघे । ध्वान्तार्थं आरम्भ इति ध्वान्तनामानि क्लीबे, तेन सूत्रशब्दस्य क्लीबतावाधनार्थं पुंल्लिङ्गे पाठ इत्यर्थ । पाड्गुण्यसमर्थनेति—सन्धिविग्रहादीनां गुणानां समर्थना । इक्षुभेद इति श्वेतेक्षुः । अतिमुक्तके इति इति अमीतओ । चिन्ने इति तिलके, लोके टीकउ । कीटे । पुण्डरीके इति श्वेतकमले । भूम्नि नीवृनीति पुण्ड्रशब्दो नीवृति देशे इत्यर्थ । आरकूट इति पित्तल । कृतौ इति चर्मणि ॥ १२ ॥ पिटकाख्य भाजनमिति इति वा प्रसिद्धिः । नड इति लोके नलु इति प्रसिद्धि, ... नड नट । आरण्यनलको रथ्री पोटगलो धिमीपण' इत् ... इति मरणे पदे । कृष्णनिवृतीति कालीनिसोत । नीलीति ... क्षारकीटे कालीनामा कीटविशेषः । कालिकेति योगिनी । इति अपवादे । अश्वकरिबालधिरिति अश्वपुच्छ

ह्रीबेरे पुन्नपुंसकम् ॥ अलङ्कारान्तरे मेधी वाली वाला त्रुटिस्त्रियो' । केशेऽपि पुन्नपुंसको वक्ष्यते । स्वार्थिके के वाल्क शिशु, कान्तत्वात् पुंसि, वलयाङ्गुलीयकयोस्तु पुन्नपुंसको वक्ष्यते ॥ आवेल चर्विततांबूलम् ॥ गल सर्जरस (राल) । अर्थप्राधान्यात्कलकल इत्यपि । कण्ठे तु तन्नामत्वादेव पुंस्त्वम्, द्रवनामत्वान्नपुंसकत्वे प्राप्तेऽस्य पाठ ॥ जगल 'जगल पिष्टमद्ये च मेदके मदनद्रुमे' ॥ हिङ्गुल' हिङ्गुलु पुंस्यमरलिङ्गशेष. । गौडस्तु 'हिङ्गुल दारुद स्यादित्याह ॥ गोल सर्वतो वृत्त । बालक्रीडनकाष्ठे स्त्री, पत्राञ्जनादौ तु क्लीबो वक्ष्यते । यस्तु गोल एव गोलक इति स्वार्थिककप्रत्ययान्तो मृते भर्तरि जारजस्य वाचक स आश्रयलिङ्ग' ॥ काल कुशी । देवल देवतायतनम् । बहुल कृष्णपक्ष । यदाह 'बहुलः कृष्णपक्षेऽग्नौ शितौ च बहुला गवि । एलायां नीलिकायां च बहुला कृत्तिकासु च' ॥ बहुल प्रौञ्ज्यनभसो ॥ तण्डुल —विडङ्गम्, धान्यसारश्च, 'विडङ्गे तण्डुल पुंसि धान्यादिनिकरेऽपि च' ॥ पत्रपाल 'दीर्घा छुरी पत्रपाल' ॥ वातूल' वातसमूह, वातासहे उन्मत्ते चाश्रयलिङ्ग ॥ ताल 'गीतेकालक्रियामाने हरिताले द्रुमान्तरे । ताल करतलाऽङ्गुष्ठमध्यमाभ्यां च सम्मिते' । कैरास्फाले त्सरौ च गृहादिरक्षणाय लोहादिमययन्त्रे च ॥ जडुल —देहे कृष्ण लक्ष्म । भ्रमल रोगविशेष ॥ निचोल निचुलकम् । यद्गौड 'निचोल स्यान्निचुलकम्' । उपसर्गस्यातश्चत्वाचोल । स्त्रीणा कृपासकश्चोल ॥ वसन्ततिलकम् ॥१३॥

कामलकुद्दालानयवस्वाः सुवरौरवयावाः शिरदार्वौ ।
माधवपणवादीनवहावभ्रुवकोटीशाशाः स्पशवशौ ॥ १४ ॥

एते शब्दा पुंल्लिङ्गा । कामल 'मरौ रोगेऽवतसे ना कामलस्त्रिषु कामुके' ॥ कुद्दाल खनित्रविशेष ॥ अथ वान्ता द्वादश—अवयव —अङ्गम स्व आत्मा स्वभाव ज्ञातिश्च, अर्थे ▯ पुंनपुंसको वक्ष्यते, आत्मीये तु गुणवृत्तित्वादाश्रयलिङ्ग, गौडस्तु 'स्वो ज्ञातावात्मनि क्लीबे त्रिष्वात्मीये स्त्रिया धने' इत्याह ॥ सुव सुग्भेद । यद्गौड —'स्रुग्भेदे ना स्रुवा

अलङ्कारान्तरे इति कर्णाभरणविशेषे लोके वाली इति प्रसिद्धि । मेधी इति खलमध्यगते धान्यकीले । वलयाङ्गुलीयकयोरिति कङ्कणमुन्दडी इति प्रसिद्धयो । मेदके इति मद्यपङ्के मेभड इति प्रसिद्धे । मदनद्रुमे इति मयणहल इति प्रसिद्धे । बालक्रीडनकाष्ठे इति येन शिशव क्रीडन्ति तस्मिन् काष्ठे लोके गुली इति प्रसिद्धि । पत्राञ्जनादौ इति खापरियाकूल; आदिशब्दात् मन शिलादौ । शितौ इति कृष्णवर्णे । गवीति धेनौ । एलायामिति एल्ची इति प्रसिद्धायाम् । नीलिकायामिति गुलीनाम्न्या औषध्याम् । प्रौञ्ज्यनभसोरिति प्रचुराकाशयो । विडङ्ग इति वायविडङ्गनामौषधम् । धान्यसार इति निस्तुषो व्रीह्यादि । वातासहे इति वातमासहते इति महेराद्भृश्लेप, वात न सहते इत्यर्थे ▯ ऊलप्रत्ययो बाहुलकात् । गीते कालक्रियामाने इति गीते काल (स्य ?) क्रियया आचप्यादिकाया मान परिच्छेदक चतुष्पुटिकादि, तत्र । हरिताले इति धातुभेदे हरियाल इति प्रसिद्धे । द्रुमान्तरे इति ताडनाम्नि । करतले इति लोके हथाली । अङ्गुष्ठमध्यमाभ्या च सम्मिते इति अङ्गुष्ठमध्यमाङ्गुलिकृत मा तत्र । कैरास्फाले इति लोके ताली । त्सरौ इति खड्गादिमुष्टौ । गृहादिरक्षणाय लोहादिमये यन्त्रे इति ताल्भो इति प्रसिद्धे । निचुलकमिति उत्तरणा साट पछेवडी इति वा । स्त्रीणां कृपासक इति काचली ॥ १३ ॥ मरौ इति निजले देशे । रोगे इति कमलभो इति प्रसिद्धे । अवतसे ˜ शेखरे । अर्थे इति द्रव्ये । स्रुग्भेद इति सरूआ ।

दिवेष्टनञ्च कौटिल्यं वैर रोगविशेषश्च, प्रन्थिपर्णे तु तन्नामत्वान्नपुंसकम् ॥ कुक्षिः जठरम् ॥ इति -चर्म्म चर्म्मप्रसेवकश्च । अंगारिकगिरतोऽयम् । सयन्तम्बु कपुंस्त्व इति स्त्रीत्वमेव ॥ अर्द्दी अग्निः, अश्वश्च । ध्वनिः प्रतीयमानोऽयं, शब्दे तु विषय-नामत्वादेव पुंस्त्वम् । कृष्णिपृष्णोर्य तत्वादभिवह्नयोर्न्य तत्वादर्दरिन्य तत्वा कृमेर्यं तत्वात्पाणिनु स्त्रीणां प्राण्यङ्गत्वादिन्तत्वात् स्त्रीत्वे, धीदिवेश्च नामत्वान्नेश्च पुन्नामत्वान्नपुंसकत्वे प्राप्ते वचनम् ॥ रथोद्धता ॥ १६ ॥

गिरिशिशुजायुकर्पा हाहाहूहश्च नमहर्गर्मुत् ।
पादश्मानात्मा पाप्मक्ष्मोष्मयक्ष्माण ॥ १७ ॥

एते शब्दा पुल्लिङ्गा ॥ 'गिरिर्गोर्णौ गिरियके मीडागुडश्च दौव्ययो । नेत्रामयविशेषेऽपि पूज्ये तु गिरिरन्यवत्' ॥ अथोदन्ताः-शिशु श्रोत्रम्-रायुकरत्वान्तत्वान्नपुंसकत्वे प्राप्तेऽस्य पाठ । जायु औषधम् ॥ अथोदन्तास्त्रयः-कर्पु करीषाग्नि । नदीपाचिनरतु तन्नामत्वात्स्त्रीत्वमेव । जायोर्भेषजनामत्वान्नपुंसकत्वे, कर्पूरुच्य तु ऊदन्तत्वात्स्त्रीत्वे प्राप्ते वचनम् । हाहाहूह द्वयगायनौ ॥ एकमेवेन्यन्तण्ड नाम । हाहाश्च हूहश्चेत्यन्ये खण्डयन्ति । अव्ययत्वादलिङ्गावेताविति केचित् । गन्धर्वे च हाहाहूहूरिति तु छद्वयम् । एवदेनाविट्तम्यानन्यत्वादप्राधान्याद्वा निर्देशस्य सदरि मक्कृद्वीाम् । देह्निनामत्वादेव पुंस्त्वसिद्धौ विंमतिविमापनार्थं हूहूरितास्य सूत्र इति स्त्रीत्वबाधनार्थ च वचनम् ॥ नमहु -मापदलन्यादि सुदानीनम्, अर्थप्राधान्यान्नमहुरित्यपि । अभ्रनामत्वान्नपुंसकत्वे प्राप्ते वचनम् । नम्रान् हयतीति व्युत्पत्तिप्राधान्ये त्वाश्रयलिङ्गतैव ॥ अथ व्यञ्जनान्ता अष्टौ-गर्मुत् सुवर्णम्, सैरघा च, द्रव्यनामत्वान्नपुंसकत्वे सरघानामत्वात् स्त्रीत्वे प्राप्तेऽस्य पाठ ॥ पाद् चरण -दन्तोऽयम् ॥ अश्मा पाषाण उपलक्षणत्वाद्धेमलोऽपि । यद्गौड -'हेमलश्चैकलासे ना स्वर्णकारे शिलान्तरे' ॥ आत्मा-स्वभाव शरीरम् यत्न मन धृति बुद्धि, ब्रह्म जीवश्च, स्वभावे चायप्राधान्यात्सहज इत्यपि ॥ पाप्मा-पापम्, रोगश्च । क्ष्मा स्थैर्यम्, इमन्नन्तादेव सिद्धे द्विस्वर मन्न कतरीति नपुंसकत्वबाधनायास्य पाठ । ऊष्मा सन्ताप समृद्धिश्च । यक्ष्मा क्षयरोग, तदन्तत्वाद्राजयक्ष्मापि । अश्मादीनामन्नन्तत्वेन नपुंसकत्वे प्राप्ते वचनम् । एव शेषष्वपि लिङ्गेषु स्वरव्यञ्जनान्तक्रमो ज्ञेय । पथ्यार्या ॥ १७ ॥

इति पुल्लिङ्ग समाप्तम् ॥

प्रसिद्धि । ओदने इति भक्ते । रैखवादिवष्टनवन्ध इति, लोके गाठि । वैरीरिति चशापस्य मदाहु । 'ग्रन्थि पर्व पर । प्रन्थिपर्ण इति सुगन्धिद्रव्ये । चर्मप्रसेवक इति कीयडो । १६ ॥ गीर्णौ इति भक्षणे । गिरियके इति गिरिगुडे, लोके गेडियभो इति प्रसिद्धे । क्रीडागुडक इति दडभो । नेत्रामयविशेषे इति लोके गीड, फीहा इति वा प्रसिद्धे । करीषाग्निरिति छगणाग्नि । विंमतिनापनार्थमिति विविधा मतिर्विमतिस्तस्य ज्ञापनार्थम् । सरघेति मधुमक्षिका । एकलासे काकीडो । शिलान्तरे इति पाषाणभेदे । ब्रह्मेति तत्त्वरूपम् ॥ १७ ॥

इति श्रीज्ञानविमलोपाध्यायशिष्यवाचनाचार्यश्रीवल्लभगणिविरचिते श्रीहेमचन्द्रविरचितलिङ्गानुशासनवृत्ति-दुर्गपदप्रबोधे पुल्लिङ्ग समाप्तम् ॥ १ ॥

स्त्रीलिङ्गं योनिमद्वध्रीसेनावल्लितडिन्निशाम् ।
वीचितन्द्राऽरड्डुग्रीवाजिह्वाशस्त्रीदयादिशाम् ॥ १ ॥

नामेति स्मर्यते ॥ योनिमदादीनां नाम स्त्रीलिङ्गं भवति । योनिमन्नाम. स्त्री पुरुषी रामा । वामा, सव्यादिषु त्वऽस्य यथाप्राप्तमेव । यदाह 'वाम सव्ये प्रतीपे च द्रविणे चातिसुन्दरे । पयोधरे हरे कामे विद्याद्वामामपि स्त्रियाम् ॥ वामी सृगालीवडवारासभीकरभीषु च' । नारी, भीरू, योषा, योषित्, अङ्गना, कान्ता, पुरन्ध्री, देवी, इन्द्राणी, उर्वशी, रम्भा, तिलोत्तमा, मानुषी, ब्राह्मणी, क्षत्रिया, वैश्या, शूद्रा, हस्तिनी, वशा, धेनुका, अश्वा, धूपीधवल्यौ । गौडस्तु–'धवला गवि ना षण्डे शुद्धसुन्दरयोस्त्रिषु' इत्याह । लुलाया, कपी, मकरी, मत्सी, सूकरी । सृगाली, अय तालव्यादिरपीति गौड' । शुनी, व्याघ्री, सिंही, मृगी, ऋष्यी, मर्कटी, कपी, कुक्कुटी, मयूरी, चक्रवाकी, चकोरी, हंसी, काकी, मूषीत्यादि ॥ वध्रीनाम. वध्री, वर्द्धि, उपदेहिकेत्यादि ॥ सेनानाम. सेना, चमू, पृतना, वाहिनी, अनीकिनी, वरूथिनीत्यादि । सेनाभेदोऽपि पत्त्यादिरक्षौहिण्यन्त सेना । 'एकेभैकरथा त्र्यश्वा पत्ति पञ्चपदातिका । स्यात्सेनाऽक्षौहिणी नाम खाऽङ्गाष्टैकद्विकैर्गजै । रथैरेभ्यो हयैस्त्रिघ्नै पञ्चघ्नैश्च पदातिभि' । पदातौ तु पत्ति प्राणिनामत्वात्पुंसि । बलसैन्यचक्रानीकसेनामुखगुल्मगणाश्चापवादविषय । वल्लिनाम. वल्ली, अजमोदाया त्वस्य बाहुल्यकात्स्त्रीत्वम् । लता, प्रतानिनी, वल्लरी, प्रतति, व्रतति । तद्विशेषोऽपि वल्ली कोशातकी । इक्ष्वाकुकटुतुम्ब्यौ । त्रपुसी, पिप्पली, कणा, कृष्णा, उपकुल्या, वैदेही, मागधी । यूथिकाया त्वऽस्य शिंशपादित्वात्स्त्रीत्वम् । गुडूची, कूष्माण्डी इत्यादि ॥ तडिन्नाम. तडित्, । शम्पा–अय दन्त्यादिरपि । चपला, क्षणिका, विद्युत्,

---

॥ अथ स्त्रीलिङ्गवृत्तौ दुर्गमपदार्थो व्याक्रियन्ते ॥

पुरुषीत्यत्र 'जातेरयान्तनित्यस्त्रीशूद्रात्' (२।४।५४) इति सूत्रेण ङी । अस्येति वामशब्दस्य, । सव्ये इति दक्षिणेतरे । प्रतीपे इति प्रतिकूले । द्रविणे इति धने । पयोधरे इति स्तने । हरे इति महादेवे । वामीत्यत्र गौरादित्वात् ङी । धूपीधवल्यौ इति गोनाम्नी गौरादित्वात् ङी । षण्डे इति वृषभे । लुलायेति महिषी । वध्रीति (वम्रीति?) लोके उदेही तन्नाम । एकेभेत्यादि व्याख्या–एकेभा एकहस्तियुक्ता, एकरथा एकरथयुक्ता, त्र्यश्वा अश्वत्रययुक्ता, पञ्चपदातिका पञ्चपदातियुक्ता, सेना पत्ति स्यादिति शेष । खाङ्गाष्टैकद्विकै, एकविंशतिसहस्राष्टशतसप्ततिप्रमितैर्गजै । च पुनरथै । एकविंशतिसहस्राष्टशतसप्ततिप्रमितै रथै । एभ्यो गजेभ्यस्त्रिघ्नै वारत्रय गुणिते पञ्चषष्टिसहस्रषट्शतदशप्रमितैरश्वैरस्त्यथ । च पुन । पञ्चघ्नै, गजेभ्य पञ्चवार गुणितै । एकलक्षनवसहस्रशतत्रयपञ्चाशत्प्रमितै पदातिभि । अक्षौहिणी नाम सेना स्यात् । यदुक्तम् 'पत्त्यङ्गैस्त्रिगुणै सर्वै क्रमादाख्या यथोत्तरम् । सेनामुख गुल्मगणौ वाहिनी पृतना चमू । अनीकिनीदशगुणामाहुरक्षौहिणीं बुधा' इति । बलसैन्यशब्दौ नपुंसकौ । चक्रानीकशब्दौ पुन्नपुंसकौ । सेनामुखमिति गजत्रयरथत्रयाश्वनवकपदातिपञ्चदशकमित सेनाभेद । गुल्म इति नवगजनवरथसप्तविंशदश्वपञ्चचत्वारिंशत्पदातिप्रमित सेनाभेद । गण इति सप्तविंशद्गजसप्तविंशद्रथैकाशीत्यश्वैकशतपञ्चत्रिंशत्पदातिप्रमित सेनाभेद एव । अजमोदायामिति अजमोदानामौषध्या वृक्षनामत्वात् पुंस्त्वे प्राप्ते । कोशातकीति लोके घीसोडी । इक्ष्वाकुकटुतुम्ब्यौ इति एतौ एकार्थौ खारीतुम्बिणीवाचकौ । त्रपुसीति

दिद्युत् । ऐरावती, शतह्रदा, सौदामनी–एते त्रयस्तद्विशेषा अपि ॥ अन्त्या द्वावप्सर स्वपि इत्यादि ॥ निशानाम. निद्, निशा, तुङ्गी, तमी, तमा, उषा, दोषा दोषेत्यव्ययमपि । उषा तु निशान्तेऽव्ययम् । रम्या । शर्वरी, क्षिया [ ] योनिमन्नामत्वास्मिद्धम् । त्रियामा, यामा, यामिनी, रजनी रजनि । तमोयुक्ता तमिस्रा । ज्योत्स्नायुक्ता ज्योत्स्नी ज्योत्स्ना चेत्यादि ॥ नक्तशब्दस्तु स्त्रीनपुंसको वक्ष्यते ॥ नक्तमिति मन्तमव्ययमपि ॥ वीचिनाम वीचि, उत्कलिका, लहरी, भङ्गिरित्यादि ॥ तरङ्गोल्लोलकल्लोलाना पुंस्त्वमुक्तम् । ऊर्मिस्तु स्त्रीपुंसत्व वक्ष्यते ॥ तन्द्रानाम. तन्द्रा, तन्द्रि, तन्द्री च, निद्राया इस्य कृत इत्येव स्त्रीत्वम् । प्रमीला । इन्द्रियस्थानवेत्यादि ॥ अवटुनाम घाटा, कृकाटिकेत्यादि । अथ-टोस्तु स्त्रीपुंसत्व वक्ष्यते ॥ ग्रीवानाम ग्रीवा, अयं तत्सिरायामपि । कन्धरा, शिरोधरे-त्यादि ॥ शिरोधेस्तु प्रतिपन्नपाठात् स्त्रीत्वम् ॥ जिह्वानाम जिह्वा रसज्ञा रसना, लोला ललनेत्यादि, रसा च । यदाह–'रसा तु सैहली पाठा जिह्वाधरणिकङ्गुषु । रसो गन्ध-रसे स्वादे तिक्तादौ विपरागयो ' ॥ शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारते' । रसनस्य तु स्त्रीनपुंसकत्व वक्ष्यते ॥ शस्त्रीनाम. शस्त्री, असिपुत्री, क्षुरिका, छुरिका, धेनुका, अल्ली, असिधेनुरित्यादि ॥ दयानाम. दया, घृणा, करुणा, अनुकम्पेत्यादि ॥ अनुक्रोशो घन-न्तत्वात्पुमान् । कारुण्य तु सयुक्तयान्तत्वान्नपुंसकम् ॥ दिङ्नाम दिश्, आशा । गन्धे तु रुयुक्ता इत्येव स्त्रीत्वम् । काष्ठा, ककुप् । अय शोभायामपि स्त्री । हरित्, सूर्याश्ववाचित्वे त्वस्य देहिनामत्वात्पुंस्त्वम् । दिग्भेदोऽपि विशेष । ऐन्द्री प्राची, याम्या अवाची, वारुणी प्रतीची, उत्तरा उदीची, दक्षिणपूर्वा, दक्षिणपश्चिमा, उत्तरपश्चिमा उत्तरपूर्वेत्यादि ॥ विपुलावृत्तम् ॥१॥

शिखावा नदीवीणाज्योत्स्नाचीरीतिवीथियाम् ।
अङ्गुलीकलशीकद्रुहिङ्गुपत्नीसुरानसाम् ॥ २ ॥

---

काकडी 'तेडसी नामी । अंसेति मागधीशब्दस्य । तद्विशेषा इति विद्युद्विशेषा । अन्त्या द्वौ इति शतह्रदा–सौदामिनीशब्दौ । निशान्ते इति प्रभाते । क्षियामिति–शब्दरीशब्दो नायाम् । तमोयुक्तेति लोके अन्धारीरात्रि । ज्योत्स्नायुक्तेति लोके उजवालीरात्रि । वीचीनामेति कल्लोलनाम । तन्द्रानामेति आलसनाम धंघास्तु तन्द्राशब्देन मीठि इत्याहु । यदाहुस्तल्लक्षणम्–'इन्द्रियार्थेष्वसम्प्राप्य गौरव जृम्भण क्लमः । निद्रात्तस्येव दृश्यन्ते सा [ ] तन्द्राऽभिधीयते' ॥ १ ॥ अवटुनामेति ग्रीवापश्चाद्भागनाम लोके मोकडी । अय तत्सिरायामपीति–अय ग्रीवाशब्द कन्धरा धमन्यां ग्रीवायां अग्रभागे नाड्यामित्यर्थ । यदाहु –'ग्रीवाऽपि कन्धराया स्यात्तत्सिरायामपीष्यते । सैहलीति सालरिनामा वृक्ष । पाठेति पाठ नाम्नी भोपधि । यदाह–पाठाम्बष्ठाम्बष्ठकी चेत्यादीति । गडनाम्नी ओषध्यपि । यदाहु । राजा शुक्रसा रसा श्रेयसा रसना रसा' इति । धरणिरिति भूमि । कङ्गुरिति काङ्गनाम धान्यम् । गन्धरसे इति बीजाबोल इति प्रसिद्धे । स्वादे इति आस्वादे । तिक्तादौ इति तिक्तादयस्तिक्तम्ला म्लकटुलवणोष्णकषायास्तत्र । रागे इति अनुरक्ति । देहधातुरिति 'रसासृग्मांसमेदोऽस्थिमज्जाशुक्राणि धातव ' इति रण । शस्त्रीनामेति छुरी नाम । गन्धे इति घाछायाम् । अयमिति ककुप्शब्द । अंसेति हरित् शब्दस्य । ऐन्द्री प्राचीति पूर्वदिग्नाम्ना । एव याम्या अवाची दक्षिणादिक् । वारुणी प्रतीची पश्चिमादिक् । उत्तरा उदाची उत्तरादिक् । दक्षिणपूर्वा आग्नेयी विदिक् । एव दक्षिणपश्चिमा

शिंशपाद्यो नद्यादीनां च नाम स्त्रीलिङ्गम् । शिंशपादि. शिंशपा वीरुन्पाटले, विडा, फल्गुकाकोदुम्बरिके सुरसुहौ निर्गुण्डी झिण्टी जंम्बू श्रीपर्णीभद्रपर्ण्यौ, गिरिकर्णी वैदरी, एली सूक्ष्मैला थौसा, तिन्तिडी निन्तिडीका चिञ्चा अम्लिका, सिंधका सारिका, नांदेयी । विलोमी, प्रतीपादौ रनस्य यथाप्राप्तमेव । यदाह—'विलोमस्तु प्रतीपे स्याद्भुजङ्गे वरुणे शुनि । आमलक्यां निलोमी च विलोम चांऽरघट्टके । धांतकीकुञ्जरे, हैमवती वेवरी पथ्या, हिमजा, श्रेयसी, शिवा, शेफालिका विशल्या दन्ती रोहिणी कटुरोहिणी, नीली यूथिका नवमालिकेत्यादि ॥ शिंशपादिराकृतिगण । तरुनामत्वात्पुंस्त्वे प्राप्तेऽस्य पाठ । नदीनाम. नदी धुनी निम्नगा आपगा कर्पू । तद्भेदोऽपि नदी गङ्गाकिरातौ भोगवती गोदावरी नर्मदा । रहस्या, गोप्ये स्वयमाश्रयलिङ्ग । यमुना कावेरी सिप्रास्तमे । विपाट्विपाशे इत्यादि ॥ अधृष्या च, प्रगल्भेत्वऽयमाश्रयलिङ्ग । तथा आग्नेयी

---

नैर्ऋतविदिक् । उत्तरपश्चिमा वायवी विदिक् । उत्तरपूर्वा ऐशानी विदिक् ॥ १ ॥ शिंशपेति सीसमि ॥ वीरुत्पाटले इति एतौ शब्दौ पाडलीनामवृक्षवाचकौ । यदाह 'अथ द्वयो । पाटलि पाटला मोघा काला स्थाली फलेरुहा । कृष्णवृन्ता कुबेराक्षी'ति । विडेति ओषधिविशेष । फल्गुकाकोदुम्बरिके इति कालुम्बरीवाचकौ । सुरसुहौ इति थोहरीनाम्नी । निर्गुण्डीति निगुण्डि ॥ झिण्टीति कण्टासेलओ । यदाह 'सैरेयक सहचरो झिंटी सहाचरश्च स । स तु रक्त कुरबक स्यात्पीतस्तु कुरण्टक । नीला आर्त्तगलो दासी बाणा ओदनपाक्यपी'ति । जम्बूरिति 'जम्बूमरतरङ्गिण्या द्वीपवृक्षविशेषयोरि'ति । श्रीपर्णीभद्रपर्ण्यौ इति सिनिमामा वृक्ष, यदाहु 'श्रीपर्णी काश्मरीकृष्णवृन्तिका मधुपर्णिका । गम्भारी सर्वतोभद्रा कश्मला भद्रपर्णिके'त्यादीति । श्रीपर्णीशब्देन सीम्बलिनामा वृक्षोऽप्युच्यते । मदनेकार्थे । 'श्रीपर्णी शाल्मली हठे' इति । कट्फलेऽपि श्रीपर्णीशब्द । यदाहु 'कट्फल सोमवल्कश्च श्रीपर्णी कुमुदा तथे'ति । भद्रपर्णीशब्देन प्रसारणीनाम्नी ओषधिरपि । यदाह 'प्रसारणी सुप्रसरा सरणी सारणी च सा । चारुपर्णी राजबला भद्रपर्णी प्रतानिके'ति । गिरिकर्णीति श्वेतगिरणई कालीगिरणइ च । यदाह 'अश्वखुर श्वेतपुष्पी श्वेता च गिरिकर्णिका । कटभी श्वेतनामा च श्वेतस्यन्दाऽपराजिता ॥ नीलपुष्पी महाश्वेता गिरिकर्णी गवादनी'त्यादीति । वैदरीति बदरीशब्द कोली कर्प्पासा च । यदाहु 'बदरी कोलिकर्प्पास्यो,' कोलिरिति लोके बोरि इति प्रसिद्धि । कर्प्पासी इति कपणि इति प्रसिद्धि । एला सूक्ष्मैलेति एलची । थौसेति आटरूषक । तिन्तिडीत्याद्याश्चत्वारोऽपि एकार्था, लोके आम्बिली । सिंधका सारिका इति 'एतौ वृक्षभेदौ' इत्यमरटीका । नांदेयीति जलवेतस जम्बू नारङ्ग कङ्कुष्ठ जपा च । यदाहु 'नादेयी नागरङ्गे स्यात् जपाया जलवेतसे । भूमिजम्ब्वा जयन्त्या च कङ्कुष्ठेऽपि समीर्यते' इति । विलोमीति आमलकी । प्रतीपे इति प्रतिकूले । भुजङ्गे इति सर्पे । शुनीति कुकुरे । अरघट्टके इति अरहट इति प्रसिद्धे । धातकीकुञ्जरे इति धाहडीवाचकौ । हैमवतीति हैमवत्याद्या शिवान्ता हरीतकीवाचका । शेफालिकेति निर्गुण्डीभेद । यदाह 'शेफालिका तु सुवहा निर्गुण्डी नीलिका च से'ति । शेफालिका पुष्पविशेष इति क्षीरस्वाम्याह । विशल्येति गुडूची । दन्तीति लोके दांती । रोहिणी कटुरोहिणी इति च लोके कडू इतीहैकार्थौ । नीलीति गुलीनाम्नी ओषधि । यूथिकेति लोके जूही । नवमालिकेति नीमाली । आह च 'वासन्ती प्रहसन्ती च सुवसन्ता वसन्तजा । क्षीर(क्षीर)कराशीतसवासासेव्या भ्रमरबान्धवा । ग्रीष्माभिसुरभिः कान्ता सुगन्धा नवमालिनी । … नेमाली नवमालिकेति' । असेति … इति गदानाम्नी । … इविते । …

'आत्रेयी पुष्पवत्या स्यान्नदीभेदे च ना ऋषौ' पिच्छिला च । शाल्मली शिंशपासिन्धुभेद-पोतकिकासु च' ॥ पिच्छिलाविज्जिले वद्वत् ॥ वीणानाम. वीणा घोषवती । तद्भेदोऽपि वीणा । विपञ्ची परिवादिनी वल्लकी महती चाण्डालिकेत्यादि । कच्छपी च । यदाह- 'कच्छपी वल्लकीभेदे डुली क्षुद्रगदान्तरे । मत्स्यविशेषे तु कच्छप कमठेऽपि च' ॥

ज्योत्स्नानाम कौमुदी ज्योत्स्ना, चन्द्रिकेत्यादि ॥ चीरीनाम. चीरुका, चीरी, भृङ्गारी, झिल्लिका झिल्लीकेत्यादि ॥ तिथीनाम. प्रतिपत्पक्षती । द्वितीया, अयं भार्यायामपि । तृतीया चतुर्थीत्यादि ॥ यावत्पञ्चदशी, पौर्णमासी, पूर्णिमा । सैवं पूर्णचन्द्रा राका । न्यूनचन्द्रा अनुमतिः । तथा अमावस्या, अमावास्या अमावसी । सैव दृष्टचन्द्रा सिनीवाली । नष्टचन्द्रा तु कुहू, कुहूश्च । तथा नन्दा भद्रा जया रिक्ता पूर्णा । दर्शस्य तु अकारान्तत्वात्पुंस्त्वम् । तिथेस्तु स्त्रीपुंस्त्वं वक्ष्यते । धीनाम । धी, धिषणा, प्रज्ञा, अनुष्टुप्, शेमुषी, । धीदा, कन्यायां तु योनिमज्ञामरपाल्लीत्वम् । मनीषेत्यादि ॥ अङ्गुलीनाम. करशाखा । तद्भेदोऽपि-प्रदेशिनी, मध्यमा, अनामिका, कनिष्ठेत्यादि । अङ्गुलिशब्दस्य करिकराग्रवाचिन इव तत्तु प्राण्यङ्गवाचीत्येव स्त्रीत्वम् । अङ्गुष्ठस्तु पुंलिङ्ग एव ॥ कलशीनाम. कलशी, गर्गरी, कर्करी, कुटमीया, गलन्तिका मन्थनीत्यादि । कङ्गुनाम कङ्गु । अयं मालायां पुंस्युक्त । कङ्गु, कङ्कु, प्रियङ्गु । अयं लताविशेषे शिशपादिवाची । पीततण्डुला इत्यादि ॥ हिङ्गुपत्रीनाम. हिङ्गुपत्री, माषपर्णी काम्बोजी, वल्कलखदिरयोस्तु शिशपादित्वात् । कारवी, वाष्पिका, कवरी, करजीरीत्यादि ॥ सुरानाम सुरा वारुणी । तरजा आसुति परिस्रुता । मद्य-अनुतर्ष-कश्य-कापिशायन-माध्वीक-माध्वीक हारहूराणां नपुंसकत्वम् । चषककसरकमैरेयमधुशीधूनां पुंनपुंसकत्वम् । कल्यकादम्बर्योस्तु स्त्रीनपुंसकत्वं शुण्डाशब्दस्य स्त्रीपुंस्त्वं च वक्ष्यते । माधवासवौ तु पुंलिङ्गावुक्तौ । मदिरा, हाला शुण्डा दैत्येत्यादि । चषके ऽप्ययं बाहुलकात्स्त्रियाम । नासानाम. नासा, नासिका, घोणा, शिङ्घिनी, गन्धवहा, आघ्रा, इत्यादि ॥ घ्राणशब्दस्तु नपुंसको वक्ष्यते । नक्रस्य तु बाहुलकान्नपुंसकत्वम् । यदाह-'नक्र कुम्भीरके नक्र नासायामम्बुदारणि' ॥ २ ॥

अरण्यशब्द । पुष्पवत्यामिति ऋतुमत्यां स्त्रियाम् । शाल्मलीति सीम्बडि । शिंशपेति शीसमि । सिन्धुभेद इति नदीभेद । पोतकिकेति दुग्धानाम वनस्पतिभेद । विज्जिले इति विल्लसणा आहारादि तत्र । परिवादिनीति सप्तभिः तन्त्रीभिः परिवादिनी । महतीति नारदवीणा । चाण्डालिकेति चण्डालानां वीणा । कच्छपीति सरस्वत्या वीणा । डुली इति काछवीति प्रतीतायाम् । क्षुद्रगदान्तरे इति महिल्या निद्राया रोगस्तत्र लोके विलाइ इति । ज्योत्स्नानामेति चन्द्रकिरणनाम । चीरीनामेति लोके तीतिमिरीनामा जीवविशेषस्य नाम । अयमिति द्वितीयाशब्द, भार्याया स्त्रिया, यदाह 'द्वितीया तिथिगेहिन्यो' । सैवेति पूर्णिमा । सैवेति अमावास्या । कङ्गुनामेति कङ्गुनाम धान्यस्य नाम । अयमिति कङ्गुशब्दः, अयमिति प्रियङ्गुशब्द । हिङ्गुपत्रीति लोके हिंगडथी तस्य नाम माषपर्णी । वल्कलखदिरयोरिति काम्बोजीशब्दो माषपर्ण्या श्वेतखदिरे च स्त्रीलिङ्ग । चषके इति सुरापानभाजने । अयमिति दैत्यशब्द । कुम्भीरके

रास्नाशिलावचालालाशिम्बाकृष्णोष्णिकाश्रियाम् ।
स्पृक्कापण्यातसीधाय्यासरघारोचनासुवाम् ॥ ३ ॥

रास्नादीनां नाम स्त्रीलिङ्गम् । रास्नानाम. रास्ना एलापर्णी सुनह्ना युक्तरसा रसा रसनी रसा श्रेयसीत्यादि ॥ नाकुली च । यद्बौड –'स्त्री चव्ये कुक्कुटीकन्दे रास्नायामपि नाकुली' । शिलानाम. शिला मनोगुप्ता मनोह्ना नागजिह्विका मन शिला नेपाला कुनटी गोला इत्यादि ॥ नेपाली च । यदाह–'नेपाली नवमालीमन शिलासुवहासु च' । वचानाम. वचा शतपर्विका गोलोमी जीवा पद्मगन्धा । उग्रगन्धा–शारिकाया स्वर्ऽस्य योनिमन्नामत्वात्स्त्रीत्वम्, शुके तु देहिनामत्वात्पुंसि । श्वेतवचा तु हैमवती । लालानाम. लाला सृणीका, स्यन्दनी इत्यादि ॥ शिम्बानाम. शिम्बा शिम्बि शमी शिमि., बीजकोशी इत्यादि ॥ जाङ्गली च । कपिञ्जले स्वर्ऽस्य देहिनामत्वात्पुस्त्वम् । कृष्णा कृष्णजीरकम् । तन्नाम–कृष्णा पिप्पली सुपवी कारवी पृथु काला उपकुञ्चिका उत्कुञ्चिका उपकालिका कुञ्चिकेत्यादि ॥ पृथ्वी च । यद्बौड'–'पृथ्वी पृथौ पृथिव्यां च स्वैक्पत्र्या कृष्णजीरके' ॥ राजिकापि कृष्णा । तन्नाम कृष्णा राजिका आसुरी इत्यादि ॥ पिप्पल्या तु वह्निनामत्वादेव सिद्धम् ॥ उष्णिकानाम. उष्णिका यवागू । श्राणा विलेप्या विलेपिका इत्यादि ॥ विलेपनी च । यद्बौड –'विलेपनी सुवेशा स्त्री तरलापि विलेपनी' । तरलस्तु स्त्रीनपुंसको वक्ष्यते ॥ श्रीनाम. श्री लक्ष्मी कमला पद्मा पद्मवासा राजीववासा हरिप्रिया क्षीरोदतनया मा रामा इन्दिरा इत्यादि ॥ स्पृक्का गन्धद्रव्यविशेष' । तन्नाम. 'मरुन्माला तु पिशुना स्पृक्का देवी लता लघु' । समुद्रान्ता वधू' । कोटिवर्षापि लङ्कोपिकेत्यपीत्यादि । ब्राह्मणी च ॥ पण्यानाम. पण्या कटभी पारापताह्वि. सुवर्णलता ज्योतिष्का अग्निभासा लवणा दुर्दिना ज्योतिष्मती इत्यादि ॥ अतसीनाम. अतसी कृष्णप्रिया चन्द्रिकाह्वा मसृणा क्षुमा उमा इत्यादि ॥ धाय्यानाम. धाय्या । सामिधेनी–अय समिधि धातुलकात्स्त्रियाम् । यद्बौड –'सामिधेनी समिध्यृचि ऋग्' इत्यादि ॥ सरघानाम. सरघा क्षुद्रा मधुमक्षिका । तत्प्रभेदोऽपि पुत्तिका पतङ्गिकेत्यादि ॥ रोचनेति गोरोचना वशरोचना च गृह्यते । तन्नाऽऽधानाम–'चन्दनीया तु रोचना । भूतघ्नी-

इति जलचरजीये । यदाह, 'नक्र कुम्भीर आलास्ये' इति । अश्मदारणीति दारणोऽश्म आधारभूत अश्मदार तत्र इत्यनेकार्थवृत्ति ॥ २ ॥ रासेति लोके राठ तन्नाम । चव्ये इति चविकानाम्नि औषधे । कुक्कुटीकन्दे इति रसोनभेदे इत्यनेकार्थवृत्ति, नउलीनाम्नी ओषधिरिति धन्वन्तरि; यदाह 'नाकुली सर्पगन्धा तु सुगन्धा भोगिगन्धिके'त्यादीति । शिलानामेति मणसिलनाम । नवमालीति नीमाळी । सुवहेति राठ । वचेति लोके वच तन्नाम । शारिकायामिति सालहीनाम्नि जीवे । अस्येति उग्रगन्धशब्दस्य । शिम्बानामेति फलीनाम । कपिञ्जले इति पक्षिविशेषे । अस्येति जाङ्गलशब्दस्य । पृथौ इति पृथुत्वगुणयुक्तायां स्त्रियाम् । स्वैक्पत्र्यां इति हिङ्गुपत्रीनाम्न्याम्, यदाह 'हिङ्गुपत्री तु कारवी । पृथ्वीका पृथुका पृथु'रित्यादीति । तन्नामेति राइनाम । उष्णिकानामेति जाउली नाम । तरलेति जाउली नाम । गन्धद्रव्यविशेष इति पीक इति नाम्ना प्रसिद्ध । पण्यानामेति मालकागुणी नाम । धाय्यानामेति यया ऋचा अग्नौ इन्धन क्षिप्यते सा ऋक् धाय्या उच्यते । अयमिति सामिधेनीशब्द । समिधीति इन्धने । तत्प्रभेदोऽपीति मधुमक्षिकाभेदोऽपि । । आधानामेति

भूतनाशिन्यौ भयघ्नी पाशुली रुचि' । गोपित्तरोचना च । वंशरोचना याशी तुगाक्षीरी तुका शुभा वंशजा शुभ्रा वंशक्षीरी वैणवी इत्यादि ॥ वैदेही च । यद्गौड–'वैदेही पिप्पलीसीतावणिक्स्त्रीरोचनास्वपि' । त्वक्क्षीरस्तु क्लीनपुंसको वक्ष्यते ॥ भूनाम–भू भूमि, अनयोः स्थानमात्रेऽपि स्त्र्युकरान्त्यन्तत्वाच्च स्त्रीत्वम् । वसुधा अवनि, वसुमती । इडा–लत्वे इला । धात्री अम्बा । उर्वरा–अयं सर्वसस्याढ्यामपि भुवि । दक्षा गोत्रा क्षु इत्यादि ॥ ३ ॥

हरिद्रामासिदूर्वालुबलाकाकृष्णलागिराम् ।
इतु ग्राण्यङ्गाची स्यादीदूदेकस्वर कृत' ॥ ४ ॥

हरिद्रादीनां नाम स्त्रीलिङ्गम् । हरिद्रानाम, हरिद्रा पीतिका पिण्डा रजनी रजना । निशा–अयं दारुहरिद्राप्रियामयोरपि । 'गौरी वर्णवती पीता हरिता वरवर्णिनी' । पीतचन्दनस्य तु बाहुलकान्नपुंसकत्वम् । मासिर्गन्धद्रव्यविशेषस्तन्नाम, 'मासी कृष्णा जटा हिंसा नलदा जटिला मिषी । 'जटा च पिशिती पेपी क्रव्यादा च तपस्विनी । द्वितीया गन्धमास्यन्या भूतकेशी जटा स्मृता' ॥ पिशाची पूतनाकेशी भूतकेशी च लोमशा' इत्यादि ॥ अयं कांसीसादावपि । यदाह–'अथ कासीसस्तृगालीजटिलासु च लोमशा' । 'लोमशा शूकशिम्ब्या च मर्कटीकाकजङ्घयो । महामेदातिनलयो शाकिनीमिदि चेष्यते' । मिसिश्च । यद्गौड –'स्यान्मास्या शैतपुष्पाया मधुराया मिसि स्त्रियाम् । अजमोदाया च' ॥ दूर्वानाम, दूर्वा हरिताली शतपर्वा शतवीर्या शतवल्ली असितालता सहस्रवीर्या अनन्ता दुर्दरा(दर्दुरा?) । रुहा, नीलदूर्वेयम् । भार्गवी च । यदाह–'भार्गव पर्शुरामे स्याद्गजे शुक्रे सुधन्वनि । भार्गवी हैमवत्या च षमला शितिदूर्वयो' । शिला तु गोलोमी श्वेतगर्भा सिताल्ता गण्डाली तीव्रा वारणीत्यादि ॥ आलूनाम आलू वर्करी गलन्तिका वार्धानी इत्यादि ॥ आलुश्च । यद्गौड –'आलुर्गलन्तिकायां स्त्री हीन कन्दे च भेलके' । बलाकानाम, पुम्ध्वजेऽपि स्त्रीत्वमेव । बलाका बिसकण्ठिका बिसकण्टिका वेकेरका इत्यादि ॥ कृष्णलानाम, कृष्णला गुञ्जा रक्तिका काकचिञ्ची इत्यादि ॥ शिखण्डिनी च । यदाह–'शिखण्डी च मयूरे स्याद्बाणे गाङ्गेयवैरिणि । कलापे चाथ गुञ्जायां यूथिकायां शिखण्डिनी' । गीर्नाम गी वाग् वाणी भारती भाषा सरस्वती इला इत्यादि ॥ देवताविशेषवाचिना चैषां योनिमन्नामत्वादेव स्त्रीत्वम् । एवं श्रीभूनदीनामस्वपि

गोरोचना नाम । अयमिति उर्वराशब्द ॥ ३ ॥ अयमिति निशाशब्द । गन्धद्रव्यविशेष इति लोके छडि इति नाम्ना प्रसिद्धस्तन्नाम । अयमिति लोमशाशब्द । कांसीसमिति धातुभेद । जटिलेति मासी । शूकशिम्ब्या इति कपिकच्छ्वाम् । मर्कटीति करञ्जो नाम वृक्ष । महामेदेति मेदनाम्नी ओषधि । शैतपुष्पेति सोवा । मधुरेति लोके मीहाली । नीलदूर्वेयमिति पूर्वोक्तनामभिरिय नीलदूर्वा ज्ञेया । शुक्रे इति दैत्यगुरौ । सुधन्वनीति सुधनुर्धरे इत्यनेकार्थवृत्तिः । हैमवत्यामिति पार्वत्याम् । आलूनामेति करवडी झाझरी वा तन्नाम । भेलके इति उडुपे । बलाकानामेति बगली नाम । पुम्ध्वजेऽपीति पुरुषे वाच्येऽपि बलाकाशब्दस्य ।

द्रष्टव्यम ॥ इस्तु प्राण्यङ्गवाचि स्यात् । प्राण्यङ्गवाचि इकारान्त स्त्रीलिङ्ग स्यात् । गोधिः ललाटम् । एव अङ्गुलिः अङ्गुरि. कटिः पालि करोटि कपोणि कफोणि कफणि' शष्कुलिः कलाचि तुन्दि. तुण्डि च्युतिचुली, चुलिरऽपत्यपथेऽपि । त्रोटि पक्षति । इदिति किम् ? कर्ण । प्राण्यङ्गवाचीति किम् ? नाभि क्षत्रिय । प्राण्यङ्गवाचिनस्तु स्त्रीपुसत्वम् । चक्रपिण्डिकाया तु स्त्रीत्व वक्ष्यते ॥ ईदूदेकस्वरम्. ईकारान्तमूकारान्त च एकस्वर नाम स्त्रीलिङ्गम् । ह्री भ्री श्री' । 'लक्ष्म्या त्रिवर्गसम्पत्तौ वेपोपकरणे मतौ । श्रीर्वेपरचनाशोभाभारतीसरलद्रवे(द्रुमे)' ॥ भ्रू, स्रू द्रू, जू । एकस्वरमिति किम् ? स्वयम्भू'—ब्रह्मा । नी., लू इत्यादीना तु गुणवृत्तित्वादाश्रयलिङ्गता ॥ कृतः, कृत्सम्बन्धिनौ यावीदूतौ तदन्त नाम स्त्रीलिङ्गम ॥ अनेकस्वरार्थ आरम्भ ॥ लक्ष्मी श्रीतुल्यार्थ' । यन्माह—'लक्ष्मी श्रीरिव सम्पत्तिपद्माशोभाप्रियङ्गुषु' । पपी ययी । वातप्रमीस्तु देहिना-मत्वात्पुसि । अय मालाया पुस्काण्डे पठित । देवनन्दी तु स्त्रियामाह । तरी तन्त्री अवी यवागू, अलाबू कुतू कर्कन्धू कच्छू मंजू दद्रू सद्रू तर्दू कशेरू रञ्जू तनू आलू' ॥ दन्भू —सविप कीट । यद्गौड —'दन्भू स्त्रीसर्पभेदे' ॥ धनू चापम्, धालू' शत्तयारव्यमायुधम् । अमेगृस्तु गुणवृत्तित्वादाश्रयलिङ्ग । त्रीण्यपि (२–३–४) पथ्या-चक्राणि ॥ ४ ॥

पात्रादिवर्जितादन्तोत्तरपदः समाहारे ।
द्विगुरखावन्तान्तो वान्यस्तु सर्वो नपुसकः ॥ ५ ॥

पात्रादिवर्जितादन्तोत्तरपदः समाहारे द्विगुः । पात्रादिगणवर्जितमकारान्तमुत्तरपद यस्य स तथाविधो द्विगु समाहारे वर्त्तमान स्त्रीलिङ्ग । पञ्चाना पूलाना समाहार

---

इष्णएनामेति चिरमीनाम । गौक्षेयवैरिणीति मीष्मरिपौ । कलापे इति पिच्छे ॥ ४ ॥ पालिरिति कर्ण एतिका, लोके कर्णनी पाली । करोटिरिति मस्तकहड्डम् । कपोणिरिति कपोण्याद्यस्थय कूहणीवाचका । शष्कुलिरिति कर्णपर्यन्तभाग । कलाचिरिति पहूचा (कलाई) । तुन्दिरिसि उदरम् । तुण्डिरिति उन्नतनाभि । च्युतिचुली इति अपानानाम्नी । अपत्यपथेऽपीति योनावपि । त्रोटिरिति चञ्चू । पक्षति-रिति पिच्छमूलम् । यदाहु 'पक्षमूल तु पक्षति' । ह्रीरिति लज्जा । भ्रीरिति भीति । त्रिवर्गासम्पत्ती इति समृद्धौ । वेपोपकरणे इति वस्त्राभरणादौ । मतौ इति बुद्धौ । भ्रूरिति लोके भमुहि । स्रूरिति 'स्रू स्रुवे निर्झरेऽपि च' । द्रूरिति 'द्रू कामरूपिणि स्वर्णे' । जूरिति 'जूराकाशसरस्वत्या पिशाच्या जवनेऽपि च' । नीरिति नयतीति नी । लूरिति लुनातीति लू । प्रियङ्गुरिति लता । पपीरिति रश्मि सूर्य हस्ती च । ययीरिति मोक्षमार्ग दिव्यदृष्टि आदित्य अश्वश्च । तरीरिति नौ अग्नि वायु पवन च । तन्त्रीरिति वीणागुण, लोके तान्त इति प्रसिद्धि, गुडूची वर्ध्री नाडी च । अवीरिति प्रकाश आदित्य भूमि पशु राजा स्त्री च । यवागूरिति जाउली । अलाबूरिति तुम्बी । कुतूरिति चर्मस्नेहपात्र, लोके कूदा इति प्रसिद्धि । कर्कन्धूरिति बदरी मण, इत्यादि उणादौ विलोक्यम् । कच्छूरिति पामा । मंजूरिति शुद्धिः रत्नक त्यास्तोर शिला च । दद्रूरिति कुष्ठभेद लोके दाद । सद्रूरिति दर्वी, लोके डोहली । कशेरूरिति कन्दविशेष । कसेरु । रञ्जूरिति कण्डू । तनूरिति शरीरम् । आलूरिति वार्धानी, लोके करवडी झारी।

पञ्चपूली । पण्णगरी दशग्रामी त्रिफला । पात्रादिवर्जितेति किम् ? द्विपात्रम् द्विमासम्, त्रिभुवनम्, चतुर्युगम्, द्विपथम्, त्रिपथम्, चतुष्पथम्, त्रिपुरम् । भाष्ये तु त्रिपुरीत्युक्तम् । पात्रादय शिष्टप्रयोगगम्या । अदन्तेति किम् ? पञ्चममितीति त्रिगुप्ति पञ्चकुमारि दशकुमारि, अन्त्ययो स्त्रीपुसत्वमपीत्येके । उत्तरपदग्रहण किम् ? पञ्चगार समाहृता पञ्चगारम् । एव दशगवम् त्रिरात्रम् सप्तभूमम् । अत्र द्विगुरदन्तो नोत्तरपदम् । समाहार इति किम् ? पञ्चाग्निप्रिय दशघटप्रिय । उत्तरपदे परवल्लिङ्गता वद्धितार्थे च वाच्यलिङ्गता वक्ष्यते । अन्नानन्तान्तो वा अन्नन्त आबन्त च यदुत्तरपद तदन्तो द्विगु समाहारे वर्तमानो वा स्त्रीलिङ्ग । अन्नन्त, पञ्चतक्षी पञ्चतक्षम्, द्वादशराजी द्वादशराजम्, पञ्चचर्मी पञ्चचर्मम् । आनन्त पञ्चखट्वी पञ्चखट्वम्, दशखट्वी दशखट्वम्, पञ्चमाली पञ्चमाल्यम् । त्रिमन्त्र्यस्य तु नपुंसकत्व वक्ष्यते । अन्नन्तमानन्त चोत्तरपद न द्विगुरिति द्विरन्तग्रहणम् ॥ अन्यस्तु सर्वो नपुंसक –उक्तोत्याऽन्य पुनर्द्विगु समाहारे वर्तमान सर्वो नपुसक । तेन पात्राद्युत्तरपदस्याऽनकारान्तोत्तरपदस्य विकल्पितस्त्रीत्वस्य च पक्षे नपुसकत्व सिद्धम् । तथैवोदाहृतमेव ॥ विताम ॥ ५ ॥

लिन्मिन्यनिण्यणिक्युक्ता, क्वचित्तिगल्पहस्वेकरूप् ।
विंशत्याद्याशताद् द्वन्द्वे, सा चैक्ये द्वन्द्वमेययो. ॥ ६ ॥

लिन्मिन्यनिण्यणि क्युक्ता ॥ लित्प्रत्ययान्त मि-नि अनि-णि अणि-प्रत्ययान्त क्रियायुक्ता क्युकास्तदन्त च नाम स्त्रीलिङ्गम् । लित्, यथा समूहो गोत्रा । एव रथकट्या पाश्या तृण्या गव्या रथ्या वात्या खलिनी ग्रामता जनता बन्धुता गजता सहायता तृणसा वराणसा । कर्णे भवा कर्णिका, एव ललाटिका, गर्गाणां भृगूणां च विवाह गैर्गभार्गविका, काकोलूकस्य वैर काकोलूकिका, शुद्धस्य भाव शुद्धता, एव शैल्योपाध्यायिका, गौर्गिक्या

घा ॥ ४ ॥ त्रिफलेत्यत्र अनादित्याद्याप् । अन्त्ययोरिति पञ्चकुमारिदशकुमारि इत्येतयो । अत्रेति पञ्चगर दशगव सप्तभूममिह द्विगुसमास 'सङ्ख्यापाण्डूदक्कृष्णाद्भूमे' (७।३।१८) इति सूत्रागतसमासप्रत्ययेन अद्-तोऽस्ति पर अग्रे अद्-त उत्तरपद गोभूमीति रूपेण नास्ति । अन्नन्तमाबन्त चोत्तरपद न द्विगुरिति द्विरन्तग्रहणमिति अन्नन्त अनुप्रत्ययान्त आबन्त आकारान्त च उत्तरपद द्विगुर्न भवति । यथा पञ्चतक्षन् पञ्चखट्वा, किं तर्हि ? अन्नन्त आबन्ते यस्य तत् तादृशान्त प्रकृतिपूर्वसमाससम्बन्धिप्रत्ययसमुदायरूपम् । एव आबन्तान्त च पद द्विगुरित्यर्थः । यथा । पञ्चतक्षी । पञ्चखट्वी ॥ ५ ॥ गोत्रा रथकट्या इत्यत्र 'गोरथवातात् त्रल्कट्यलूल' (६।२।२४) इत्यनेन त्रल्कट्यलौ प्रत्ययौ । पाशानां समूह पाश्या एव तृण्या गव्या रथ्या वात्या इत्यत्र 'पाशादेश्च ल्य' (६।२।२५) इति ल्य । खलानां समूह खलिनीत्यत्र 'खलादिभ्यो लिन्' (६।२।२७) इति लिन् । ग्रामाणां समूहो ग्रामता । एव जनता बन्धुता गजता सहायता इत्यत्र 'ग्रामजनबन्धुसहायात्तल्' (६।२।२८) इति तल् । तृणा सन्त्यत्र तृणसा इत्यत्र 'तृणादे सल्' (६।२।८१) इति चातुरर्थिक सल् । कर्णिकेति कर्णाभरणविशेष पद्मावयवश्च । एव ललाटिकेति ललाटमण्डन टीकीप्रमुख उभयत्र 'कर्णललाटात् कल्' (६।३।१४१) इति कल् । गैर्गभार्गविकेति गर्गाणां भृगूणां च अय परस्पर विवाह इत्यर्थ । 'विवाहे द्वन्द्वादकल्' (६।३।१६६) इत्यकल् । काकोलूकिकेति काकस्य उलूकस्य चेद परस्परं वैरमित्यर्थ ।

श्लाघते । द्वौ पादौ ददाति द्विपदिका ददाति, देव एव देवता—एषु 'गोरथ०' (६।२।२४) इत्यादिना अकलादय. क्रमेण लित· प्रत्ययाः ॥ मिः. सूर्मि —स्थूणा, अय प्रतिकृतिश्च । ङ्या सूर्मी । सूर्मशब्दादपि ङ्या सूर्मी । नेमि. कूपस्यान्ते रज्ज्वादिधारणार्थं त्र्यस्र काष्ठम् चक्रधारा चक्रभ्रमिश्च । वर्मि वल्मीककृमि । वल्मि·—इन्द्र समुद्रश्च । दल्मि आयुधम् ॥ निः. वेनि·—व्याधि· केशरचना नदी च । सोनि सवनम् । धुनि नदी ॥ अनिः. अटनि. धनु प्रान्त । कटनि शैलमेखला । वर्त्तनि 'वर्त्तनिस्तर्कुपिण्डेऽपि स्त्रिया वर्त्तन-वर्त्मनो.' । धमनि सिरा ॥ णिः. फाणि वैलक्ष्यानुपसर्पणम् (?) वाणि —व्यूति मूल्य च । नि.श्रेणि —अधिरोहिणी खजूरी च । वेणि —केशरचनाविशेष प्रवाह सेतुश्च । प्रवेणि — गीतप्रस्तार·, आस्तरण वेणिश्च । क्रणि· क्रय· । द्रोणि· जलाधारविशेष । चूर्णि· वृत्ति ॥ अणिः. सरणि —पन्था श्रेणिश्च । ग्रहणि —कोष्ठस्थान रोगविशेषश्च । करणि सादृश्यम् । क्षिपणिः आयुधम्, चर्मकृता च पाषाणसर्जनी । धर्षणिः—चेटी कुल्टा अग्निश्च । काकणि मानदण्डपणयोस्तुर्यांश । तरणि —सङ्क्रम यवागूश्च । समुद्राकांशुयष्टिषु तु स्त्रीपुसत्व वक्ष्यते । कृमिवह्नयग्निघृणिवृष्णीना पुस्त्वमुक्तम् । ऊर्मिपृश्निपर्णीना तु स्त्रीपुसत्व वक्ष्यते ॥ स्त्र्युक्ताः क्ति क्यप् श य अः अङ् अन क्विप् ञ अनि इञ् णकश्च । क्तिः. वृत्ति. कैशिकी, आरभटी, सात्वती, भारतीलक्षणा । ग्राम्या परुषोपनागरिका लक्षणा (?) कृष्यादि । विधूतिश्च ॥ भूति —भस्म, उत्पत्ति वित्त च । भक्ति —लेखा व्युष्टि वृष्टि फल समृद्धि स्तुतिश्च । कृष्टि कर्षणम्, 'प्रथम गर्भग्रहण च, यस्त्वौणादिक क्त्यन्तो बुधवाची स गुणवृत्तित्वादाश्रयलिङ्ग । घृष्टि —घर्षणम्, स्पर्द्धा विष्णुकान्ता च । सूकरे तु प्राणिनामत्वा-

'अदेवासुरादिभ्यो वैरे' (६।३।१६४) इत्यकल् । शुक्रतेत्यत्र 'भावे त्वतल्' (७।१।५५) इति तल् । शैष्योपाध्यायिकेति शिष्योपाध्यायाना भाव शैष्योपाध्यायिका 'द्वन्द्वाल्लित्' (७।१।७४) इति सूत्रेण लित् अकञ्प्रत्यय । गार्गिकया श्लाघते इति गर्गस्यापत्य गार्ग्य । गार्ग्यस्य भाव कर्म वा गार्गिका तया श्लाघते गर्गापत्यत्वेन प्रवराध्यायपठितत्वेन च उत्कर्षाख्यान करोतीत्यर्थ । 'गोत्रचरणात् श्लाघात्याकार प्राप्त्यवगमे' (७।१।७५) इति लित् अकञ्प्रत्यय । द्विपदिका ददाति इति द्वौ पादौ ददातीत्यर्थ 'सङ्ख्यादे पादादिभ्यो दानदण्डे चाकल् लुक् च' (७।२।१५२) इति अकल्प्रत्यय । देवतेत्यत्र 'देवात्तल्' (७।२।१६२) इति तल् । अय प्रतिकृतिरिति लोहरी पुतली । त्र्यस्र काष्ठमिति कुढीढ । वल्मीककृमिरिति वल्मीकस्य उपदेहिकागृहस्य कृमि वल्मीककृमि, उपदेहिकेत्यर्थ । सवनमिति स्नानम् । तर्कुपिण्डे इति तर्कोरधस्तात् पाषाणादिमय पिण्डस्तर्कुपिण्ड इत्यनेकार्थवृत्तौ । वर्त्तन इति जीविका । वर्त्मेति मार्ग । व्यूतिरिति वाणओ । अधिरोहिणीति नीसरणी । आस्तरणमिति आथर । वेणिरिति केदारचना । जलाधारविशेष इति चर्मकुण्डी । कोष्ठस्थानमिति उदरे उदराग्निस्थानम्, धान्यार्थं यत्र कोष्ठागार क्रियते तद्वा । चर्मकृता च पाषाणसर्जनीति लोके गोफणि । चेटीति दासी । कुल्टेति असती स्त्री । मानदण्ड पणयो तुर्यांशे इति मानदण्डश्चतुष्करस्तस्य तुर्यांश, पणस्य तुर्यांशश्च । सङ्क्रम इति सेतु । यवागूरिति जाउली । स्त्र्युक्ता इति स्त्रिया उक्ता ये प्रत्ययास्ते स्त्र्युक्ता । क्तिरिति 'स्त्रियां क्ति' (५।३।९१) इति । कृष्यादिरिति आजीविका । यदाहु 'वाणिज्य पाशुपाल्य च कर्षण चेति वृत्तय' इति । विधूतिरिति टीका । विष्णुकान्तेति लोके वाराहीकन्द, यदाह 'वृष्टिर्विष्वानना क्रान्ता वाराही वृष्टिकाधरे'त्यादाति ।

स्पुंस्त्वम् । दृष्टि —ज्ञान चक्षु दर्शन च । इष्टि—यज्ञः इच्छा च । दिष्टि —परिमाण मुद् च । अधीष्टि अध्येषणा । परीष्टि —श्राद्धे द्विजशुश्रूषा । अभिशस्तिः—याच्ञा अभिशापश्च । अपचिति —पूजा व्यय हानि निष्कृतिश्च । पीति 'पाने स्त्री पीतिरश्वे ना' । यति 'पाठच्छेदे स्त्रिया पुंसि निकारयतिनोर्यतिः' । शक्ति —सामर्थ्यम्, प्रहरणविशेष उत्साहादिश्च । मूर्ति —काठिन्यम्, कायश्च । अर्त्ति —पीडा धनुष्कोटिश्च । वृद्धि 'वृद्धिरानन्दवर्धने । स्त्रिया कैलान्तरेऽपि स्याद्वृद्धिनामनि चौषधे' ॥ क्षिति —क्षैय भूश्च । गुप्ति —कारा रक्षा भुवो दीर्घविवर च । धृति —धारण धैर्य सौख्य च । दुर्गति दारिद्र्यम्, निरये तु स्त्रीपुंसलिङ्गो वक्ष्यते । समिति —सङ्ग्राम सङ्गम सभा ईर्यादिका च । यदाह—'सम्पराये सभाया च सङ्गमे समिति स्त्रियाम्' । साति —दान अवसान च । पद्धति —मार्गः क्रमश्च । दीधिति —किरण हेति रश्मि शस्त्रम् अग्निज्वाला च । प्रकृति 'लिङ्गे स्वभावे प्रकृति पौराऽमात्यादियोनिषु । स्त्रीलिङ्ग गुणसाम्येऽपि' । प्रत्ययात्पूर्वो च । कृत्ति चर्म्म । नियति विधि । श्रुति —वेद वार्त्ता श्रवण कर्णश्च । आकृति 'सामान्येऽपि शरीरेऽपि स्वाद्रूपेऽप्याकृति स्त्रियाम्' । आयति 'दीर्घत्वेऽप्यायति स्त्री स्यात्प्रभावागामिकालयो' । संहति सङ्घात ॥ क्यप् आस्या आसनम् । अज्या(ट्या?)गति । व्रज्या सैवं । इज्या 'इज्या स्यात्सङ्गमे दाने यागेऽर्चाया गुरौ पुमान्' । भृत्या वेतनम् । समज्या सभा । निषद्या आसनम् । शय्या-पर्यङ्क शब्दगुम्फश्च । शय्यान्तत्वात्—'अन्त शय्या मृतौ भूमिशय्याया पितृकानने' । सुत्या—यैस्या सोम सुन्वन्त्यद्रि, परिवासयन्तीत्यय । विद्या आन्वीक्षिक्यादि । चर्या भ्रमणम् । मन्या—ग्रीवाया पश्चाद्भागे सिरा । कृत्या—कृति मारिदेवता च, विद्विष्टकार्ययोस्त्वाश्रयलिङ्ग । शः, क्रिया आरम्भादि 'आरम्भो निष्कृति शिक्षा पूजन सम्प्रधार-

परिमाणमिति द्वादशाङ्गुल इत्यनेकार्थवृत्ति । मुदिति हर्ष । अध्येषणेति सत्कारपूर्वको व्यापार । अभिशाप इति शाप लोके स्राप । निष्कृतिरिति निष्क्रय प्रायश्चित्तादिना सशोधनमित्यर्थ । पाने इति जलपाने । पाठच्छेदे इति पाठविरामे, विभक्त्य-तलक्षणे इत्यर्थ । निकार इति धिक्क्रिया । उत्साहादिरिति उत्साहशक्ति प्रभुत्वशक्ति मन्त्रशक्तिश्च । कैला-तरे इति लोके व्याज इति प्रसिद्धे । वृद्धिनामनि इति ऋद्धिवृद्धि युग्म सिद्धिरित्यादि । क्षैय इति गृह विनाशश्च । ईर्यादिकेति ईर्यासमितीत्यादय पञ्च । क्रम इति अनुक्रम । लिङ्गे इति स्त्रीपुनपुंसके, महदाद्या प्रकृतिविकृतय सप्त, सप्त च । पौर इति पुरवास्तव्य । अमात्यादीति अमात्यादीनि सप्त राज्याङ्गानि । यदमर 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतय' इति । योनिरिति उपादानकारणम् । गुणसाम्ये इति सत्त्वरजस्तमसा साम्ये । सामान्ये इति जातौ । रूपे इति सस्थानविशेषे । सैवेति गतिरेव । वेतनमिति लोके भाडभो ॥ यैस्यामिति भूमौ [ सुन्वन्तीति विप्रजनप्रसिद्धायाम्, यदमर 'सुत्याभिषव सवन च स' । सोम सुन्वन्ति अद्रिः परिवासयन्ति अस्या सुत्या, सज्ञाया 'समज' (५।३।९९) इति क्यप् । अभिषवण अभिषव 'षप सगात् सुनोतीति षत्वम्' इति च क्षीरस्वामी । सोमवल्लीरसपात्र सुत्या' इति व्याश्रयटीका ] ॥ आन्वीक्षिक्यादिरिति आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्चेति । विद्विष्ट इति वैरी । आरम्भ इति आदिकर्म । निष्कृतिरिति प्रायश्चित्तादिना सशोधनम् । पूजनमिति पूजा । सम्प्रधारणमिति विचारः ।

णम् । उपाय कर्म चेष्टा च चिकित्सा च नव क्रिया.' ॥ धात्वर्थः गर्भाधानादिसंस्कार और्ध्वदेहिकं च ॥ मृगया पापर्द्धिः । इच्छा अभिलाषः । याच्ञा प्रार्थना । तृष्णा–पिपासा गर्द्धश्च । औणादिकस्य तु बाहुलकत्वात्स्त्रीत्वम् । कृपा दया । भा दीप्तिः । यद्गौड –'नक्षत्रे भे गभस्तौ स्त्री पुंसि स्याद्दैत्यमन्त्रिणि' । श्रद्धा तथेतिप्रत्ययः । अन्तर्धा व्यवधिः । परिसर्या परिसरणम् । परिचर्या आराधनम् । अटाट्या भृशमटनम् । जागर्या जागरा(रः) । अ. आशंसा 'वाञ्छायां वचने शंसा' । प्रशंसा स्तुतिः । शुश्रूषा–श्रवणेच्छा उपासनं च । प्रेक्षा–नृत्तादि प्रज्ञा ईक्षणं च । भिक्षा 'प्रार्थनाभृतिसेवासु भिक्षा भिक्षितवस्तुनि' । हिंसा–चौर्यादि कर्म वधश्च । गोपाया रक्षणम् । हिक्का ऊर्ध्ववातप्रवृत्तौ शब्दः । रक्षा रक्षणलाक्षयोः । भसितेऽपि ॥ अङ्. पचा पाक्योऽर्थः । घटा–घटनम् गोष्ठी गजपङ्क्तिश्च । क्षमा–क्षान्तिः क्षितिश्च । यद्गौड –'क्षितिक्षान्त्योः क्षमा, युक्ते क्षमम्, शक्ते हिते त्रिषु' । भिदा विदारणम् । छिदा द्वैधीकरणम् । आरा 'आरा चर्मप्रभेदिन्यां पुंसि भौमे शनैश्चरे' । कारा 'बन्धने बन्धशालायां दूतिकायां प्रसेवके । स्याद्धेमकारिकायां च स्त्रियां कारो बलौ पुमान्' । हारा मानभेदः । धारा–जलादिप्रपात उत्कर्ष खड्गाद्यग्रिः । संतति –अश्वगतिविशेषः सैन्यस्याग्रस्कन्धश्च । रेखा राजिः लिपिश्च । लखे–लेखा । चूडा–वलभिः शिखा च । लखे के च चूलिका, करिकर्णमूलम् नाटकाङ्गं च ॥ वपा–विवरं मेदश्च । क्षिया आचारभ्रंशः । वसा मेदः । 'तुला गृहाणां दारुबन्धाय पीठिकायां तुला स्त्रियाम् । राशौ पलशते माने भाण्डसादृश्ययोरपि' । रुजा–रोगः पीडा भङ्गश्च । भीषा बिभीषिका । भूषा अलङ्कारः । चिन्ता चिन्तिया च–ध्यानम् । पूजा पूजया च–सत्कारः । कथा वादादि 'अश्रद्धेयेऽपार्थवाक्ये नष्टे चेति कथा स्त्रियाम्' । कुम्बा–यज्ञवाटे सुगहना वृतिः चर्चा मार्ष्टिः । स्पृहा वाञ्छा । तोला तोलनम् । दोला प्रेङ्खा । पीडा 'पीडा कृपाशिरोमालाऽपम-

कर्मेति वचनादिव्यापारः । चेष्टेति कायकृतो व्यापारः । धात्वर्थं इति क्रियार्थो धातुः । और्ध्वदेहिकमिति मृतस्य दिवसे मृतमुद्दिश्य पिण्डोदकादिदानम् । पापर्द्धिरिति लोके आहेडओ । गभस्तौ इति किरणे । दैत्यमन्त्रिणीति शुक्रे । तथेतिप्रत्ययः इति यत्कथितं तत्तथैव लोके तिहुहुज । नृत्तादीति नाटकादि आदिशब्दात् चाचम् । प्रार्थनेति मार्गणम् । भृतिरिति भाटकम् । चौर्यादिकर्मेति आदिशब्दात् असत्यादिपरिग्रहः । ऊर्ध्ववातप्रवृत्तौ शब्द इति लोके हिडकी । भसितेऽपीति भस्मन्यपि । बन्धशालायामिति लोके बन्धिखानओ । प्रसेवके इति वस्त्रादिमये भाजने, लोके कोथली इति प्रसिद्धे । हेमकारिकायामिति ओषधिविशेषे । बलौ इति राजग्राह्यभागे । खड्गाद्यग्रिरिति खड्गाग्रम आदिशब्दाद्बाणादीनामपि अग्रभागे । संततिरिति अविच्छिन्नसन्तानः । अश्वगतिविशेष इति धोरितकादिः, यदाह 'धोरितं वल्गितं प्लुतमुत्तेजितोत्तेरितानि च । गतयः पञ्च धाराख्या' इति ॥ वलभिरिति गृहोपरि पटलाधारो वंशपञ्जरादि, लोके वरण्डी प्रमुखम् । शिखेति केशपाशी मयूरादिशिखा वा । मेद इति चतुर्थो धातुः । गृहाणां दारुबन्धाय दारुस्थापनाय । पीठिकायां पट्टे इत्यर्थः । माने इति पौतवनाम्नि । यदाहुः 'तुला तु पौतवं मानमुन्मानविशेषे' इत्यनेनाधवृत्ति, लोके तोला । भाण्डे इति जलोदञ्चनोपकरणे । बिभीषिकेति 'भयम् । वादादिरिति वादो विकथ्य कथ्य । अपार्थवाक्ये इति अपगतोऽर्थो यस्मात्तदपार्थं ईदृग्वाक्यं तत्र ।

ऽसरलद्रुमे'। उपदा प्राभृतम्। उपधा–उपायः, धर्मार्थकामभयप्रयुक्ता सचिवपरीक्षा च। सन्धा–मर्यादा प्रतिज्ञा सन्धारणं च। प्रतिमा 'मानानां दन्तबन्धेऽपि प्रतिमाऽनुकृतावपि'। विधा–गजान्नं ऋद्धिः विधाना वेतनं च। प्रकारे तु स्त्रीपुंलिङ्गो वक्ष्यते। संस्था–मृत्यु आधार स्थितिश्च। निष्ठा 'निष्ठा निष्पत्तिनाशान्तयाच्ञानिर्वहणेषु च'। संस्था–'निष्ठा हेम्नोऽथ साने च व्यवस्थोत्कर्षयोर्मते'॥ व्यवस्था मर्यादा। आस्था 'आलम्बनेऽप्यपेक्षायामास्था चाऽऽस्थानयत्नयोः'। आख्या अभिधा च–नाम संज्ञा–'संज्ञा नामनि गायत्र्यां चेतनायां करक्रियाम्। अर्थस्य सूचनायां च हस्ताद्यैः स्यात्क्रियामपि'॥ समाज्ञा कीर्तिः। अभिख्या 'अभिख्या कीर्तियशसोरऽभिख्या नामशोभयोः'। निद्रा स्वापः, औणादिकस्य तु मातुलकाख्यौतम्। अतियातना यातना च–नरकपीडा। सूचना 'सूचना गन्धने दृष्टौ व्यधनेऽभिनयेऽपि च। प्रतियातना प्रतिबिम्बम्। कुहना–दम्भेन व्रतचर्या। ईर्ष्यालौ त्वाश्रयलिङ्गः। वेदना–पीडा संवित्तिश्च। चेतना संवित्। आसना आस्या। श्रथना सन्दर्भः। घट्टना चपणम्। वन्दना स्तुतिः। याचेरपि याहुलकान्ने याचना–प्रार्थना। पर्येषणा–श्राद्धे द्विजशुश्रूषा। अध्येषणा एषणा च–याच्ञा। 'एषा आवेऽऽदिष्टाना' इति पुनपुनप्रत्ययः। क्विप् क्षुत् कोपः। कण्डू कण्डूतिः। सम्पद् श्रिया 'हारविशेषेऽपि सम्पद्भूतौ गुणान्तरे। संविद् 'सम्भाषणे क्रियाकारे सङ्केते नाम्नि तोषणे। संविज्ज्ञाने प्रतिज्ञायामाचारज्ञानयोरपि'॥ विपद् आपद् व्यापद–विपत्तिः। प्रतिपद्–पक्षस्याद्या तिथिः, संवित्। युद्ध समिथ–आजिः। संसद् परिषद्–सभा। उपनिषद्–रहस्यम् शास्त्रविशेष धर्मतत्त्व च॥ मृत् भूः। निर्णिक्–निश्वास शुद्धिश्च। समिद् एधः। प्रावृट् वर्षाः। विड् 'विड्वयापने च विष्ठायाम्'। विप्रुट् बिन्दुः। रुट् रोषः। तृट् तृष्णा। त्विड् 'त्विड् कान्तौ व्यवसाये च जिगीषायां रुचौ गिरि'। आशी–आशंसा, अहिदंष्ट्रा च, पृषोदरादित्वात्तलोपे आशीविषः। उपानद् पादरक्षणम्। स्रक् माला। मुद् हर्षः। परिस्रुत् मदिरा। प्रतिश्रुत् प्रतिशब्दः। नीवृत् देशः। आवृत् परिपाटिः। क्षुत् क्षुतम्। उपभृत् स्रुग्भेदः। रुच् दीप्तिः। रुज् रोगः। शुच् शोकः। क्षुध् क्षुधा। वं व्यत्युक्षी व्यतिहारेण सेचनम्। अनि. अंज-

सुगहना वृतिरिति सवल्याडि। मतिरिति बुद्धिः। प्रहुतिलोके हींचोलि वा पाल्पाशो इति वा। कृपेति दया। शिरोमालेति उत्तंसः। यदाह 'पीडार्त्तिमर्दनोत्तंसकृपासु सरलद्रुमे' इति। प्राभृतमिति लोके भेट्णा। संधारणमिति सम्यक् धारणम्। अनुकृतौ इति प्रतिरूपे। वेतनमिति भाटकम्। निर्वहण इति निर्वाहः। 'निष्ठानिर्वहणे मुख्ये' इति हैमः। आस्थानमिति सभा। अर्थस्य सूचनायां अर्थस्य प्रयोजनस्य सूचने। हस्ताद्यैरिति हस्तादि, आदिग्रहणात् अक्षिनिकोचनाद्यैः। गन्धने इति द्रोहाभिप्रायेण परदोषोद्घट्टने। दृष्टौ इति दर्शने। व्यधने इति सूच्यादौ। संवित्तिरिति ज्ञानम्। संविदिति बुद्धिः। श्रथनमिति धारणायतनाद्येषणापर्यन्तानां शब्दानाम्। कण्डूतिरिति खाजू। हारविशेषे इति सम्पदाख्ये हारे। भूतौ इति ऋद्धौ। गुणान्तरे इति गुणोत्कर्षे। क्रियाकारे इति व्यवस्थास्थापने। आजौ इति सङ्ग्रामे। संविदिति बुद्धिः। कान्तौ इति शोभायाम्। रुचौ इति दीप्तौ। गिरीति वाण्याम्। क्षुतमिति छिक्का। स्रुग्भेद इति यज्ञे स्रुग्भेदः। वं इति 'व्यतिहारेऽनीहादिभ्योञ' (५।३।११९) इति

ननिस्ते वृपल भूयात् । ज्यानि॰ हानिश्च—अपचय॰ । ग्लानि॰—दौर्बल्य चित्तपीडा च । इञ्, का त्व कारिमकार्षी॰ । सर्वां कारिमकार्षम् ॥ णक. भवत शायिका । भवत शयितु पर्याय इत्यर्थ । अर्हसि त्वमिक्षुभक्षिकाम् । प्रवाहिका प्रच्छर्दिका विचर्चिका—एते रोगविशेषा । कारिका—यातना, कृति , श्लोकैर्विवरणम्, वृद्धिश्च । उष्ट्रासिका आस्यन्ते, हतशायिका शय्यन्ते इत्यादि । क्वचित्तिग्. कचिल्लक्ष्यानुसारेण तिक्प्रत्ययान्त नाम स्त्रीलिङ्गम् । तनुतात्तन्तिरित्यादि ॥ अल्पह्रस्वे कप्. अल्पे ह्रस्वे चार्थे य कप्प्रत्ययस्तदन्त नाम क्वचित् स्त्रीलिङ्गम् । अल्प क्रय क्रयिका । ह्रस्व पुट पुटिका । एवमुन्मानिका, फलिका, दण्डिका, काण्डिका, छत्रिका, जालिका । क्वचिदित्येव—वृक्षक पटक शाटक॰ यशक वेणुक नडक चरक इत्यादि, एपु प्रकृतिलिङ्गमेव ॥ विंशत्याद्या. विंशतिरित्येवमादिका सङ्ख्या सङ्ख्येये सङ्ख्याने च वर्त्तमाना स्त्रीलिङ्गा । इय विंशतिर्घटा । इय विंशतिर्घटानाम् । विंशत्या घटै घटाना वा । एव त्रिंशत् चत्वारिंशत् पञ्चाशत् सप्तति अशीति नवति । षष्टे स्त्रीलिङ्गत्व शतादीना तु पुन्नपुसकतादि वक्ष्यते ॥ विंशत्याद्येति किम् ? एक एका एकम्, द्वौ, द्वे, द्वे, त्रय , तिस्र , त्रीणि, चत्वार , चतस्र , चत्वारि । गुणवृत्तित्वादाश्रयलिङ्गता ॥ नन्तसङ्ख्यायास्त्वलिङ्गत्व वक्ष्यते ॥ आशतात् द्वन्द्वे. द्वन्द्वे समासे वर्त्तमाना विंशत्याद्या सङ्ख्या आशताच्छतादर्वाक् नवनवतिपर्यन्ता स्त्रीलिङ्गा । द्वन्द्व समाहारो

सूत्रसम्बन्धी यो ञ । व्यात्युक्षीति 'उक्षि सेचने' व्यतिहारेण उक्षण व्यात्युक्षी व्यतिहारेण सेचनमिति । व्यतिहारशब्देन परस्परकृतप्रतिकृतिरुच्यते तेन सिञ्चनमित्यर्थ, लोके पिचरका । अजननिरिति अपन्म । 'म्लोऽनि शापे' (५।३।११७) इति अनि । ज्यानि हानि ग्लानि इत्यत्र 'ग्लाहाज्य' (५।३।११८) इति अनि । इञ् इति 'प्रश्नाख्याने वेञ्' (५।३।११९) इति सूत्रसम्बन्धी इञ्प्रत्यय । कां त्व कारिं इति किं कार्यं त्व सर्वा कारिं सर्व्व कार्यमित्यर्थ । णक इति 'पर्यायार्हर्णोत्पत्तौ च णक' (५।३।१२०) इति सूत्रसम्बन्धी णक । भवत शायिका भवत शयितु पर्याय इत्यर्थ, भवत स्वापपर्यायक्रम इत्यर्थ । अर्हसि त्वमिक्षुभक्षिकामिति इक्षुभक्षण प्रति योग्योऽसीत्यर्थ ॥ एते रोगविशेषा इति प्रवाहिकादयस्त्रय शब्दा यथाक्रम ग्रहणीरक्छर्दिपामान इति । 'नाम्नि पुसि' च (५।३।१२१) इति णक प्रत्यय ॥ कारिकेत्यत्र 'भावे' (५।३।१२२) इति सूत्रेण णक । यातनेति पीडा । कृतिरिति करणम् । श्लोकैर्विवरणमिति श्लोकै कृत्वा व्याख्यानम् । आसन आसिका उष्ट्रस्येव आसिका उष्ट्रासिका आस्यन्ते, यथा उष्ट्रासन भवति तथा एभि उपविश्यन्ते इत्यर्थ । शयन शायिका, हतस्येव शायिका हतशायिका शय्यन्ते, यथा हतस्य शयन भवति तथा एभि शय्यन्ते इत्यर्थ । तन्तिरित्यत्र 'तिक्कृतौ नाम्नि' (५।१।७१) इति तिक् । विंशतिरित्येवमादिका सङ्ख्येति इहैकादिका सङ्ख्या विहाय विंशत्यादिग्रहण किमर्थम्, तत्र ब्रूम । 'आदशभ्य सङ्ख्या सङ्ख्येये वर्तते' इत्यभिधानात् । अष्टादश यावत् या सङ्ख्या सा सङ्ख्येये वर्तते । तस्याश्च गुणवृत्तित्वाद्वाच्यलिङ्गतेति तत पर विंशत्याद्या सङ्ख्या सङ्ख्येये सङ्ख्याने च वर्त्तते इति विंशत्यादिग्रहण न्याय्यमिति । सङ्ख्येये इति सङ्ख्येय नाम समानाधिकरणत्वात् समानविभक्तिकम् । सङ्ख्याने इति सङ्ख्यान नाम असामानाधिकरण्यादसमानविभक्तिकमित्येतदुदाहरणानि ग्रन्थकृदेवोदाहरति—इय विंशतिघटा इति सङ्ख्येयम्, इय विंशतिघटाना इति सङ्ख्यानम् । विंशत्या घटैरिति सङ्ख्येयम्, घटाना वेति सङ्ख्यानम् । एवमिति अमुना प्रकारेण । द्वन्द्व इति सामान्येन द्वन्द्वग्रहणे समाहारेतरेतरयोगद्वन्द्वभेदद्वयग्रहण भवति इति शङ्कामपाकुर्वन्नाह—समाहारो वचन प्रयोजयतीति

वचनं प्रयोजयति । इतरेतरयोगे परवल्लिङ्गत्वेन स्त्रीत्वसिद्धेः । एकश्च विंशतिश्च इयमेक-विंशतिः । एकविंशत्या । एवं द्वाविंशतिः, यावन्नवनवतिः । आशतादिति किम् ? एकश्च शतं च एकशतमित्यादौ द्वन्द्वैकत्वेति नपुंसकत्वमेव । द्वन्द्व इति किम् ? पञ्चानां विंशतीनां समाहारः इदं पञ्चविंशति 'अन्यस्तु सर्वो नपुंसकः' इति नपुंसकत्वमेव । द्वन्द्वैकत्वेति नपुंसकत्वापवादो योगः ॥ सा चैक्ये द्वन्द्वमेययोः—सा पुनर्विंशत्याद्या सङ्ख्या द्वन्द्वे समासे मेये च सङ्ख्येये च वर्त्तमाना ऐक्ये एकत्व एव प्रयोक्तव्या । द्वन्द्व इतरेतरयोगो वचनं प्रयोजयति । समाहारे हि सिद्धमेवैक्यम् । एकश्च विंशतिश्च एकविंशतिर्घटा घटानां वा । एवं द्वाविंशतिः । त्रयोविंशतिः । चतुर्विंशतिः । एकत्रिंशत् । एकचत्वारिंशत् । एकपञ्चा-शत् । एकषष्टिः । एकसप्ततिः । एकाशीतिः । एकनवतिः । एकशतम् । द्विशतम् । एकस-हस्रम् । द्विसहस्रम् । एकलक्षम् । द्विलक्षमित्यादि ॥ सङ्ख्येये त्वस्यपि—विंशतिर्घटाः, विंशत्या घटैः । एवं त्रिंशत्, त्रिंशता, यावन्नवतिः, नवत्या । शतं घटाः, शतेन घटैः । एवं सहस्रम् सहस्रेण, लक्षम् लक्षेणेत्यादि ॥ द्वन्द्वमेययोरिति किम् ? द्वे विंशती घटानाम्, तिस्रो विंशतयो गवाम् । विंशत्यादेः सङ्ख्यास्थानस्यैव द्वित्वबहुत्वविवक्षायां द्विवचनबहुव-चने । यदाह—'विंशत्याद्येकार्था स्त्रिया तु नित्यं नपुंसकेऽदन्ता । सङ्ख्या शतादिरिष्टा द्वित्वाद्यर्थे च सङ्ख्यायाम्' । सा चेति प्रसिद्धसङ्ख्यापरामर्शात्संख्यासख्या प्रसिद्धसङ्ख्यारूपद्व-न्द्वपरिग्रह इतीह न भवति । एकश्चैनाय दीयतां विंशतिश्चैनायेत्येकविंशती आभ्यां दीयता-मिति द्विवचनमेव भवति । द्वन्द्वे द्वित्वबहुत्वयोर्मेये तु बहुत्वस्यापवादो योगः ॥ विपुला-वृत्तम् ॥ ६ ॥

---

समाहारद्वन्द्वो ननु इतरेतरयोग इत्यर्थः । एकविंशतिर्घटा घटानां चेति इतरेतरयोगद्वन्द्वोदाहरणम्, एवमन्येऽपि । सङ्ख्येये त्वस्यपीति–त्वस्यपीति समन्नमव्यय यथार्थे, तेन सङ्ख्येये उदाहरणं यथा इत्यर्थः । द्वे विंशती घटानामिति द्वे इति पृथक् विभक्तम् तेन इतरेतरयोगद्वन्द्वस्य घटानामित्यनेन सङ्ख्येयस्यापि व्युदासः । अत्र केवलसङ्ख्यारूपत्वमेवेत्यर्थः । द्वे विंशती घटानां चत्वारिंशदित्यर्थः । तिस्रो विंशतयो गवामिति गवां षष्टिरित्यर्थः । विंशत्यादेः सङ्ख्यास्थानस्येति विंशत्यादिकस्य सङ्ख्यास्थानस्यैव । द्वित्व-बहुत्वविवक्षायामिति द्विवचनबहुवचनविवक्षायां द्विवचनबहुवचने भवतः । कोऽर्थः यदा विंसीत्यु-च्यते । तदा सङ्ख्यास्थानस्य वीसीत्यत्र (?) द्वित्वं । यथा । द्वे विंशती एव तीन वीसी इति बहुत्वे तिस्रो विंशतयो इति भवतीत्यर्थः । 'विंशत्याद्येकार्था स्त्रिया [illegible] नित्यं नपुंसकेऽदन्ता । सङ्ख्या शतादिरिष्टा द्वित्वाद्यर्थे च सङ्ख्यायाम् ॥ १ ॥ एतदार्याव्याख्या–विंशतिरादिर्यस्याः सा विंशत्याद्या इदं सङ्ख्याशब्दस्य विशेषणम् । एकार्था एकवचनान्ता घटादौ सङ्ख्येये वर्त्तमाना नित्यं स्त्रिया स्त्रीलिङ्गे च दृष्टा । तुः पुनरर्थे । अदन्ता अकारान्ता शतादिः सङ्ख्या एकार्था एकवचनान्ता नपुंसके नित्यमिष्टा । तुरिति पदं अनुवर्त्तते तेन पुनः सङ्ख्यायां सङ्ख्यास्थाने विंसीसीति लक्षणे विंशत्याद्या सङ्ख्या द्वित्वाद्यर्थो एव द्विवचनबहुवचना एव भवतीति आर्यार्थः ॥ सा चेतीति अनेन बहुकत्यादीनां निरासः । प्रत्यासत्त्येति विंशत्यादिप्रसि-द्धसङ्ख्याप्रत्यासत्त्या द्वन्द्वो पि प्रसिद्ध एव गृह्यते । यथा सा चेति अपार्थकः ॥ द्वन्द्वे इति एकश्च विंशतिश्च एकविंशतिरितीतरेतरयोगद्वन्द्वे । द्वित्वबहुत्वयोरिति–एकविंशत्यादौ द्वित्वं द्वाविंशत्यादौ

**स्रुग्गीतिलताभिदि ध्रुवा विडनरि वारि घटीभबन्धयोः ।**
**शल्यध्वनिवाद्यभित्सु तु क्ष्वेडा दुन्दुभिरक्षविन्दुषु ॥ ७ ॥**

स्रुग्गीतिलताभिदि ध्रुवा—स्रुग्भेदे गीतिभेदे लताभेदे च ध्रुवशब्दः स्त्रीलिङ्गः । ध्रुवा—स्रुग्भेदः, गीतिभेदः, शालिपर्णी च लता । उपलक्षणत्वान्मूर्वायामपि । यदाह—'ध्रुवा मूर्वाशालिपर्ण्योर्गीतिस्रुग्भेदयोरपि' ॥ विडनरि—नरादन्यस्मिन्वाच्ये विश् इत्ययं शब्दः स्त्रीलिङ्गः—इयं विट् विष्ठा, इमा विशः प्रजाः । नरे तु देहिनामत्वात्पुंस्त्वम् । अयं विट् नरः, वैश्यश्च । प्रवेशे तु क्युक्ता इत्येव स्त्रीत्वम् ॥ वारि घटीभबन्धयोः वारीति शब्दरूपं घट्यां गजबन्धनभूमौ च स्त्रीलिङ्गम् । इयं वारि—घटी गजग्रहणगर्त्ता च, सरस्वत्यां तु तन्नामत्वादेव स्त्रीत्वम् । यदाह—'वारि स्मृता सरस्वत्यां वारि ह्रीबेरनीरयोः । वारी घटीभबन्धन्योः' ॥ शल्यध्वनिवाद्यभित्सु तु क्ष्वेडा—शल्यभेदे ध्वनिभेदे वाद्यभेदे च वाच्ये क्ष्वेडाशब्दः स्त्रीलिङ्गः । क्ष्वेडा वेणुशल्यम्, भटानां सिंहनादः, दन्तोष्ठ्यवाद्यं च । अन्यत्र तु फणामयादौ घञन्तत्वात्पुंस्त्वम् । लोहितार्कफलादौ तु नपुंसकत्वम् । यदाह—'क्ष्वेडः फणामये ध्याने गरले कुटिले त्रिषु । लोहितार्कफले क्ष्वेडं घोषपुष्पे दुरामदे' ॥ दुन्दुभिरक्षविन्दुषु—अक्षविन्दुषु प्रासकबिन्दुषु वाच्येषु दुन्दुभिशब्दः स्त्रीलिङ्गः । इयं दुन्दुभिः । अक्षविन्दुत्रिकद्वयम् । 'दुन्दुभ्या किल तत्कृत पतितया यद्द्रौपदी हारिता' । अन्यत्र तु भेर्यां प्रातिपद्यपाठात्पुंस्त्वम् ॥ वैतालीयम् ॥ ७ ॥

**गृह्या शाखापुरेऽश्मन्तेऽन्तिका कीला रताहतौ ।**
**रज्जौ रश्मिर्यवादिर्दोषादौ गञ्जा सुराग्रहे ॥ ८ ॥**

गृह्या शाखा पुरे—शाखापुरे नगरसमीपवर्त्तिनि पुरान्तरे वर्त्तमानो गृह्यशब्दः स्त्रीलिङ्गः । इयं गृह्या—शाखापुरम्, अन्यत्र यथाप्राप्तम्—तेनास्वैरिणि पक्ष्ये च गुणवृत्तित्वादाश्रयलिङ्गः । गृहासक्तमृगाण्डजयोस्तु देहिनामत्वात्पुंलिङ्गः । पुरीषमार्गे तु सयुक्तयान्तत्वात्षण्ढे । यद्गौडः—'स्त्रियां शाखापुरे छेके ना त्रिष्वस्वैरिपक्ष्ययोः । गृह्यं पुरीषमार्गे च' ॥ अश्मन्तेऽन्तिका—अश्मन्ते चुल्ल्यां वाच्ये अन्तिकशब्दः स्त्रीलिङ्गः । अन्तिका चुल्लिः । अन्तीत्यधिश्रयणी भवेदिति तु माला । अन्यत्र सामीप्येऽन्तिकनामत्वान-

---

यथोरपवादः । मेये इति सङ्ख्येये विंशतिघटाः, नतु विंशत्वय इत्यर्थः ॥ ६ ॥ स्रुग्भेद इति—स्रुचो भेदः स्रुग्भेदः । यस्यां सर्वसज्ञार्थं आज्यं निधीयते सा ध्रुवोच्यते । यदाहुः 'ध्रुवा तु सर्वसज्ञार्थं यस्यामाज्यं निधीयते' इति । गीतिभेद इति नाट्ये छन्दोबन्धेन या गीयते । शालिपर्णी च लतेति साल्वनीति नाम्नी लता । मूर्वायामिति पीलुवर्णीति (पीलवनी ?) प्रसिद्धायाम् । प्रजा इति लोकः । सरस्वत्यामिति सरस्वती-नाम्नी नदी तस्याम् । ह्रीबेरमिति वालकम् । वेणुशल्यमिति वंशशलाका । दन्तोष्ठ्यवाद्यमिति लोके मुखचङ्ग इति नाम्ना प्रसिद्धम् । गरले इति विषे । लोहितार्कफले इति रक्तार्कफले । घोषपुष्पे दुरामदे इति द्वावपि शब्दौ ओषधिविशेषवाचकौ ॥ ७ ॥ गृहासक्तमृगाण्डजयोरिति गृहासक्तो मृगोऽण्डजश्चेति

पुंसकत्वं वक्ष्यते । सन्निहिते तु गुणवृत्तित्वादाश्रयलिङ्गता । कीला रताहतौ—सुरतप्रहणने कीलशब्दः स्त्रीलिङ्गः । यद्वात्स्यायनः—'कीला उरसि कर्त्तरी शिरसि विद्धा कपोलयोः'। अन्यत्र तु केफण्याग्नौ स्त्रीपुंसलिङ्गो वक्ष्यते । रज्जौ रश्मिः—रज्जौ वाच्यायां रश्मिशब्दः स्त्रीलिङ्गः । इयं रश्मिः रज्जुः । अन्यत्र तु किरणे तिग्मत्वात्पुंसि । यवादिर्दोषादौ—इह 'यवयवनारण्यहिमाद्दोषलिप्युरुमहत्त्वे' (२।४।६५) इति सूत्रोक्ता यवादयः शब्दा दोषादयश्चार्था गृह्यन्ते । यवयवनअरण्यहिमा दोषलिप्युरुमहत्त्वेषु यथासङ्ख्यं स्त्रीलिङ्गाः । दुष्टो यवो यवानी । यवनानां लिपिर्यवनानी । उर्वरण्यं अरण्यानी । महद्धिमं हिमानी । दोषादाविति किम् ? यवः, यवनाः—धान्यविषयनामत्वात्पुंस्त्वमेव । अरण्यं अरण्यम् । हिमं हिमम् । प्रतिपदपाठान्नपुंसकत्वमेव । गञ्जा सुरागृहे—सुरागृहे वाच्ये गञ्जाशब्दः स्त्रीलिङ्गः । गञ्जा सुरागृहम्, खानौ स्त्रीपुंस्त्वं वक्ष्यते ॥ पथ्यावक्त्रम् ॥ ८ ॥

अहम्पूर्विकादिर्वर्षा मघा अप्कृत्तिका बह्वौ ।
या तु जलौकाप्सरसः सिकतासुमनः समाः ॥ ९ ॥

अहम्पूर्विकादिः—अहम्पूर्विकादयो मयूरव्यंसकादिषु कृतनिपातनाः शब्दाः स्त्रीलिङ्गाः । अहम्पूर्विका आहोपुरुषिका अहमहमिकेत्यादि । यद्गौडः—'अहं पूर्वो अहं पूर्व इत्यहम्पूर्विका स्त्रियाम् । आहोपुरुषिका दर्पाद्या स्यात्सम्भावनात्मनि । अहमहमिका स्यात्परस्परमहमिति'। क्रियाया रन्यपदार्थगुणवृत्तित्वादेव सिद्धम् ॥ वर्षा मघा-अप्-कृत्तिका बह्वौ—वर्षाद्यः कृत्तिकान्ताः स्त्रीलिङ्गाः । ते च बह्वर्थवृत्तय एव प्रयोक्तव्याः ॥ या तु जलौकाप्सरसः सिकताः सुमनः समाः—जलौका आदयोऽपि स्त्रीलिङ्गा विकल्पेन [illegible] बह्वर्थवृत्तयः । इमा वर्षा —प्रावृट् । एवं मघा —नक्षत्रविशेषः । आपः —जलम् । कृत्तिका —नक्षत्रविशेषः । अथशाधा बाहुला इत्यपि । यद्गौडः—'कृत्तिकासु स्त्रिया भूम्नि बहुलाः'। इमा जलौकसः । इयं जलौका रक्ताकर्षी प्राणी । यद्वामनः—'बह्वस्तु समाः सिकतावर्षाप्सुमनोजलौकसोऽप्सरसः'। एकत्वेऽपीति बुद्धिसागरः, मालायां [illegible] पुंस्काण्डे जलौकाश्चेत्येकवचनान्तश्च पठितः । इमा अप्सरसः । इयमप्सरा स्वर्गस्त्री । एकत्वे वामनबुद्धिसागरौ । इमाः सिकताः । इयं सिकता वालुका । एकत्वे तु लक्ष्यम्—'एका सिकता तैलदानेऽसमर्था'। इमाः सुमनसः । इयं सुमनाः पुष्पम् एकत्वे । यद्गौडः—'सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोः'। सुपण्डितयोर्देवनामत्वात्पुंस्त्वमेव । शोभनं मानोऽस्येति गुणवृत्तेस्त्वाश्रयलिङ्गता । इमाः समाः । इयं समा वर्षम् । यद्गौडः—'साधुसर्वसमानेषु वाच्यवद्वत्सरे समा'। एकत्वे लक्ष्यम्—'तृतीयस्यां समायां तु ममा ममा विजायते'। समान्तत्वात्सुषमा कोटिभेदः, परमशोभा च । शोभने त्वाश्रयलिङ्गः । मघाकृत्तिकयोर्नक्षत्रनामत्वादप्सरसस्तु

वम । [illegible] वायव्ये । केकण्याग्नौ इति कुहणीमयुखे । सुरागृह इति खं, गपुंहे ॥ ८ ॥ स्वाकथः प्राग्नीति क्रोडे पाठो इति अमिटिः । एकत्वेऽपीति पुंस्पवन्ति । पुंस्काण्डेऽपीति कृतप्रायो । धीरदेवयोरिति पण्डितदेवयोः । कोटिभेद इति प्रथमावर-

योनिमन्नामत्वात्स्त्रीत्व सिद्धमेव, वहुत्वार्थस्तु पाठ ॥ सङ्कीर्णविपुलावितानम् ॥ ९ ॥

गायत्र्यादय इष्टका बृहतिका सवर्त्तिका सर्जिका-
दूपीके अपि पादुका क्षिरुकया पर्यस्तिका मानिका ।
नीका कञ्चुलिकाऽह्नुका कलिकया राका पताकाधिका
शूका पूपलिका निका चविकयोल्का पञ्चिका पिण्डिका ॥ १० ॥

गायत्र्यादय शब्दा स्त्रीलिङ्गा । इय गायत्री । खदिरे स्वऽय शिंशपादित्यात्स्त्री । उष्णिक् अनुष्टुप् । बृहती पङ्क्ति । त्रिष्टुप् जगती अतिजगती । शक्करी । अय मेखलानद्योरपि । अतिशक्करी । अष्टि अत्यष्टि । धृति अतिधृति । कृति प्रकृति आकृति विकृति ८
सङ्कृति अभिकृति उत्कृति । एता षडक्षरादारभ्य षड्विंशत्यक्षर यावत् छन्दसा जातय । अक्षरनियमात्मक छन्द ॥ गुरुलघुनियमात्मक तु वृत्तमिति बहुल वृत्तेत्यादिना न सिद्ध्यतीति वचनम् ॥ अथ कान्तास्त्रिपञ्चाशत्—सर्जिकादूपिके इत्यनेतरेतरद्वन्द्व ।
इष्टका मृद्विकारविशेप । बृहतिका उत्तरासङ्ग । कप्रत्ययाभावे बृहती—कण्टकारिका ।१२
'वैसन क्षुद्रवार्त्ताकी छन्दोभेदो महत्यपि' ॥ सवर्त्तिका पद्मादीना नवोद्भिन्न दल सयक्तिकाप्यम् ॥ सर्जिका क्षारविशेप । अर्थप्राधान्यात्सर्ज्जिका सुवर्चिका सुप्रीत्यादि ॥ दूपीका नेत्रमलम् । अर्थप्राधान्याद्दूषिकेत्यपि ॥ पादुका उपानत् । अर्थप्राधान्यात् 'उपानत्पादुका पादू पन्नद्धी स्यात्पदत्वरा । पादजङ्घ प्राणहिता पेशी पदरथीति च'इत्यपि ॥ क्षिरुका मृद्वि-१६
कारविशेप । पर्यस्तिका परिकर अर्थप्राधान्यादवसक्थिका । मानिका द्रोणचतुष्टयम् । नीका सारणि । कञ्चुलिका शूर्पासक । अह्नुका धान्यकम् ॥ कलिका कुड्मलम् । कलिकान्तत्वादुत्कलिका—हेला उत्कण्ठा च । वीचौ तु तन्नामत्वात्सिद्धम् ॥ राका—कच्छू दृष्टरज -
कन्या सैरिन्ध्रेव पूर्णेन्दुश्च पूर्णिमा । पताका—सौभाग्यम् अङ्कध्वज वैजयन्ती च । अत्र२०
चार्थप्राधान्यात्पटाकावैजयन्तीजयन्त्योऽपि ॥ अन्धिका—कैतवम् मिद्ध च । शूका हेस्या ॥ पूपलिका अपूप । कस्याभावे पूपली । अर्थप्राधान्यात्पोली इत्यपि । यद्गौड —'पोली [illegible] पूपली' । अन्ननामत्वान्नपुसकत्वे प्राप्तेऽस्य पाठः ॥ निका कूपस्यान्तिके रज्ज्वादि [illegible]

लक्षण ॥ ९ ॥ इय गायत्रीति छन्दोजाति । अयमिति गायत्रीशब्द । अयमिति शब्द [illegible] इति गायत्र्याद्या उत्कृतिपर्यन्ता । अक्षरनियमात्मकमिति श्रीप्रमुखि । गुरुलघुनियमात्मक [illegible] प्रभृति । मृद्विकारविशेप इति लोके इटि । कण्टकारिकेति रींगणी । वैसनमिति [illegible] लघुवार्त्ताकी रींगणीभेदोऽयम् । क्षारविशेप इति साजी । मृद्विकारविशेप इति [illegible] पालठी । धान्याकमिति धाणा । कुड्मल इति यद्विकसित न स्यात् तत्, लोके [illegible] इति कल्लोले । तन्नामत्वादिति वीचीनामत्वात् । कच्छूरिति पामा । सैरिन्ध्र [illegible] इति चिह्नध्वज यस्मिन् ध्वजे [illegible] कैतवमिति कपटम् । मिद्धमिति [illegible] लोकोत्तया सुग इत्युच्यते, यदुदाहरण [illegible]

न्यस्य धान्यम् ॥ चविका चव्यम् । नपुंसकोऽप्ययं दृश्यते । अर्थप्राधान्यात्पुंस्यपि । यद्गौड —'पुंसि वा चविका तुल्ये' । उल्का ज्वाला ॥ पञ्जिका—व्यास शास्त्रभेदश्च । यद्गौड — 'शास्त्रभेदे तु कणिका पञ्जिका समे' । पिण्डिका चक्रनाभि ॥ शार्दूलविक्रीडितम् ॥ १० ॥

क्षुवका क्षिपका कनीनिका शम्बूका शिबिका गवेधुका ।
कणिका केका विपादिका मिहिका यूका मक्षिकाऽष्टका ॥ ११ ॥

एते शब्दाः स्त्रीलिङ्गाः । क्षुवका ओषधिविशेषः । उपलक्षणत्वात्क्षुपका, मैवं । क्षिपका आयुधविशेषः । कनीनिका नेत्रतारा । शम्बूका शुक्तिः । शम्बूकः पुंलिङ्ग इत्यमरटीका । शिबिका याप्ययानम् ॥ गवेधुका तृणधान्यविशेषः । णत्वाद्ग्रवनिष्टमत्वात् यत्वाद्गवीधुकेत्यपि ॥ कणिका—सक्तुकणः गोधूमपिष्टं च । अत्र चार्थप्राधान्यात्कुद्दसमितेत्यपि । यद्गौड —'यव-गोधूमयोश्चूर्णं स्यात्कुद्दसमिता स्त्रियाम्' ॥ केका मयूरध्वनिः । विपादिका पादस्फोटः । मिहिका हिमम् । यूका क्षुद्रजन्तुविशेषः । मक्षिका जन्तुभेदः । अष्टका पितृदैवत्यं कर्म । केकाया विपर्ययनामत्वात्यूकामक्षिकयोस्तु दर्हिनामत्वात्पुंस्त्वे प्राप्ते पाठः ॥ वैतालीयम् ॥ ११ ॥

कूर्चिका कूचिका टीका कोशिका केणिकोर्मिका ।
जलौका प्राचिका धूका कालिका दीर्घिकोष्ट्रिका ॥ १२ ॥

एते शब्दाः स्त्रीलिङ्गाः । कूर्चिका क्षीरविकृतिः । कूचिका 'कूर्चिका सूचिकायां च कुञ्चि-कायां च कुड्मले । कपाटाकुटये क्षीरविकृतावपि' । कपाटाकुटयेऽर्थप्राधान्यात्कुञ्चि-त्यपि । टीका वृत्तिः । कोशिका दीपभाजनम् । केणिका गुणलयनी । ऊर्मिका अङ्गुली-यम् । जलौका जलौकसः । अर्थप्राधान्याज्जलूकेत्यपि । प्राचिका श्येनः । धूका पताका । कालिका क्षारकीटः । तथा 'कालिका योगिनीभेदे कार्ष्ण्ये गौर्यां घनावलौ । क्रमदेयव-स्तुमूल्ये धूमरीनवमेघयोः ॥ पटोलशाखारोमाली मांसीकारीषु कालिका । तथा वृश्चिकप-त्रेऽपि' । दीर्घिका परिखा । उष्ट्रिका आंठिजर । अर्थप्राधान्यान्नन्दापि । यदाह—'नन्दा माणिकसम्पदो' ॥ पथ्यावक्त्रम् ॥ १२ ॥

इह अपूपशब्दः पोलीवाचकः, लोके वाटी । चव्यमिति चविकनामौषधम् । ज्वालेति लोके झालि । व्यास इति शास्त्रस्य न्यासः, पञ्जिकेत्यर्थः । समे इति यथा कणिकाशब्दो वृत्तभेदे वर्तते यथा पञ्जिका शब्दोऽपि इत्यर्थः ॥ १० ॥ ओषधिविशेष इति भाजनभेदः । सैवति आयुधविशेषः । शुक्तिरिति लोके सीपिनी । याप्ययानमिति याप्यस्याऽशक्तस्य यानं याप्ययानं लोके डोली पालखीप्रमुखं उच्यते । तृणधान्यविशेष इति लोके वरटीनाम धान्यम् । सक्तुकण इति लोके कणी । अत्रेति गोधूमपिष्टार्थे । पादस्फोट इति लोके वियाऊ । विपर्ययनामत्वादिति शब्दनामत्वात् ॥ ११ ॥ क्षीरविकृतिरिति यल्हो केदरि इति वा प्रसिद्धिः । कुञ्चिकायामिति आञ्चलकूर्चिकायाम् । कुड्मले इति ईषद्विकसिते । कपाटाकुटये इति कूची इति प्रसिद्धे । गुणलयनीति व(क?)गोटीप्रमुखं । अङ्गुलीयमिति लोके मुन्दडी । जलौकस इति लोके जलो । श्येन इति लोके सींचाणा । घनावली इति मेघमालायाम् । क्रमदेयवस्तुमूल्ये इति यत्र यत्करणादौ व्यवहारिभिघृतादिवस्तुप्रवेशनाय द्रव्यं गृह्यते तत्र । धूमरीति लोके धूमरी । पटोलशाखेति औषधविशेषः । रोमालीति रोमराजी । मांसीति जटिनाम गन्धद्रव्यम् । वृश्चिकपत्रेऽपीति औषध

शलाका वालुकेषीका विहङ्गिकेषिके उखा ।
परिखा विशिखा शाखा शिखा भङ्गा सुरुङ्गया ॥ १३ ॥

एते शब्दा सुरुङ्गया सह स्त्रीलिङ्गा । विहङ्गिकेषिकयोरितरेतरद्वन्द्वः । शलाका–चित्रकूर्चिका, शल्यम्, श्वावित्, शर, मदनसा(शा)रिका, छत्रपञ्जरकाष्ठी च ॥ वालुका सिकता । चालुकान्तत्वाद्धिमवालुका । कर्पूर इत्यपि । हरिवालुके तु भेषजनामत्वान्नपुंसकत्वम् ॥ इषीका । तन्त्रेण इषिका वा । वीरणशलाका । विहङ्गिका भारयष्टि । इषिका गजाक्षिकूटकम् ॥ अथ खान्ताः पञ्च ॥ उखा–स्थाली, सिक्थ्च । स्थाल्यामर्थप्राधान्याद्धण्डिकेत्यपि । परिखा–सैंवत खेयम् ॥ विशिखा–प्रतोली, खनित्रिका, रथ्या, नलिका च । बाणे तु तन्नामत्वात्पुंसि । शाखा–वेदविभाग, वृक्षावयव, भुजश्च । शिखा–'चूडाया च शिफाया च ज्वालाया चाऽग्रमात्रके । शाखाया केकिचूडाया लाङ्गलिक्या घृणौ शिखा ॥ प्रधानेऽपि' । अथ गान्तौ ॥ भङ्गा शणधान्यम् । अर्थप्राधान्यान्मातुलानीत्यपि । सुरुङ्गा गूढमार्ग । अर्थप्राधान्यात्सन्धिलेत्यपि । यद्गौड –'सन्धिला तु सुरुङ्गाया नान्दीमन्दिरयोरपि' । भङ्गाया धान्यनामत्वात्पुंस्त्वे सुरुङ्गायास्तु बिलनामत्वान्नपुंसकत्वे प्राप्ते पाठ ॥ पथ्यावक्त्रम् ॥ १३ ॥

जङ्घा चञ्चा कच्छा पिच्छा पिञ्जा गुञ्जा खजा प्रजा ।
झञ्झा घण्टा जटा घोण्टा पोटा भिस्सटया छटा ॥ १४ ॥

एते शब्दा भिस्सटया सह स्त्रीलिङ्गा । अथ घान्तः–जङ्घा अङ्गविशेष । अथ चान्तः ॥ चञ्चा–तृणमय पुरुष । अथ छान्तौ ॥ कच्छा 'नौकाङ्गे परिधानस्य पश्चाऽदञ्चलपल्लवे । कच्छा तु चीरिकाया तु वाराह्या च निगद्यते' ॥ अञ्चलपल्लवे चार्थप्राधान्यात्कच्छाटिकेत्यपि । यद्गौड –'कच्छाकच्छाटिके समे' ॥ पिच्छा 'पिच्छा तु शाल्मलीवेष्टे

---

विशेषे । वलिंजर इति लोके मूणी । मणिक इति मूणि । सम्पदिति सम्पदा ॥ १२ ॥ शल्यमिति प्रहरण विशेष । श्वावित् इति लोके सेहलओ । मदनशारिकेति लोके सालही नाम्नी पक्षिणी । छत्रपञ्जरकाष्ठीति पत्रकाष्ठी पञ्जरकाष्ठी च, छत्रदण्डिका पञ्जरदण्डिका चेत्यथ । सिकतेति लोके वेळू । हरिवालुके इति लोके एलियओ इति प्रसिद्धे । यदाह 'एलावालुकमालुक वालुक हरिवालुक'मिति । तन्त्रेणेति शलाकावालुकेषीकेति साधारणनिर्देशेन । वीरणशलाकेति वीरणस्य उशीरनाम्न तृणस्य शलाका वीरणशलाका वीरणकम्बेत्यथ । भारयष्टिरिति लोके कावडि इति प्रसिद्धि । गजाक्षिकूटकमिति गजनेत्रोपरि उच्चभाग । सिक्थ इति पुत्तम् । सैंवत खेयमिति लोके खाई । खनित्रिकेति मुनीना मृद्विदारणभाण्ड शस्त्रीप्रायम् । वेदविभाग इति वेदाश । शिफायामिति वृक्षजटायाम्, कन्दे इत्यनेकार्थवृत्तौ । यथा च प्रयोग 'शिफोद्भवाना कदलीलतानाम्,' शिफोद्भवाना कन्दोद्भवानामित्यथ । ज्वालायां इति झालि इति प्रसिद्धायाम् । लाङ्गलिक्यामिति अग्निशिखानाम्न्या ओषध्याम् । घृणौ इति किरणे । नान्दीति द्वादशतूर्यनिर्घोषः ॥ १३ ॥ तृणमय पुरुष इति भउड इति प्रसिद्धि । परिधानस्य पश्चादञ्चलपल्लवे इति काछडी [illegible] दे । चीरिकायामिति तिमिरान [illegible] राह्यामिति लोके वाराही

मेण्डे चाऽश्वपदाऽऽमये । पङ्क्तौ पूगच्छटाकोशमोचायिनिर्विटेपु च' ॥ अथ जान्ताश्चत्वारः ॥ पिञ्जा तूलम् । हरिद्रायां तु तन्नामत्वादेव स्त्रीत्वम् । व्याकुले त्वाभयलिङ्ग ॥ गुञ्जा पटह, कलध्वनिश्च । कृष्णलायां तु तन्नामत्वादेव स्त्रीत्वम् । मज्जा मेध, अहम्मन्य । अत्र चार्थप्राधान्यात्तज्जाते त्वपि । प्रजा लोक, अपत्यं च । अथ ञान्तः ॥ झञ्झा ससीकरो मेघवात । ध्वनिभेदे तु विषयनामत्वात्पुंसि ॥ अथ टान्ताः षट् ॥ घण्टा घनवाद्यविशेष, पाटलिश्च । वाचेऽर्थप्राधान्यात्किङ्किणी क्षुद्रघण्टा ॥ जटा 'जटा कचविकारः स्यान्मांसी मूलं च भूरुहाम्' । घोण्टा—बदरीफलम्, बदरी, क्रमुक, क्रमुकफलं च । पोटा षण्ढ । अयप्राधान्यात्तृतीयाप्रकृतिरित्यपि । यन्माला—'तृतीयाप्रकृति स्त्रियाम्' । नटीवेश्ययोस्तु योनिमन्नामत्वादेव स्त्रीत्वम् । कुत्सिता भिस्सा भिस्सटा—दग्धिका, लक्ष्यानुरोधात् । यथा खगग्रामटी, वधूटी, कर्कटीति ॥ छटा समूह-विशेष । झञ्झाया वातनामत्वात्पोटायास्तु देहिनामत्वात्पुंस्त्वे प्राप्ते पाठ ॥ मनिपुला ॥ १४ ॥

'विष्ठा मञ्जिष्ठया काष्ठा पाठा शुण्डा गुडा जडा ।
वेटा वितण्डया दाढा राढा रीढावलीढया' ॥ १५ ॥

एते शब्दा मञ्जिष्ठया वितण्डयाऽवलीढया च सह स्त्रीलिङ्गा ॥ अथ ठान्ताश्चत्वार'—निष्ठा पुरीपम् ॥ मञ्जिष्ठा रागद्रव्यविशेष । अर्थप्राधान्यादरुणापि ॥ काष्ठा 'अष्टादशनिमेष्या च स्यादुत्कर्षे स्थितौ दिशि । काष्ठादारुहरिद्रायां दारुणि स्यान्नपुंसकम्' ॥ स्थिति-र्मर्यादा । पाठा औषधविशेष । अथ डान्ताः पञ्च ॥ शुण्डा 'शुण्डापि जलहस्तिन्या मदिराकरिहस्तयो । नलिन्यां वारयोषायां शुण्डस्तु मदनिर्भरे' । गुराया तु स्त्रीपुंसत्व वक्ष्यते । गुडा 'गुड स्याद्गोलके हस्तिसन्नाहेक्षुविकारयो । गुडा स्नुहीगुडिकयो' ।

फल । शाल्मलीवेष्ट इति शाल्मलीनिर्यास । मेण्डे इति इह मण्डशब्देन पृष्ठादेरितर, लोकोक्त्या राख्याख्यस्योपरि या भवति सा रोवरी इत्युच्यते । अवस्रावण च लोके ओसावण तत्र । अश्वपदामये इति वाजिचरणरोगे । पङ्क्तौ इति समूहे । पूग उटेति मधुकसमूह । कोशे इति अण्डकादि । मोचेति कदली । चिनिचिलमिति लोके किल्सणओ इति प्रसिद्धि । तूलमिति पिचु । पटह इति आनक । कल ध्वनिरिति मधुरो नाद । मन्थ इति मन्थानक । अहम्मन्य इति दारुहस्त, लोके कुडछी अथवा डोइलओ । अत्रेति प्रहत । ससीकर इति जलबिन्दुयुक्त । घनवाद्यविशेष इति लोके घाटि, अथवा कांस्यतालादि । पाटलिरिति लोके पाडल । क्षुद्रघण्टेति लघुघाटि । मांसीति छडिनामगन्धद्रव्यम् । मूलं च भूरुहामिति लोके जडि । क्रमुक इति सोपारीनाम वृक्ष । क्रमुकफलमिति सोपारी । षण्ढ इति नपुंसक । नटीवेश्ययोरिति नटीवेश्ययोरर्थे पोटाशब्दस्य । दग्धिकेति ओखराडि । कुत्सितो ग्रामो ग्रामटी कुत्सायां ट प्रत्यय । गौरादित्वात् ङी । खगस्य ग्रामटी खगग्रामटी । समूहविशेष इति लोके छाटि इति प्रसिद्धि ॥ १४ ॥ रागद्रव्यविशेष इति मजीठि । उत्कर्षे इति उत्साहे । स्थितौ इति स्थाने, मर्यादायामिति यावत् । औषधविशेष इति लोके पाठ । नलिन्यामिति कमलिन्याम् । वारयोषायामिति वेश्यायाम् । मदनिर्भर इति मदेन निर्भर उन्मत्त इत्यर्थ । गोलके इति वृत्ते मृदादिगोलके ।

हस्तिसन्नाहे तु स्त्रीपुंसलिङ्गो वक्ष्यते । जडा शूकशिम्बी । 'शूकशिम्ब्या जडा मूकाप्रज्ञशीतेषु च त्रिषु' ॥ वेडा नौः । वितण्डा । 'वितण्डा वादभेदे स्यात्कर्चीशाके शिलाह्वये । वितण्डा करवीर्यां च' ॥ अथ ढान्ताश्चत्वारः—दाढा—दंष्ट्रा, अभिलाषश्च । राढा—शोभा, सुह्मदेशश्च । रीढा अवज्ञा । अवलीढा हेला ॥ पथ्यावक्त्रम् ॥ १५ ॥

**घृणोर्णा वर्वणा स्थूणा दक्षिणा लिखिता लता ।**
**तूणता त्रिवृता त्रेता गीता सीता सिता चिता ॥ १६ ॥**

एते शब्दा स्त्रीलिङ्गा । अथ णान्ताः पञ्च—घृणा निन्दा, दयाया तु तन्नामत्वादेव स्त्रीत्वम् ॥ ऊर्णा—मेषरोम, भ्रूमध्यावर्तश्च । वर्वणा मक्षिका । देहिनामत्वात्पुस्त्वे प्राप्तेऽस्य पाठः ॥ स्थूणा—गृहादीनामुत्तम्भनकाष्ठम्, लोहप्रतिमा, व्याधिविशेषश्च । दक्षिणा—यज्ञदानम् प्रतिष्ठा दिक्च । यद्गौडः—'दक्षिणं सरलाऽवामपरच्छन्दानुवर्त्तिषु । निष्वऽवाचीभवेऽपि स्यऽवाच्या दानप्रतिष्ठयो' ॥ अथ तान्ताः षोडश । लिखिता लिपि ॥ लता 'लता ज्योतिष्मती स्पृक्काशाखावल्लीप्रियङ्गुषु । लता कस्तूरिकायां च माधवीदूर्वयोरपि' ॥ तूणता कार्मुकम् । तल्प्रत्ययान्तस्य लिङ्गमिन्यनीत्येव स्त्रीत्वम् ॥ त्रिवृता ओषधि । अर्थप्राधान्यात्त्रवृता मलया । त्रिवृत्, विपघ्नी च । यद्गौड —'विपघ्नस्तु शिरीषे ना गुडूचीत्रिवृतो स्त्रियाम्' ॥ त्रेता युगविशेष, अग्नित्रय च । गीता शास्त्रविशेष । सीता लाङ्गलपद्धति, गङ्गा, जानकी च । सिता शर्करा । बद्धशुक्लावसितेष्वाऽऽश्रयलिङ्ग । अर्थप्राधान्यात्कठिन्यपि । चिता—मृतदाहाय काष्ठशय्या ॥ पथ्यावक्त्रम् ॥ १६ ॥

**मुक्ता वार्ता लूतानन्ता प्रसूता मार्जिताऽमृता ।**
**कन्था मर्यादा गदक्षुगन्धा स्वधा सुधा ॥ १७ ॥**

एते शब्दा स्त्रीलिङ्गा । मुक्ता मौक्तिकम् । यद्गौड —'मुक्ता स्त्री मौक्तिके प्राप्तमुक्तिमोचितयोस्त्रिषु ॥ वार्त्ता वार्तिङ्गणे वृत्तौ वार्त्ता कृष्याउदन्तयो' ॥ लूता—ऊर्णनाभः, पिपीलिका, रोगविशेषश्च । पे लूतिका । देहिनामत्वात्पुस्त्वे प्राप्तेऽस्य पाठ ॥ अनन्ता 'दुरालभाया

---

सुहीति लोके थोहरि । गुडिकेति गुड एव सूक्ष्मो गुडिका लोके गोठी । शूकशिम्बीति कउछि । वादभेदे इति 'जल्प प्रतिपक्षस्थापनाहीनो वितण्डा' इति लक्षणे । कर्चीशाके इति कचीनास्ति शाके । शिलाह्वये इति शिलाजित इति प्रसिद्धे । करवीर्यामिति लताविशेषे ॥ १५ ॥ भ्रूमध्यावर्त्त इति चक्रवर्त्तिचिह्न इत्यनेकार्थवृत्ति । गृहादीनां उत्तम्भनकाष्ठमिति लोके थूणी । अवाम इति वामेतरः । अवाचीभवे इति दक्षिणदिग्भवे । अवाच्या इति दक्षिणदिशि । ज्योतिष्मतीति लवणाशाक इति अनेकार्थवृत्ती । स्पृक्केति पीकनाम गन्धद्रव्यम् । प्रियङ्गुरिति फलिनी । कस्तूरिकायामिति मृगमदे । माधवीति वासन्ती लोके अमीतओ । दूर्वेति लोके द्रोब । कार्मुकमिति धनु [illegible] । शर्करेति लोके साकरि अथवा मिश्री । कठिन्यपीति कठिनीशब्देनापि [illegible] ॥ १६ ॥ प्राप्तमुक्तिरिति प्राप्तमोक्षः । वार्तिङ्गणे इति वइङ्गण इति प्रसिद्धे । वृत्तौ इति [illegible] दिरिति कृषि पाशुपाल्य वाणिज्या च । उदन्त इति लोके वाति । ऊर्णनाभ इति [illegible] पिपीलिकेति वल्मीककृमि, उदेही स्पर्श । रोगविशेष इति लोके मधरे [illegible] रोग । दुरालभेति लोके जवासो

दूर्वाया विशल्याशारिवाकुंषु । गुडूचीलाङ्गलिक्योः स्त्री रे क्षीबेऽनयधौ त्रिषु' ॥ शेषे हंसवनन्त पुंसि ॥ प्रसूता जह्ना । कुंजीस्ते तु हगे समानत्वादय पुस्त्वम्, पगिप्रद्धयोस्त्वाश्रयलिङ्ग ॥ मार्जिता—रसाला, अयप्राधान्यात् मर्जिताशिखरिण्यायपि ॥ अमृता—पथ्या, गुडूची, मागधी, आमलकी च ॥ अथ थान्त.—कन्था—स्यूतजीर्णवस्त्रप्रावरणम्, पुरविशेषश्च ॥ अथ दान्तौ—मर्यादा अवधि । गदा मद्गरणविशेष । अथ धान्ताश्चत्वारः । इस्तुगन्धा । 'इस्तुगन्धा कोविदारे क्रोष्टुश्च गोक्षुरतोशयो' । गोधा—दोर्बाणम्, ग्राहविशेषश्च । पुंध्वजोऽपि । गोधान्तत्वात्तृणगोधा । कृकलासश्चित्रकोलश्च । स्वधा पितृप्रदानार्थो मन्त्रविशेष । सुधा 'गङ्गेष्टिका स्नुही मूर्वा पीयूष लेपन सुधा' ॥ सङ्कीर्णविपुला ॥ १७ ॥

साला सूना धाना पम्पा झम्पा रम्पा प्रपा शिफा ।
कम्बा भम्भा सभा हम्भा सीमा पामारमे उमा ॥ १८ ॥

एते शब्दा स्त्रीलिङ्गा । अथ नान्तास्त्रयः—पामारमयोरितरेतरद्वन्द्व । साला—गोगलचर्म, निद्रा च ॥ सूना—आघातस्थानम्, अधोजिह्वा च । पुष्पे तु नान्तत्वाम्पुंसकत्वम् ॥ धाना—भृष्टयव अङ्कुरश्च । धाना भूणसक्तव स्युरिति द्रमिला ॥ अथ पान्ताश्चत्वारः—पम्पा सरोविशेष । झम्पा उत्प्लुत्य पतनम् । रम्पा चर्मकारोपकरणम् ॥ प्रपा पानीयशाला । अयत्तरि च क स्यादिति पुस्त्वे प्रायेऽस्य पाठ ॥ अथ फान्तः—शिफा तरुजटा ॥ अथ बान्त.—कम्बा कम्बि । अथ भान्तास्त्रय. ॥ भम्भा भेरी । सभा 'वृन्दे सामाजिके गोष्ठ्या द्यूतमन्दिरयो सभा' ॥ हम्भा गोध्वनि. । अर्थप्राधान्याद्रम्भापि ॥ अथ मान्ताश्चत्वारः ॥ सीमा । 'सीमाऽऽघाटे स्थितौ क्षेत्रे मर्यादावेलयोरपि' ॥ पामा कण्डू । अर्थप्राधान्यात् विचर्चिकाऽपि । रमा—लवणाकर सुग्रीवदाराश्च । उमा कीर्त्ति । अतस्यां तन्नामत्वाद्गौर्यां तु योनिमन्नामत्वादेव स्त्रीत्वम् ॥ सविपुला ॥ १८ ॥

चित्या पद्या पर्या योग्या छाया माया पेया कक्ष्या ।
दूष्या नस्या शम्या सन्ध्या रथ्या क्षुरया ज्या मञ्जल्या ॥ १९ ॥

---

दूर्वायामिति इह श्वेतदूर्वायाम् । विशल्येति इह विशल्याशब्देन दन्तीनाम्नी ओषधि । शारिवेति लोके उत्पलसारिवा चन्दनसारिवा । कुरिति पृथिवी । लाङ्गलिकीति लाङ्गली । खं इति आकाशे । अनयधौ इति अमर्यादे । हरौ इति कृष्णे । कुंजीस्ते हसे इति घुमली इति प्रसिद्धे । वेगीति वेगवान् । मेढ्र इति लोके पसरियको । रसालेति शिखरिणी । पथ्येति हरीतकी । मागधीति पीपलि । कोविदारे इति अहिसरको इति प्रसिद्धनाम्नि औषधे । क्रोष्टुयामिति शृगाल्याम् । गोक्षुर इति गोखरु, लोके काँटी । काश इति काशनाम तृणम् । दोर्बाणमिति ज्याघातवारणम् । ग्राहविशेष इति लोके गोह । पुंध्वजोऽपीति पुरुषवाच्यपि गोधाशब्दः स्त्री । चित्रकोल इति चित्रको वर्णसूकरः (चित्रसूकर ?) । गङ्गेष्टिकेति गांगटी । स्नुहीति थोहरि । मूर्वेति ज्याहेतुस्तृणविशेष लोके मीरउनी । लेपनमिति लोके छोह ॥ १७ ॥ आघातस्थानमिति वधस्थानम् । अधोजिह्वेति जिह्वावलम् । भृष्टयव इति लोके यवधाणी । भूण सक्तव इति लोके धूनासाव । चर्मकारोपकरणमिति लोके रापी । सामाजिके इति सभायोग्ये । आघाटे

एते शब्दाः स्त्रीलिङ्गाः । अथ यान्ताः सप्तदश, चित्या चिता । चर्या मार्गः ॥ मर्या क्रमः । सद्दसन्नन्ने सपर्या पूजा ॥ योग्या—अभ्यासः, अर्कस्त्री च । ऋद्ध्याख्यौषधे तु यान्तत्वात्षण्डे । यद्गौडः—'योग्यमृद्धावभिद्धे त्रिष्वर्कस्त्र्यभ्यासयोः स्त्रियाम्' । अभ्यासे अर्थप्राधान्यात्खुरली शस्त्राभ्यासः ॥ छाया 'तमोऽनातपयोश्छाया प्रतिबिम्बार्कयोपितोः । पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्मृता ॥ माया—दम्भः कृपा च । दम्भेऽर्थप्राधान्याच्छाम्बरीत्यपि । पेया—शृतम् दुग्धादि ॥ कक्ष्या । 'स्त्रिया प्रकोष्ठे हर्म्यादेः काञ्च्या मध्येभवन्धने । कक्ष्या बृहतिकायां च सादृश्योद्योगयोरपि ॥ दूष्या वरत्रा । अन्यत्र तु 'त्रिषु दूष्य दूषणीये क्लीबं चैत्येऽथ सद्मनि' । नस्या—वृषादीनां नासारज्जुः । शम्या—तालविशेषः, युगकीलश्च । सन्ध्या 'सन्ध्या पितृप्रसूनयोश्चिन्तामर्यादयोरपि । प्रतिज्ञायां च सन्धाने सन्ध्या च कुसुमान्तरे' ॥ रथ्या 'रथ्या रथौघविशिखावर्त्तनीचत्वरेषु च । रथवोढरि रथ्य स्यात्' ॥ कुल्या सारणिः । नग्ना तन्नामत्वात्कुलस्त्रिया तु योनिभङ्गनामत्वात्स्त्रीत्वम् । अरण्यादौ तु पुन्नपुंसको मन्यते । ज्या 'ज्या मौर्व्यां मातरि क्ष्मायाम्' । मङ्गल्या मल्लिका गन्ध्यगरः । तथा 'मङ्गल्या रोचनायां तु प्रियङ्गुशतपुष्पयोः । अध पुष्पीशङ्खपुष्पीशमीशुद्रचासु च । मङ्गल्यत्रायमाणे स्याद्बिल्वेऽश्वत्थे मसूरके । मङ्गल्य लिङ्ग मङ्गल्यो मनोज्ञेऽन्यभिधेयवत्' ॥ त्रिभुन्माला ॥ १९ ॥

उपकार्या जलार्द्रेरा प्रतिसीरा परम्परा ।
कन्दराऽसृग्धरा होरा वागुरा शर्करा सिरा ॥ २० ॥

एते शब्दा स्त्रीलिङ्गा । उपकार्या नृपमन्दिरम् । अर्थप्राधान्यादुपकारिकापि । उपकार्यति स्याऽऽश्रयलिङ्गावेतौ ॥ अथ रान्ता एकोनविंशतिः—जलार्द्रा आर्द्रवस्त्रम् । इरा—जलम्,

---

इति भरधी, यथा 'ग्रामो नास्ति कुत सीमा' ॥ १८ ॥ चितेति लोके चहि । अभ्यास इति अभ्यासशब्देनात्र शस्त्राभ्यासः । ऋद्धौ इति ऋद्धिनाम्नि औषधे । अभिद्धे इति प्रवीणे । अर्कस्त्रीति सूर्यस्त्री । अनातप इति आतपाभाव, लोके छांहडी । अर्कयोषिदिति सूर्यस्त्री । पालनमिति रक्षणम् । उत्कोच इति लञ्चा । कान्तिरिति प्रभा । सच्छोभेति प्रधानशोभा । पङ्क्तिरिति श्रेणिः, लोके पांति । शृत दुग्धादीति पक्व दुग्धादि । प्रकोष्ठे हर्म्यादेरिति हर्म्यादेर्गृहादिकस्य प्रकोष्ठे मध्यमदेशे । काञ्च्यामिति स्त्रीणां मेखलायाम् । मध्येभवन्धने—पछनाडी इति प्रसिद्धे । बृहतिकायामिति उत्तरासङ्गे । उद्योग इति उद्यमः । वरत्रेति इभमध्यबन्धनी रज्जू, कछनाडीत्यर्थः । चैत्ये इति देवदूष्यनाम्नि वस्त्रे । सद्मनि इति देवदूष्यवस्त्रस्य गृहे । नासारज्जुरिति लोके नाथि । तालविशेष इति गीतविषये, तालभेद । युगकील इति लोके समिल इति प्रसिद्धि । पितृप्रसूरिति लोके सांझि । सन्धानमिति साधि । कुसुमान्तरे इति पुष्पविशेषे । रथौघे इति रथसमूहे । विशिखेति प्रतोली । वर्त्तनीति मार्गः । चत्वरमिति चहुमार्गी । रथवोढरीति सारथौ । सारणिरिति नीरप्रणालिका । मौर्व्यामिति पणिछ इति प्रसिद्धायाम् । मातरीति जनन्याम् । क्ष्मायामिति पृथिव्याम् । मल्लिकेति लोके वेचडी । गन्ध्यगुदरिति गोरोचना । प्रियङ्गुरिति फलिनी । शतपुष्पेति सोवा । अध पुष्पीति [illegible] । शङ्खपुष्पीति शङ्खाहूली । शमीति खेजडी । त्रायमाणे इति त्रायमाणनाम्नि औषधे । [illegible] वृक्षे । अश्वत्थे इति पींपलनाम्नि वृक्षे

अन्न च । जलानननामत्वान्नपुंसकत्वे प्राप्तेऽस्य पाठ । भूसुरावाग्वाचिनस्तु तन्नामत्वादेव स्त्रीत्वम् । प्रतिसीरा जवनिका ॥ परम्परा 'परम्परा परीपाट्यां सन्ताने़ऽपि वधे क्वचित् । परम्परं प्रपौत्रादौ मृगभेदे च' ॥ कण्डरा—कीटविशेष , महास्नायुश्च । असृग्धरा अजिनम् ॥ होरा 'होरा लग्नेऽपि राश्यर्द्धे शास्त्ररेखाभिदोरपि' । वागुरा मृगबन्धनी ॥ शर्करा 'शर्करा खण्डविकृतावुपलाकर्परांशयो । रोगप्रभेदे शकले स्याद्देशे शर्करावति' ॥ सिरा धमनी । पिप्पलीमूले तु रान्तत्वात्पुंसि । यद्गौड —'सिरो ना पिप्पलीमूले स्याद्धमन्या तु योषिति' ॥ पथ्यानक्म् ॥ २० ॥

गुन्द्रा मुद्रा क्षुद्रा भद्रा भस्त्रा छत्रा यात्रा मात्रा ।
दंष्ट्रा फेलावेला मेला गोला दोला शाला माला ॥ २१ ॥

एते शब्दा स्त्रीलिङ्गा । गुन्द्रा—भद्रमुस्तक प्रियङ्गु कैवर्ती मुस्तकश्च । शरे तु तन्नामत्वात्पुंस्त्वमेव भद्रमुस्तके अर्थप्राधान्यान्महिलेत्यपि ॥ मुद्रा पौण्यङ्गुलिसन्निवेश', आभरणविशेषश्च ॥ क्षुद्रा 'क्षुद्रा वेश्यानटीकण्टकारिकासरघासु च । चाङ्गेरीबृहतीहिंस्रामक्षिकामात्रकेषु च ॥ क्षुद्र स्यादधमक्रूरकृपणाल्पेषु वाच्यवत्' ॥ भद्रा विष्टि 'भद्रा मन्दाकिनीराखाकृष्णानन्तासु कट्फले । भद्र स्यान्मङ्गले हेम्नि मुस्तके करणान्तरे । भद्रो रुद्रे वृषे रामचरे मेरुकदम्बके । हस्तिजात्यन्तरे भद्रो वाच्यवच्छ्रेष्ठसाधुनो ' ॥ भस्त्रा लोहधमनी ॥ छत्रा 'छत्रा मधुरिकाया स्यात्कुस्तुम्बुरुशिलिन्ध्रयो.' । आतपत्रे तु त्रिलिङ्गो वक्ष्यते ॥ यात्रा—गयाणम्, देवतोत्सव वृत्तिश्च ॥ यात्रान्तत्वात् 'भोजने देहयात्रा स्यात्केतान्तर'

मसूरके इति मसूरनाम्नि धान्ये ॥ १९ ॥ वंशो इति उपकार्योपकारिकाशब्दौ । जवनिकेति परीमछि । परीपाट्यामिति अनुक्रमे । सन्ताने इति अन्वये । वधे इति यत्रे यो बध्यस्तत्र । अजिनमिति मृगचर्म्म । राश्यर्द्धे इति लग्नार्द्धे । शास्त्ररेखाभिदोरिति शास्त्रभेदे रेखाभेदे च । शास्त्रभेदे होराशास्त्रं, रेखाभेदे गोमूत्रिकायाम् । मृगबन्धनीति मृगपाश । खण्डविकृतौ इति लोके साकरि । उपलेति भरमटपत्थर । कर्परांश इति मृत्कपालखण्डम् । रोगप्रभेदे इति लोके पाहणी इति प्रसिद्धे । शकले इति खण्डे । देशे शर्करावतीति शर्करायुक्ते देशे । धमनीति नाडी ॥ २० ॥ भद्रमुस्तक इति लोके भद्रमोथ । प्रियङ्गुरिति फलिनी । कैवर्त्तीति लोके काकरहूल इति प्रसिद्धि । मुस्तक इति सामान्यमोथ । शरे इति मुञ्जे । पौण्यङ्गुलिसन्निवेश इति हस्तद्वयाङ्गुलिरचनाभेदः, स तु गुरुमुखादवसेय । आभरणविशेष इति मुद्रडी । कण्टकारिकेति रींगणा । सरघेति मधुमक्षिका । चाङ्गेरीति आवडम्बी नाम्नी ओषधिः । बृहतीति घहूगण ( वडीरींगणी ? ) इति प्रसिद्धि । हिंस्रेति इह हिंस्राशब्दः छडीति सुगन्धीद्रव्यवाचक यद्धन्वन्तरि 'मांसी कृष्णा जटा हिंस्रा इति, तथा चानेकार्थ , 'हिंस्रा मांसी काकादनीव सा' । मक्षिकामात्रके इति सामान्यमक्षिकायाम् । मन्दाकिनीति गङ्गा । राखेति लोके राठ । कृष्णेति पिप्पली । अनन्तेति दूर्वा । कट्फले इति कायफल इति प्रसिद्धे । हेम्नीति सुवर्णे । मुस्तके इति लोके मोथ । करणान्तरे इति नृत्तविषये विन्यासविशेष । वृषे इति बलीवर्दे यस्य मुखे श्वेतस्तिलकस्तत्र । रामचरे इति रामस्य चर सेवको रामचरस्तत्र । मेरुकदम्बके इति मेरुसमीपवर्त्तिन वृक्षस्य कदम्बस्य भद्रेति नाम लोके प्रसिद्ध तत्र । लोहधमनीति लोके धमणि । मधुरिकायामिति लोके सोहालीति प्रसिद्धायाम्, यदाहु 'मिश्रेयायां शतपर्णी छत्रातीलक्षिविमिसि । शालेयो मधुरिका च शालीनस्तालपर्ण्यपी'ति ।

गमनेऽपि च' ॥ मात्रा—परिच्छद' मानम् अल्पम् कर्णविभूषणम् अक्षरावयव कालविशेष द्रव्यम् तालाङ्ग च । कात्स्न्येऽवधारणस्वार्थेषु सयुक्तरान्तत्वान्नपुसकत्वम् ॥ दष्ट्रा दन्तविशेष । अर्थप्राधान्याद्राक्षसीत्यपि ॥ अथ लान्ता विंशतिः ॥ फेला भोजनोज्झितम् । अर्थप्राधान्यात्पिण्डोलि, फेलिश्च । यद्गौड —'फेलापिण्डोलिफेल्य' ॥ वेला 'वेला काले च जलधेस्तीरनीरविकारयो । अक्लिष्टमरणे रागे सीम्नि चाचि बुधस्त्रियाम् । भोजनेऽपीश्वराणा स्यात्' ॥ अकारप्रश्लेषादवेला पूगचूर्ण । मेला मशि । यद्गौड —'मेला स्त्री मेलके मशौ' ॥ गोला बालक्रीडनकाष्ठम् । पैनाञ्जनादौ तु स्त्रीनपुसको वक्ष्यते । सर्वतो वृत्ते तु पुमानुक्त' ॥ दोला प्रेङ्खा । औणादिकोऽयम् । अडन्तस्य तु स्युक्तत्वादेव स्त्रीत्वम् ॥ शाला 'पादपस्कन्ध-शाखाया गृहागारैकदेशयो । स्त्रिया शाला पुमान् हालनृपमत्स्यप्रभेदयो' ॥ शाखाया दन्त्यादिरयमित्यमरटीका । गृहे अर्थप्राधान्यात्स्त्रिर्मीलपि । यद्गौड —'पुन्निकाया सुवर्णस्य किर्मी शालापञ्चालयो' ॥ माला—स्रग्, पङ्क्तिश्च । स्वार्थिके के मालिका—ग्रैवेयकम्, पुष्पमाल्यम्, पक्षिमल्लश्च ॥ विद्युन्माला ॥ २१ ॥

मेखला सिध्मला लीला रसाला सर्वला वला ।
कुद्दाला शङ्कुला हेला शिला सुवर्चला कला ॥ २२ ॥

एते शब्दा स्त्रीलिङ्गा । मेखला । 'मेखला खङ्गबन्धे स्यात्काञ्चीशैलनितम्बयो' । सिध्मला 'सिध्मला मत्स्यचूर्णे स्यात्त्रिलिङ्गया तु किलासिनि' ॥ लीला 'लीला विदु केलिविलासखेलाशृङ्गारभावप्रसवक्रियासु' । तथा करकपरिस्पन्दश्च । इत्यनुकृतिर्लीलेति च भरत ॥ रसाला 'रसाला मार्जिताया स्याज्जिह्वादूर्वाविदारिषु । रसाल सिह्लके बोले

---

घुस्तुम्बुरु इति धान्यक लोके धाणा । हिल्लिर्म इति लोके मूलोद । वृत्तिरिति आजीविकोपाय । कृतान्तगमने इति मरणे । परिच्छद इति परिवार । अक्षरावयव इति अक्षर स्वरव्यञ्जनसमुदायलक्षस अवयव लोके मात्रा । कालविशेष इति सूक्ष्मकालविशेषः, यावता कालेन चक्षुष उन्मेषो वा भवति तावान्कालो मात्रा इत्यर्थ, यथा 'एकमात्रो भवेद्ध्रस्व' । तालाङ्गमिति गीतनृत्तादिविषयम् । दन्तविशेष इति लोके दाढि । भोजनोज्झितमिति लोके अहठि । जलधेस्तीरनीरविकारयोरिति जलधेः समुद्रस्य तीरे—तटे, जलधेर्नीरविकारे जलवृद्धौ लोके वेलि इति प्रसिद्धायाम् । अक्लिष्टमरणे इति सुखमृत्यौ । रागे इति आसक्तौ । सीम्नीति मर्यादायाम् । बुधस्त्रियामिति यस्या पुत्र पुरूरवाः तस्याम् । पैनाञ्जनादौ इति मन शिलादौ । प्रेङ्खेति लोके पालणओ हींचोलिवा इति वा । आगारैकदेश इति लोके परसाल । हालनृप इति सातवाहनो नाम राजा । मत्स्यप्रभेद इति मत्स्यविशेष । शाखायामिति वृक्षस्कन्धशाखायाम् । शालेति गृहम् । पञ्चालमिति अकुणो मीढादि । ग्रैवेयकमिति स्वर्णरूप्यादिरचितो ग्रीवाभरण-विशेष, लोके वारला हांसमडी वा इति प्रसिद्धि । पुष्पमाल्यमिति कुसुममाला । पक्षिमल्ल इति पक्षिविशेष ॥ २१ ॥ खङ्गबन्धे इति मल्लाकारवध्रिकाया यया खड्गो निसरन् रक्ष्यते, यया अश्ववारा कक्षादौ खड्ग लम्बयति वा तत्र । मत्स्यचूर्ण इति शुष्काणा मत्स्यानां चूर्णं मत्स्यचूर्णं तत्र । किलासिनीति यस्य देहे दभूतनामा रोगो भवति तत्र । केलिरिति क्रीडा । विलासखेलेति विलास स्थानादीनां वैशिष्ट्यं तत्र खेला खेलनम् । शृङ्गारभावप्रसवक्रियेति [illegible] क्रिया । करकपरिस्पन्द इति कर्मादीनां व्यापार । इत्यसेति प्रियस्य । मार्जितायामिति [illegible] विदारीति विदारिनाडिर ओषधिः ।

कुसुम्भम् । भ्रमरक. । तथा 'लट्वा करञ्जभेदस्य फलेवध्ये खगान्तरे' ॥ खट्वा शयनयन्त्रम् ॥ शिवा क्रोष्ट्री । गौरीक्रोष्ट्र्योर्योनिमनामत्वाद्धरीतक्यामलक्यास्तु शिशपादित्वात्स्त्रीत्व सिद्धमेव ॥ अथ शान्ताश्चत्वारः । दशा–अवस्था वर्तिश्च । वस्त्रावयवे तु स्त्रीपुंसत्व वक्ष्यते ॥ कशा अश्वादिताडनचर्मदण्ड· ॥ कुशा वल्गा । कथा कुशी आयसी चेत् ॥ ईशा 'प्रभुशङ्करयोरीश स्त्रिया लाङ्गलदण्डके' ॥ अथ षान्ताश्चत्वारः–मञ्जूषा दारुमयी पेटा । अर्थप्राधान्यात्पेटा पेडेत्यपि ॥ शेषा देवतानिर्माल्यम् ॥ मूषा सुवर्णादिविलयनभाण्डम् ॥ ईषा लाङ्गलाद्यवयवविशेष ॥ अथ सान्ताः पञ्च–स्नसा स्नायु ॥ मविपुला ॥ २३ ॥

वल्लसा विस्नमा भिस्सा नासा वाहा गुहा स्वाहा ।
कक्षाऽऽमिक्षा रिक्षा राक्षा भङ्ग्यावल्यायतिस्त्रोटिः ॥ २४ ॥

एते शब्दा स्त्रीलिङ्गा । वल्लसा खसा । विस्नसा जरा । भिस्सा ओदन । नासा स्तम्भादीनामुपरिस्थ दारु । द्वारशाखाध ऊर्ध्वे दारुणी शिलानासे इति तु माला । नासिकाया तु सनामत्वादेव स्त्रीत्वम् ॥ अथ हान्तास्त्रयः–वाहा 'वाहा बाहौ पुमान् मानभेदे धूपतुरङ्गयो' ॥ गुहा–गिरिविवरम्, पृश्निपर्णी च । गुहाशब्द औणादिकोऽप्यस्तीति क्युक्त इत्यनेन सिद्ध्यति ॥ स्वाहा अग्निभार्या ॥ अथ क्षान्ताश्चत्वारः–कक्षा । 'कक्षोद्वाहणिकाकाञ्चीप्रकोष्ठगञ्जरज्जुषु । स्पर्द्धापदे परीधानपश्चादञ्चलपल्लवे ॥ रथभागे च भित्तौ च' । दोर्मूले स्त्रीपुंसलिङ्गो वक्ष्यते ॥ आमिक्षा शृतक्षीरक्षिप्त दधि ॥ रिक्षा यूकाण्डम्, लत्वे लिक्षा ॥ राक्षा जतु, लत्वे लाक्षा । अर्थप्राधान्याद्वरवर्णिनीत्यपि । यदाह–

---

कुधेली । भ्रमरक इति मधुकर । करञ्जभेदस्येति करञ्जनाम्नो वृक्षस्य । खगान्तरे इति [ पक्षिणीविशेषे, लोके मरढाली अथवा लाटा, यथा 'लट्वा प्रदक्षिणा श्रेष्ठा' । वसन्तराजोऽपि 'लट्वा भवत्युपरत प्रयातु पुर स्थिता वाञ्छितसाधयित्री । यात्राप्रवेशादिषु च प्रशस्ता श्यामा यथा दक्षिणवामगेयम् ॥ लट्वेऽध(अथ?)-नीलध्वटक प्रदिष्ट शुभाय कालध्वटकोऽपि तद्वत् । वामोऽथवा दक्षिणतो निनाद श्रेय प्रद (श्री?) किल कोकिलाया इति ॥" ] भारद्वाजनाम्नि लोके मह्वाली । यथा । लट्वा वा दक्षिणा श्रेष्ठा । क्रोष्टेति शृगाल । वर्तिरिति लोके वाटि यथा दीपकवर्ति । अश्वादिताडनचर्मदण्ड इति लोके ताजणओ । वल्गेति वाग्रि । आयसीति लोहमयी । लाङ्गलदण्डके इति लोके हालि इति प्रसिद्धि । दारुमयी पेटेति लोके मजूस पेई(टी ?) वा । देवतानिर्माल्यमिति लोके सेस । सुवर्णादिविलयनभाण्डमिति लोके मूसि । लाङ्गलाद्यवयवविशेष इति लोके हल्री [ हाल, आदिना दात माचारीईस ।] चास । स्नायुरिति लोके नस ॥२३॥ खसेति लोके नस । ओदन इति राद्ध धान्य । यदाहु —'मत्तमश्च कूरम धो भिस्सा दीदिविरोदन ' इति । द्वारशाखाध ऊर्ध्वं दारुणी इति द्वारशाखाध स्थित दारु द्वारशाखोपरिस्थित च दारु इत्यर्थ । बाहौ इति भुजे । मानभेदे इति व्यामाख्ये लोके वाममान तत्र । गिरिविवरमिति लोके गुफा । पृश्निपर्णीति लोके पीठवनी । उद्वाहणिकेति उग्राहणी । प्रकोष्ठ इति गृहमध्यभूमिभाग । गञ्जरज्जुरिति कच्छनाडी । स्पर्द्धापदे इति प्रतिज्ञायाम्, यथा 'दृढकक्षस्तु विवदेत्धर्मेयाश हीयते' इति । परिधानपश्चादञ्चलपल्लवे इति काछडी इति प्रसिद्धे इत्यर्थ । दोर्मूले इति लोके काखि । शृतक्षीरक्षिप्तदधीति शृत पक्व यत् क्षीरं दुग्ध तत्र क्षिप्त यद्धधि तत् शृतक्षीरक्षिप्त[illegible] इद ॥ दौवे प्रसिद्धम् । यूकाण्डमिति लीख । जतु इति

'स्याद्वरवर्णिनी लाक्षाहरिद्रारोचनासु च । स्त्रीरत्ने च फलिन्यां च दृश्यते वरवर्णिनी' । तथा रजनीत्यपि । यद्गौड –'निशा निशाह्वा रजनी नीली च जतुक स्त्रियाम्' । पलङ्कषापि । यदाह–'पलङ्कषा गोक्षुरकरास्नागुग्गुलकिंशुके । मुण्डीरीलाक्षयोश्चापि रक्षस्यपि पलङ्कष' ॥ अथेदन्ताश्चतुर्दशोत्तर शतम्–भङ्गि विच्छित्ति ॥ आवलि पङ्क्ति । आवल्यन्तत्वाद्भोगावली । यद्गौड –'वन्दिग्रन्थो भोगावली स्त्रियाम्' ॥ आयति आगामिकाल, प्रभाव दैर्घ्यं च । एष्यतीत्यायतिरित्यागामिकाले व्युत्पत्तो न भवतीत्यस्योपादानम् ॥ त्रोटि 'त्रोटि' स्त्रिया मत्स्यभेदे चञ्च्वा कैफलकेऽपि च' ॥ नितानम् ॥ २४ ॥

पेशिर्वासिर्वसतिविपणी नाभिनाल्यालिपालि-
भल्लिः पल्लिर्भ्रुकुटिशकटी चर्चरि शाटिभाटी ।
खादिर्यष्टिर्व्रततिवमिशुण्ठीतिरीतिर्नितर्दि-
र्दर्विर्नीविच्छविलिविशठिश्रेठिजात्याजिराजिः ॥ २५ ॥

एते शब्दा स्त्रीलिङ्गा । इय पेशि । 'पेशी पललपिण्ड्या च मांस्या खड्गपिधानके । मण्डभेदे च लेशे च सुपक्वकलिकेऽपि च' ॥ वासि तक्षोपकरणम् । अर्थप्राधान्यात्तक्षणीत्यपि ॥ वसति 'वसतिर्वेश्मयामिन्योरवस्थानेऽपि च स्त्रियाम्' ॥ विपणि 'आपणे पण्य वीथ्या च पण्ये च विपणि स्त्रिया'मिति गौड । माघस्तु पण्यवीथ्या पुस्त्वमाह । 'पूर्णापण विपणिनो विपणिं विभेजु' । नाभि –चक्रादीना मध्यम, प्रधान, कस्तूरिकामदश्च । प्राण्यङ्गे तु स्त्रीपुसलिङ्गो वक्ष्यते । क्षत्रिये त्वय नाभि कुलकर, विजिगीषुनृपश्च, वेहिनामत्वात्पुसि ॥ नालि –कालमान कदली च । लत्वाभावे नाडि । 'नाडी नाले सिरागण्डदूर्वयो स्याद्गुणान्तरे । नाडी षट्क्षणकालेऽपि चर्यायां कुहनस्य च । वंशनालतन्तुवायोपकरणयोश्च' । धमन्या चार्थप्राधान्याल्ललनेत्यपि । यद्गौड –'जिह्वाया नालिभेदे च कामिन्यां ललना स्त्रियाम्' ॥ आलि अनर्थः । तथा 'सेतुसत्यावलीष्वाली स्त्रिया स्याद्विशदाशये' ॥

लोके लारि । स्त्रीरत्ने इति प्रधानस्त्रियाम् । फलिन्यामिति प्रियगौ । गोक्षुरक इति गोखरू । रास्नेति राड । किंशुके इति पलाशनाम्नि । मुण्डीरीति मोटयेरी । विच्छित्तिरिति अङ्गराग । वन्दिग्रन्थ इति भट्टग्रन्थ, मङ्गलपाठकानां ग्रन्थ इत्यथ । चञ्च्वामिति हठाद्दृष्टस्त्रियाम् । कैफलके इति कायफल इति प्रसिद्धे ॥ २४ ॥ पललपिण्ड्यामिति मासपिण्ड । मांस्यामिति छडीति प्रसिद्धायाम् । खड्गपिधानके इति प्रत्याकारे । मण्डभेदे इति मस्तुनि लोके दहीरी थरि । सुपक्वकलिके इति सुपक्वा कलिका यस्य सुपक्वकलिक पक्वान्नविशेष, पूरिकादय । तक्षोपकरणमिति वसोली । आपणे इति हट्टे । पण्यवीथ्यामिति वणिग्मार्ग । पण्ये इति क्रयाणके । चक्रादीना मध्यमिति लोके नाहीति प्रसिद्धिः । विजिगीषुनृप इति द्वादशराजमण्डलमध्यवर्ती । कालमिति घटिका । कदलीति रम्भावृक्ष । नाले इति काण्डे । सिरेति धमनी, लोके नाडि । गण्डदूर्वेति दूर्वाविशेष । गुणान्तरे इति चर्मरज्जुविशेषे, लोके नाडी । षट्क्षणकाले इति षड्भिः क्षणैर्य काल स षट्क्षणकालस्तत्र घटिकायामित्यथ । चर्यायां कुहनस्येति कुहनस्य चर्यायां कपटचर्यायामित्यथ । वंशनालेति लोके वरन । तन्तुवायोपकरणमिति लोके नली । नालिभेद इति सिराभ्रो लोके नाडि । सेतुरिति जलादिमर्यादा । आवलीति श्रेणि । विशदाशये इति विशद

पालि॰ । 'पालि॰ कर्णलताऽग्रेऽश्रौ पङ्क्तावङ्कप्रदेशयो॰ । पालि. प्रस्थे च यूकाया जातश्मश्रु-स्त्रियामपि । चिह्ने सेतौ प्रशसायाम् पर्याये च सरित्क्रमे' । प्रान्तोत्सङ्गयोरपि दृश्यते 'सित-पटच्छन्नपालीं कपालीम्' च्छन्नप्रान्तमित्यर्थ॰ । (कपोलपालि कपोलोत्सङ्ग इत्यर्थ ) लोका' पालिं कल्पितभोजनेऽप्याहु । पाल्यन्तत्वादङ्कपाली । यद्गौड –'अङ्कपाली परीरम्भे कोटिधी-त्रिकयोरपि' । भल्लि वाण-भेद । पल्लि॰–कुटी ह्रस्वग्रामश्च । भ्रुकुटि भ्रूभङ्ग , भ्रकुटि॰, भ्रूकुटी तूपलक्षणत्वात् । शकटि शकटम् । चर्चरि हर्षक्रीडा । शाटि प्रावरणविशेष । भाटि॰ सुरतमूल्यम् ॥ रराटि 'एकग्रहे शरथे किणे रराटि॰ स्त्रिया भवेत्' । वर्त्ति –दीप तद्दशा च । वस्त्रदशासु तु स्त्रीपुसलिङ्गो वक्ष्यते । व्रतति विस्तार । वल्लीवाचिनस्तु स्त्रीत्व सिद्धमेव ॥ वमि वान्ति । अग्नौ तु तन्नामत्वात्पुसि । यद्गौड –'वमिर्वान्तौ स्त्रिया नाऽग्नौ' ॥ शुण्ठि नागरम् । ङ्या शुण्ठी । घञन्तादपि ङया शुण्ठी ॥ ईति –प्रवास , उपद्रवश्च । 'अतिवृष्टि-रनावृष्टिर्मूषिकाः शलभा॰ शुका॰ । अत्यासन्नश्च राजान॰ षडेते ईतय स्मृता' । उपद्रवे पार्थप्राधान्यात् शृगालीत्यपि । यद्गौड –'शृगालो जम्बुके दैत्यविशेषे डमरे स्त्रियाम्' । तालव्यादिरयम् । रीति –आरकूट लोहकिट्टम्, प्रचार , स्यन्द , मर्यादा वैदर्भ्यादा च । आरकूटे अर्थप्राधान्यात् रीरीत्यपि । वितर्दि –वेदिका दारुपरिष्कृता चतुरस्रा विश्रान्तिभूरि-त्यर्थ । दर्वि –दारुहस्त , सर्पफण कटच्छुश्च । नीवि मूलधनम् । परिपण , कारा, स्त्रीपरिधानग्रन्थिश्च । छवि –त्वक् प्रत्याकृतिश्च । तथा 'छवि शोभारुचो स्त्री स्यात्' । लिवि अक्षरविन्यास. । अर्थप्राधान्याल्लिपिरित्यपि । शठि औषधभेद । श्रेढि गणित-व्यवहार । जाति 'जातिश्छन्दसि सामान्ये मालत्या गोत्रजन्मनो । जातिर्जातीफले

---

आशय स्यात अभिप्रायो वा तत्र । कर्णलतेति कर्णाभरणविशेष , लाल्किेत्यथ [ कणपलि कानरीपालि इत्यर्थः ] अग्रे इति धारायाम् । अश्री इति कोणे । पङ्क्ती इति श्रेणौ । अङ्क इति उत्सङ्ग । प्रदेश इति प्रान्त । प्रस्थे इति पर्वतैकदेशे । यूकायामिति जू इति प्रसिद्धायाम् । कल्पितभोजने इति कल्पित श्राद्धादौ आमन्त्रित यत् भोजन तत्र । परीरम्भे इति आलिङ्गने । कोटिरिति अग्रभाग । धात्रिकेति जपमाला, लोके धाइ इति प्रसिद्धि । वाणभेद इति भाली । कुटीति लोके कुडि ( डि ? ) । भ्रूभङ्ग इति सकोपभ्रूविकार । प्रावरणविशेष इति लोके साडी । एकग्रहे इति अन्यपरिहारेण तदेकनिर्बन्ध तत्र । शरथे इति मृतकशय्यायाम् । किणे इति रूढव्रणस्थाने । दीप इति दीपक । तद्दशेति दीप कदशा । प्रवास इति चलनम् । आरकूट इति लोके सम्बरपीतल । प्रचार इति गति । स्यन्द इति स्रवणम् । वैदर्भ्यादेति वैदर्भी, आदिशब्दात् गौडीपाञ्चालीप्रभृतयो गृह्यन्ते । वेदिका दारुपरिष्कृता चतुरस्रा, विश्रान्तिभूरित्यर्थ इति लोके ओटलओ ( चउकी ) । दारुहस्त इति डोइलओ । कटच्छुरिति लोके कुडछओ । मूलधनमिति वणिगादीनां मूलद्रव्यम् । परिपण इति आडम्बर । कारेति लोके बन्दीखानओ । स्त्रीपरिधानग्रन्थिरिति [illegible] परिधानस्य कटीवस्त्रस्य ग्रन्थिर्बन्धनग्रन्थि, लोके पागडीत्यथ । यत्कास्य 'नीविरासम्यन नार्या [illegible] वासस' इति । [illegible] इति चर्म । प्रत्याकृतिरिति [illegible]बिम्बम् । औषधभेद इति लोके [illegible] मा [illegible] [illegible]न्दसीति वैतालीयादौ । [illegible] इति गोत्वादौ । मालत्यामिति [illegible] [illegible]गोत्रजे इति

धान्या चुल्लीकेलिपिहस्योरपि' ॥ अलङ्कारविशेषश्च । जातीकोषजातिफले समे इति यथा प्रयोगदर्शनात्तिगन्तोऽव्ययमिति क्युक्ता इति न सिध्यति । आजि –सङ्ग्राम क्षण समभूभाग । यदुक्तं —'युद्धमागक्षणेष्वाजि ,' सङ्ग्रामे पुंस्यपि दृश्यते । 'वाहनाजनि मानासे साराजावनमा तत ' । राजि –पङ्क्ति , रेखा च, ये राजिका–केदार , राजसर्षप , रेखा च ॥ मन्दाक्रान्ता ॥ २५ ॥

रुचिः सूचिसाची खनिः खानिखारी
खलि कीलितूली कृमिर्वापिधूली ।
क्रुपिः स्थालिहिण्डी त्रुटिर्वेदिनाडी
किकिः कुक्कुटि काकलिः शुक्तिपल्ली ॥ २६ ॥

एते शब्दाः स्त्रीलिङ्गाः । इय रुचि –प्रभा, राग , अभिलाषश्च । यदमर –'अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचि स्त्रियाम्' । [10]अंशावपि पाठबलात्स्त्रीत्वम् ॥ सूचि –सेवनी, अभिनय , करणविशेषश्च ॥ साचि [14]तिर्यक् । यन्माला–'साची स्त्रियाम्' ॥ खनिः–आकर , तडाग च । खानि सैव ॥ खारि मानविशेष । इयं खारी । खारशब्दादपि इयं खारी ॥ खलि पिण्याकादि । कीलि कीलिका । तूलि –चित्रकूर्चिका शय्याविशेषश्च ॥ कृमि क्रिम । यद्गौड –'कृमि स्त्रियाम्' ॥ वापि उदपानम् । धूलि पांशु ॥ क्रुपि कर्पणम् । उपलक्षणं च क्रुपि क्तिप्रत्ययान्तानां तेन यथादर्शनमिय छिदि –छेदनम् । इयं स्फुटि –पादस्फोट [20]निर्भिन्नकर्कटीसस्य च । त्रुपि 'त्रुपि स्त्रीलिङ्गोपयो '। क्रुपि (क्षुपि ?) [21]छेदोपकरणम् । शूलि –इयं शूली शूलायुधम् । यद्गौड –'शूले शूली च सीमिकम्' । तिपि

लोके जाइफल । धान्यामिति आमलक्याम् । चुल्लीति लोके चूल्हा । कलिरह इति लोके कपिकभो इति प्रसिद्ध । अलङ्कारविशेष इति जालङ्कार । जातीकोषजातीफले समे इति तुल्यार्थे जाइफल इत्यर्थ । तिगन्तोऽव्ययमिति अथ आजिशब्द तिगन्तोऽपि 'तिक्कृतौ नाम्नि' (५।१।७१)ति तिक्प्रत्ययान्तो न तु 'स्त्रियां क्तिः' (५।३।९१)ति सूत्रसम्बन्धी क्तिप्रत्यय इति, तेन 'क्युक्ता' प्रत्ययकार्यं न भवति । क्षण इति कालविशेष । समभू भूभाग इति समभूभाग अनिम्नोन्नतभूमिभाग इत्यर्थ । 'वाहनाजनि मानासे साराजावनमा तत ' इति माघे एकोनविंशे सर्गे श्लोकोऽयम् । पूर्वार्द्धव्याख्या यथा । ततोऽनन्तर सा राजौ उत्कृष्टयुद्धे वाहना वाहिनी सेना न नमतीति अनमा अनम्रा अजनि जाता । किंविशिष्टे सा राजौ मानासे अहङ्कारहन्तरि । केदार इति लोके क्यारा क्षेत्रमित्येके ॥ २५ ॥ अभिष्वङ्ग इति आसक्तौ । गभस्तौ इति किरणे । अंशावपीति किरणेऽपि । पाठबलादिति अपवादबलात् । सेवनीति लोके सूइ । अभिनय इति चतुर्विधनाट्यप्रकरणम् । करणविशेष इति क्रिया नृत्यविषये । स्थिरहस्तपक्षलताडकादि द्वात्रिंशत्प्रकार । [18]तिर्यक् इति लोके तिरछा । [19]सैवेति खनिरेव यथा 'खनिशब्देन आकर तडाग चोच्यते तथा खानिरपि' । मानविशेष इति षोडशद्रोणप्रमित यदाहु 'चतुर्भिराढकैर्द्रोण खारी षोडशभिश्च तैरि'ति । पिण्याकादेरिति पिण्याकशब्देन लोके खलि इत्युच्यते, आदिशब्दात् मस्तकक्षालन्यपि खलीत्ये वोच्यते । [22]कीलिकेति लोके कीली । शय्याविशेष इति लोके तुलाइ । क्रिम इति लटानि । उदपानमिति कूपः, दीर्घिकेत्यन्ये, लोके वावडी । [20]निर्भिन्नकर्कटी इति फूटचीभडओ । [21]छेदोपकरणमिति कातरणी ।

दीप्तिः । त्विषिमान् राजवर्चस्वी इत्याद्यपि भवति ॥ स्थालिः उखा । टिण्टिः रात्रौ रक्षाचारः । त्रुटिः 'सूक्ष्मैलायां कालमाने त्रुटिः स्त्री संशयाल्पयोः' । अर्थप्राधान्यात् त्रुटिरित्यपि । अवस्थाकालविशेषयोस्त्रुटेः स्त्रीपुंसत्वं वक्ष्यते । यागोपकरणी । चतुरश्रा(स्रा) च ॥ नान्दिः पूर्वरङ्गाङ्गम् । किकि पक्षिविशेषः । कुक्कुटिः कुहना । काकलिः ध्वनिविशेषः । शुक्तिः 'शुक्तिः कपालशकले नख्यश्वावर्त्तयोरपि । मुक्तास्फोटे च दुर्नाम्नि शङ्खे शङ्खनकेषु च' ॥ औणादिकक्तयन्तोऽयम् ॥ पङ्क्तिः—आवलिः, दशसङ्ख्या च । पङ्क्तिशब्दोऽयमौणादिकः । क्तयन्तस्य तु 'श्युक्ता' इति, छन्दोवाचिनस्तु 'गायत्र्याद्यः' इत्येव स्त्रीत्वम् ॥ भुजङ्गप्रयातम् ॥ २६ ॥

किरिस्ताडिकम्बी द्युतिः शारिरातिस्तटिः कोटिविष्टी वटिर्गृष्टिवीथी ॥
दरिर्वल्लरिर्मञ्जरिः पुञ्जिभेरी शरारिस्तुरिः पिण्डिमाढी मुषुण्ढिः ॥ २७ ॥

एते शब्दाः स्त्रीलिङ्गाः । इय किरिः कालगोत्रविशेषः । सृगाल्यां तु योनिमन्नामत्वादेव सिद्धम् ॥ ताडिः—आभरणविशेषः, वृक्षविशेषश्च ॥ कम्बिः—वेण्वादिदलविशेषः, दर्विश्च ॥ द्युतिः—दीप्तिः, शोभा च । अशुनामत्वेन पुंस्त्वे प्राप्तेऽस्य पाठः ॥ शारिः 'शारिरक्षोपकरणे तथा शकुनिकान्तरे । युद्धार्थगजपर्याणे व्यवहारेऽपि च क्वचित्' । आतिः शरारिः । तटिः आघातस्थानम् ॥ कोटिः अग्रम् । तथा 'कोटिः स्त्री धनुरग्रे स्यादश्रौ सङ्ख्याप्रकर्षयोः' ॥ अश्रिर्धारा कोणो वा । यथा शतकोटिर्वज्रम् ॥ विष्टिः—भद्रा वेतनम्, प्रेषणं च । कर्मकरे त्वाश्रयलिङ्गः ॥ वटिः—गुलिका, तन्तुः, वृक्षविशेषः, शूनानाभिः, मुद्गादिसूपादिविकारविशेषश्च ॥ गृष्टिः—मानविशेषः, वाराहक्रान्ता च । सकृत्प्रसूतगवीवाचिनस्तु योनिमन्नामत्वादेव स्त्रीत्वम् ॥ वीथिः 'पङ्क्तिवर्त्मगृहाङ्गेषु वीथी स्त्री नाट्यरूपके' । दरिः कन्दरः । वल्लरिः मञ्जरी । मञ्जरिः वल्लरी । पुञ्जिः संहतिः । भेरिः दुन्दुभिः । शरारिः आतिः ।

सीमकमिति सीमकशब्देन धूली उच्यते । रात्रौ रक्षाचार इति लोके चउकीदार ठींढि इति वा प्रसिद्धिः । यागोपकरणी इति यज्ञे परिष्कृता भूमिः [यज्ञे परिष्कृता चातुरस्र्येण भूषिता भूमिः] । चतुरस्रेति लोके चउतरओ [चउकी] ओटलओ इति वा प्रसिद्धिः । पूर्वरङ्गाङ्गमिति नाट्यस्य प्रारम्भाङ्गम् । पक्षिविशेष इति नीलचासः । कुहनेति दम्भचर्या । ध्वनिविशेष इति मधुरः सूक्ष्मश्च यो ध्वनिः स काकलिरुच्यते । यदाहुः—'काकली तु कलः सूक्ष्मः' इति । कपालशकले इति शिरोऽस्थिखण्डे । नखीति गन्धद्रव्यविशेषः, लोके नख इति प्रसिद्धिः । अश्वावर्त इति हयावर्तः अश्वभ्रमणमित्यर्थः । मुक्तास्फोट इति लोके सीपली । दुर्नामेति जलौकाकृतिर्दीर्घकोशाख्यो जलस्थजीवविशेषः । शङ्खनक इति ह्रस्वः शङ्खः । अयमिति शुक्तिशब्दः ॥ २६ ॥ कालगोत्रविशेष इति यमगोत्रविशेषः । वेण्वादिदलविशेष इति लोके कांबि । अक्षोपकरणे इति सोगठा इति प्रसिद्धेः । शकुनिकान्तरे इति सालहीनाम्नि । युद्धार्थगजपर्याणे इति लोके हाथीरा पलाण । शरारिरिति लोके आडि । आघातस्थानमिति नद्यादौ जलास्फालनस्थानम् । वेतनमिति लोके भाडओ । गुलिकेति लोके गोळी । शूनेति वधस्थानम् । मुद्गादिसूपादिविकारविशेष इति लोके पहित्तवडी इत्यादि ज्ञेयम् । वराहक्रान्तेति लोके वाराहीकन्दः । गृहाङ्गे इति गृहभित्तिपादे । नाट्यरूपके इति नाटके वीथिनामा अष्टमः प्रबन्धभेदः । यदाहुः—'नाटक १ प्रकरण २ भाणः ३ प्रहसन ४ डिम ५ व्यायोग ६ समवकारौ ७ वीथ्य ८ ङ्के ९ हामृगा १० इति । अभिनेयप्रकाराः स्युः'रिति अभिनेयस्य प्रबन्धस्य प्रकाराः भेदाः इत्यर्थः । [illegible]र इति गुहा । संहतिरिति वृन्दम् । आतिरिति लोके आडि ।

तुरि तन्तुवायोपकरणम् । पिण्डि निष्पीडितस्नेह पिण्ड । माढि पत्रसिरा । मुषुण्डि—दण्डविशेष, आयुधविशेषश्च ॥ भुजङ्गप्रयातम् ॥ २७ ॥

राटिराटिरटवि परिपाटि फालिगालिजनिकाकिनिकानि ।
चारिहानिवलभि प्रधिकम्पी चुल्लिचुण्टितरयोऽहतिशाणी ॥ २८ ॥

एते शब्दा स्त्रीलिङ्गा । राटि कलह । अय मालाशेषे स्त्रियामुक्त । गौडस्तु पुस्याह ॥ आटि शरारि । अटवि अरण्यम् । परिपाटि क्रम । फाठि दलम् । गोलि अवघोद्घाटनम् । जनि —जन्म, माषचतुर्भाग, पणचतुर्भागो वा । पानि सङ्कोच । चारि —पशुभक्ष्यम्, गतिविशेषश्च ॥ हानि —अर्थनाश, उच्छित्तिश्च । हन्तेरौणादिके इणि रूपमिति क्युक्ता इति न सिध्यति ॥ वलभिः—गृहोपरि कुटि, पटलाधारश्च वशपञ्जर । अवन्तात् ङ्या वलभीत्यपि अर्थप्राधान्यात् गोपानसि । यदमर 'गोपानसी तु वलभी (छादने वक्रदारुणि) गृहे चन्त्रस्य च दारु' ॥ प्रधि रोगविशेष । यद्रुण —'प्रधी रोगविशेष'। नेमौ तु स्त्रीपुंसलिङ्गो वक्ष्यते ॥ कम्पि —सूक्ष्मकलहय, कम्पन च ॥ चुल्लि उद्धानम् ङ्या चुल्ली, अदन्तादपि ङ्या चुल्ली । यद्गौड —'चुल्लोऽश्मन्ते च योषिति' ॥ चुण्टि क्षुद्रवापी । अर्थप्राधान्याच्चुरिरित्यपि ॥ तरि नौ । अथप्राधान्याद्रोण्यपि, ईदन्तस्य तु 'कृत' इत्येव सिद्धम् । यद्गौड —'दशा नौपेटके तरी'। अंहति दानम् । शाणि शाण ॥ स्वागता ॥ २८ ॥

सनिः सानिमेनी मरिर्मारिरभ्र्योषधी विद्रधिर्झल्लरि पारिरभ्रि ॥
शिरोधि कवि कीर्तिगन्त्रीरुग्वर्थः कुमार्याऽऽढकी खेदनी ह्लादिनीली ॥ २९ ॥

एते शब्दा स्त्रीलिङ्गा । सनि अध्येषणा । सानि प्रावरणभेद । मेनि सङ्कल्प । मरि मारिश्च—मरकम् । अश्रि—कोटि धनुषोऽटनिश्च ॥ ओषधि फलपाकान्ता, अधिप्रत्ययान्तोऽय किप्रत्ययान्तो वा ॥ विद्रधि रोगविशेष, रधिकूप्रत्ययान्तोऽयम् । उपलक्षणत्वाद्विदारी रोगभेद । यद्गौड —'विदारी रोगभेदेऽपि शालिपर्णीक्षुगन्धयो'॥ झल्लरि वाद्यभेद । अथप्राधान्यात् झिल्लरी च । यद्गौड —'झल्लरी झिल्लरी च द्वौ हुडुक्के' ॥ पारिः—कर्करीपूरयो पारी । पादरज्जा च हस्तिन । अभ्रि खनित्रम् ॥ शिरोधि कन्धरा, यन्माघ —'निभाणमायतिमतीमवृथा शिरोधिम्' ॥ कवि खलीनम् । यद्गौड —'खलीने स्त्री कवि पुसि काव्यकृत्

---

तन्तुवायोपकरणमिति वानदण्ड लोके थासणी इति प्रसिद्धि । पत्रसिरेति पत्रनसा ॥ २७ ॥ दलमितीह दल खण्डवाचकम् । माषचतुर्भाग मषादगुञ्जा । पणचतुर्भाग इति विंशति कपर्दा । उच्छित्तिरिति उच्छेद । गृहोपरिकुटिरिति लोके घरडि । पटलाधारश्च वशपञ्जर इति किंविशिष्ट वशपञ्जर ? पटलाधार पटलशब्देन लोके छाजा इत्युच्यते तदाधार । नेमौ इति चक्रधारायाम् । उद्धानमिति लोके चूल्हउ । क्षुद्रवापीति लघुकूपिका, लोके वेरी इति प्रसिद्धि । दशेति अवस्था । पेटके इति वस्त्रादीना स्थानकविशेषे, लोके पेई इत्यय । शाण इति लोके धराण ॥ २८ ॥ अध्येषणेति याच्ञा । प्रावरणभेद इति लोके गूणि । मरकमिति मिरखी । शालिपर्णीति सालवनी । इक्षुगन्धेति क्षीरविदारी । यदाह— अन्या क्षीरविदारी स्यादिक्षुगन्धेक्षुवल्लयपी'ति । कर्करीति कर्करीशब्देन गलन्तिका कोणिका चोच्यते, यथाक्रम लोके करुडी गागरी इति प्रसिद्धि । पूर इति प्रवाह । खनित्रमिति अवदारणम् कुद्दालादि

गुरुपण्डिते' ॥ पीतिः पश्य । उणादाविप्रत्ययान्तोऽयमिति 'च्युक्ता' इति न सिध्यति ॥ अथेदन्ताः पञ्चपञ्चाशत्—गन्त्री शकटिका ॥ कवरी केशविशेषः । यद्गौडः—'शाकवेशविशेषे स्त्री कवरः लवणाम्लयोः' । हरिद्रायां तु तन्नामत्वादेव स्त्रीत्वम् ॥ कुमारी 'कुमारी रामतरणी नवमाल्योर्नदीभिदि । कन्याऽपराजिता गौरी जम्बूद्वीपेषु च स्मृता ॥ कुमारो बालके स्कन्दे युवराजेऽश्ववारके । शुकेऽपि वरुणद्रौ च कुमार आत्मकाञ्चने' ॥ आटकी धान्यभेदः । अर्थप्राधान्यात्तुवर्यपि ॥ स्वेदनी कन्दुः ॥ ह्लादिनी वज्रम् । अशनिनामत्वात्पुंस्त्वे प्राप्तेऽपवादः । तडिति तु तन्नामत्वादेव स्त्रीत्वम् ॥ ईली—एकधारोऽसिः, यस्य करवालिकेत्याख्या ॥ भुजङ्गप्रयातम् ॥ २९ ॥

हरिण्यश्मरी कर्त्तनीस्थग्यपट्यः, करीर्येकपद्यक्षवत्यः प्रतोली ।
कृपाणीकदल्यौ पलालीहसन्यौ वृसी गृध्रसी घर्घरी कर्परी च ॥ ३० ॥

एते शब्दाः स्त्रीलिङ्गाः । हरिणी—हेमप्रतिमा, मृगी, वृत्तभेदः, नीलवर्णा, यूथिका च ॥ पाण्डौ त्वाश्रयलिङ्गः ॥ अश्मरी मूत्रकृच्छ्रम् । कर्त्तनी तर्कुः[10] । स्थगी ताम्बूलकरङ्कः । अपटी काण्डपटः ॥ करीरी करिदन्तमूलम् । चीरिकायां[13] तु तन्नामत्वादेव सिद्धम् ॥ एकपदी मार्गः । अर्थप्राधान्यात्पदविरित्यपि ङ्या पदवी ॥ अक्षवती द्यूतम् । प्रतोली—विशिखा कृपाणी । कर्त्तरि, अर्थप्राधान्यादस्यापि स्त्रीत्वम् । छुर्यां तु शस्त्रीनामत्वात्सिद्धम् ॥ कदली 'रम्भायां वैजयन्त्यां च कदली हरिणान्तरे । कदला डिम्बिका पृश्नी शाल्मलीषु च योषिति' मृगवाची अमरकोशे त्विन्नन्त उक्तः ॥ पलाली पलालक्षोदः । हसनी—अङ्गारशकटिः । अर्थप्राधान्याद्धसन्त्यपि, के हसन्तिका ॥ वृसी व्रतिनामासनम् । दन्त्योपान्त्यः, मूर्द्धन्योपान्त्योऽप्ययम् ॥ गृध्रसी ऊरुसन्धौ वातरुक् । घर्घरी किङ्किणीका, स्वार्थिके के घर्घरिका सैव, वादित्रभेदश्च ॥ कर्परी—तुत्थाञ्जनम् । अर्थप्राधान्याद्दर्विरेत्यपि ॥ भुजङ्गप्रयातम् ॥ ३० ॥

काण्डी खल्ली मदी घटी गोणी पण्डाल्येपणी द्रुणी ॥
तिलपर्णी केनली खटी नध्रीरसन्यौ च पातली ॥ ३१ ॥

---

सामान्यापेक्षया । [23] खलीनमिति लोके चकडा । [24] काव्यकृत् गुरुपण्डिते इति काव्यकर्त्तरि दैत्यगुरौ पण्डिते च । [1] शकटिकेति लोके वहिल । [2] शाकविशेष इति लोके जहारिनामा शाकभेदः । [3] रामतरणीति लोके सेवत्री । [4] नवमालीति लोके नीमाली । [5] अपराजितेति गिरिकर्णा लोके गिरणइ । [6] वरुणद्रौ इति वरणा नाम्नि वृक्षे । [7] कन्दुरिति पाकस्थानम् । [8] करवालिकेति वडवलमिति लोके ॥ २९ ॥ [9] मूत्रकृच्छ्रमिति लोके पाहणी । [10] तर्कुरिति लोके त्राकलओ । [11] ताम्बूलकरङ्क इति ताम्बूलस्थानम् । [12] काण्डपट इति लोके परीयछि । [13] चीरिकायामिति तिमिरीनाम्नि जीवविशेषे । [14] अस्यापीति कर्त्तरिशब्दस्य । [15] वैजयन्त्यामिति, इह वैजयन्तीशब्दोऽरणीकाष्ठवाचकः । [16] डिम्बिकेति डमरम् । [17] पृश्नी इति पीठवनी । [18] शाल्मलीति सींबलीनामा वृक्षः । यद्विश्वः 'कदली शाल्मली पृश्नी डिम्बिकासु च कथ्यते' इति । [19] अङ्गारशकटीति लोके सींगडी । यस्यां अङ्गारान् क्षिप्त्वा शीतकाले तप्यते । ऊरुसन्धौ वातरुक् इति, राधिणिवाउ इति प्रसिद्धिः । [21] किङ्किणिकेति लोके घूघरी । [22] सैवेति किङ्किणिका घुघरीत्यर्थः । [23] तुत्थाञ्जनमिति लोके खापरीयओ ॥ ३० ॥

एते शब्दाः स्त्रीलिङ्गाः । काण्डी गृहकाण्डादि । गडी कलापादावनड्वानायो रोगः । मदी कृषकवस्तुविशेषः । घटी घटसण्डम् । गोणी धान्यभाजनविशेषः । अर्थप्राधान्याद् गण्डालाऽपि । यद्गौड –'गण्डाला जाङ्गोणिका' ॥ गण्डाली 'गण्डाली शेरमाने स्त्री सरसी धान्यमुष्टिर्ययो'। मूर्धन्यादिरयम् ॥ कर्णी–बाणभेदः, अर्थप्राधान्यात् कर्णिकापि । कूणी कणजलौका । तिलपर्णी–रक्तचन्दनम्, पर्यन्तोपलक्षणात् मापपर्णी मुद्गपर्णीत्यपि । केवली–ज्योतिःशास्त्रम् च । खटी कठिनी । अर्थप्राधान्यात् खटीकठिन्यावपि । नदी वर्द्धी । रसवती महानसम् । पालली 'पालली धेनुरास्या स्थानारिर्मृत्पात्रभेदयो' ॥ वैतालीयम् ॥ २१ ॥

वाली गन्धोली कारली गोष्ठ्यजानीन्द्राणी मत्स्यण्डी दामनी शिञ्जिनी च ।
शृङ्गी कस्तूरी देहली मौर्व्यतिथ्यासन्दी क्षैरेय्यः शष्कुली दर्दुपर्दू ॥ २२ ॥

एते शब्दाः स्त्रीलिङ्गाः । वाली–कुमार्याः कर्णभूषणम् मेधिश्च । ये वालिका सैकेय सिकताश्च । गन्धोली क्षुद्रजन्तुः । ईपल्लोऽस्यामिति कारली–वल्लीविशेषः । निषादप्रकृतिसमो द्विश्रुत्युत्कर्षणात्स्वरः । ह्रस्वादपि ङया कारली, स घोष एव । गोष्ठी–सङ्घविशेषः, सभा, सलापश्च । अजानी–जीरकः । इन्द्राणी स्त्रीणां करणविशेषः सिन्दुवारश्च । इन्द्रभार्यावाचिनस्तु योगिमत्त्वात्स्त्रीत्वम् । मत्स्यण्डी–शर्कराभेदः । अर्थप्राधान्यात् मत्स्याण्डी सीताण्डी च । दामनी पशुरज्जुः । शिञ्जिनी–ज्या पादन्यसे पादकटकं च । शृङ्गी–'शृङ्गी विषायामृषभे स्वर्णमीनविशेषयोः' । कस्तूरी मृगमदः, अर्थप्राधान्याद् गोजरगन्धापि । सीताद्यासमास्तु योगिमत्त्वादेव स्त्रीत्वम् । देहली द्वारामे स्थलम् । कुम्भोदुम्बर इति तु सभ्याः । मौर्वी–ज्या, अतिथी, यवस्वाला । आसन्दी वेत्रासनम् । क्षैरेयी पायसम्, शष्कुली अन्नभेदः । अवाराद् तत्वाद्गौरादित्वात् ङी, ह्रस्वादपि ङया शष्कुली ॥ अथोदन्ता अष्टौ–दर्दु कुष्ठभेदः । पर्दुः पौर्भाक्षि, परशौ तु वज्जामत्वात्पुंस्त्वम्, ये पर्शुका ॥ वैश्वदेवी ॥ २२ ॥

---

गृहकाण्ड्यादिरिति वेदनिपद्ये भ्रमविशेषः । कृषकवस्तुविशेष इति हालिकानां वस्तुभेदः, लोके मादि इति प्रसिद्धिः । धान्यभाजनविशेष इति लोके गूणि, छागी इति वा प्रसिद्धिः । शेरमाने इति सक्थ मीयते येन तत् शेरमानं कपाटं वस्त्रं । सरसीति लोके सरोवर । कामुककारति कामुकी धाता स्त्री च कामुकथी । कणजलौकेति लोके कानसिळाइया । रक्तचन्दनमिति रत्ताञ्जणी । माषपर्णीति मापपणी । मुद्गपर्णीति मुग्गवनी । कठिनीति लोके खडी । वर्द्धीति लोके वाधरी । धेनुरायामिति मृगपादो । मृत्पात्रभेद इति मृत्तिकापात्रविशेषः ॥ २१ ॥ मेधिरिति खलमध्यगतो बन्धनकीलः, लोके मेदि इति प्रसिद्धिः । तदत्येति कुमार्याः कर्णभूषणं मेधिश्च । सिकता इति लोके वेलु । क्षुद्रजन्तुरिति तेलाटीनामा, लोके पीली भमरी । निषाद इति निषादस्वरः । द्विश्रुत्युत्कर्षणादिति मधुरश्रुतिसूक्ष्मश्रुत्युत्कर्षणात् । सङ्घविशेष इति लोके गोठि । सलाप इति परस्परं जल्प । शर्कराभेद इति खण्डशर्करा लोके गुली खांड । ज्येति लोके पणछि । पादकटकमिति नूपुरं लोके नेउर । विषायामिति ककटश्टङ्ग्याम् । ऋषभे इति ऋषभनाम्नि औषधे । स्वर्णमीनविशेषयोरिति स्वर्णविशेषो अलङ्कारमकरिका, [ लोके कुन्दर ] मीनविशेषो मद्गुरप्रिया । यदाहु 'मद्गुरस्तु राजशृङ्ग, शृङ्गी मद्गुरप्रिये'ति । द्वाराग्रे स्थलेति लोके धडओ । कुम्भोदुम्बर इति अधःस्थित उदुम्बरः लोके ऊंबरा । अन्नभेद इति लोके साकुली ।

कर्णान्दुकच्छू तनुरज्जुचञ्चु स्नायुर्जुहूः सीमधुरौ स्फिगर्वाक् ॥
द्वार्द्योदिवौ स्रक्त्वगृचः शरद्वाश्छर्दिर्दरत्पामदृषद्दृशो नौः ॥ २३ ॥

एते शब्दा स्त्रीलिङ्गा । कर्णान्दु 'उत्क्षिप्तिकाया कर्णान्दु कर्णपाश्यामपि स्त्रियाम्' । कच्छू पामा । तनु–काया त्वक्च । यद्गौड –'त्वचि काये तनु स्त्री स्यात्त्रिष्वल्पे विरले कृशे' । रज्जु –दर्भादिकृतो गुण, वेणिका च । गुणेऽर्थप्राधान्याद्वरत्रापि । चञ्चु पक्षिमुखाग्रम् । कच्छू-तनू-चञ्चूना तु दीर्घान्ताना कृत इत्येव स्त्रीत्वम् । स्नायु सिरा । अथोदन्तः–जुहू स्रुग्भेद । अथ द्यौनौवर्जाः षोडश व्यञ्जनान्ताः, वन्धानुलोम्येन च क्रमव्यत्ययः । सीमा सीमानौ सीमान । 'सीमाऽऽघाटे स्थितौ क्षेत्रे उपशल्ये च' । क्लीबोऽप्ययमिति हलायुध । भारविश्च 'ननन्द पश्यन्नुपसीम स स्थली ' । धू –शकटाङ्गम्, यानमुखम्, भारश्च । स्फिग्–क्षुतम्, पुत, पचनभाण्डम धान्यादिसवरणकाष्ठ च । अर्वाक्–अवान्तरम्, अर्वागित्यव्ययमपि । द्वा –द्वारम, द्वारौ, द्वार । द्यौ –स्वर्ग, आकाश च । द्यावौ, द्याव, दिवौ दिव ॥ स्रक् होमभाण्डम् ॥ त्वक्–चर्म, वल्कलम्, गन्धद्रव्य च । वल्कले चार्थप्राधान्याच्छल्लिरित्यपि । यद्गौड –'छल्ली वीरुधि सन्ताने वल्कले कुसुमान्तरे' ॥ ऋग् गायत्र्यादि । धाय्याया तु तन्नामत्वादेव सिद्धम् ॥ एते त्रयोऽपि चान्ताः । शरत्–ऋतुविशेष सवत्सरश्च । वा वारि, रूपावतारे तु धर्मकीर्तिनास्य नपुसकत्वमुक्तम ॥ छर्दि वान्ति । छर्दिषौ ॥ दरत्, म्लेच्छजाति, राष्ट्रविशेपश्च । पामा–कच्छू । पामानौ पामान ॥ दृषत्–पाषाणम्, निष्पेषणशिला च ॥ दृक् 'लोचने दर्शने बुद्धौ दृक् स्त्री त्रिषु च वीक्षके' ॥ नौ तरी । उदन्तानामुदन्तत्वाच्छरदश्च वर्षर्तुनामत्वात्पुस्त्वे द्योदिवो स्वर्गनामत्वात्पुस्त्वे नभोनामत्वान्नपुसकत्वे वारो जलनामत्वाच्छर्दिषो द्विस्वरसन्तत्वान्नपुसकत्वे च प्राप्ते वचनम् ॥ इन्द्रवज्रा ॥ २३ ॥

इति स्त्रीलिङ्गा समाप्ता ॥

कुद्दभेद इति लोके द्राम्र । पांश्वास्यीति पासुली । परशौ इति कुठारे ॥ २२ ॥ उत्क्षिप्तिकायामिति लोके गठोडा भोगनीया वा इत्यादौ । कर्णपाश्यामिति कणवाठिकायाम् । त्वचीति चर्मणि । दर्भादिकृतो गुण इति लोके रांढू । वेणिकेति मस्तकस्य वेणीदण्ड । स्रुग्भेद इति सरूआ । आघाटे इति अवधौ । उपशल्ये इति ग्रामसीमायाम् । शकटाङ्गमिति लोके धुरी । यानमुखमिति लोके कागूओ [ कागूऊ ] । क्षुतमिति छिका । पुत इति लोके पूद । पचनभाण्डमिति लोकोक्त्याऽत्र हाडी । धान्यादिसवरणकाष्ठमिति लोके दवाली । अवान्तरमिति लोके उरहओ । वल्कलमिति लोके वृक्षछालि । गन्धद्रव्यमिति तज । वीरुधीति लतागुल्मभेद, तत्र । सन्ताने इति सन्ततौ । कुसुमान्तरे इति पुष्पभेदे । धाय्यायामिति यया वेद काण्ड्या समिध् क्षिप्यते सा ऋक् धाय्योच्यते । यदाहु 'ऋक् सामिधेनी धाय्या च समिदाधीयते यया' । इति तस्याम् । रूपावतारे इति रूपावतारनाम्नि ग्रन्थे । निष्पेषणशिलेति नीसाह, वाटि, पटी इति वा । दर्शने इति विलोकने । वीक्षके इति विलोकयितरि ॥ २३ ॥

इति श्रीशानविमलोपाध्यायशिष्यवाचनाचार्यश्री[illegible] श्रीहेमचन्द्राचार्यकृतस्वोपज्ञलिङ्गानुशासनवृत्ति-[illegible] समाप्ता ॥ २ ॥



## अथ नपुंसकलिङ्गाः ।

नलस्तुतचसयुक्तररयान्त नपुंसकम् ।
वेधआर्दीन् विना मन्तं द्विस्वर मघकर्चरि ॥ १ ॥

नलस्तुतत्तसयुक्तररुयान्त नपुंसकम्—नामेत्यनुवर्तने । नान्त लान्त स्त्यन्त सान्तम् स्तान्त संयुक्ता ये ररयान्तदन्त च नाम नपुंसकलिङ्ग स्यात् । नान्तम्—अजिनम्, चर्म्म । व्यसनम्, विपत्त्यादि ॥ यन्नाहु—'विपत्तावशुभे पापे पानस्त्रीमृगयादिषु । दैवानिष्टफले सक्तौ व्यसन निष्फलोद्यमे' । भाजन पानम् ॥ काञ्चनम्—स्वर्णम्, चित्रन्यञ्च । यन्नाह—'काञ्चन काञ्चनारे स्याच्चम्पके नागकेसरे । उदुम्बरे च पुंसि हरिद्रायां च काञ्चनी' ॥ 'काञ्चन हेम्नि निष्क्रान्ते' ॥ जघनम्—'स्त्रीश्रोणिपूर्वभागे तु जघन कटिमात्रके' ॥ व्यञ्जनम्—'व्यञ्जन तेमने चिह्ने श्मश्रुण्यवयवेऽपि च' । ककारादिक वर्णे ॥ दशनम् कङ्कट ॥ लेखनम् 'छेदे भूर्जे लिपिन्यासे लेखन स्यान्नपुंसकम् ॥ धानम् 'धान गुल्फले धुन्ने फेटे सीवनकर्मणि । जैलसम्भववीतोर्मिसुरङ्गागतिर्मारभे' ॥ सारसनम्—'मेखलायां सारसनमुरस्त्रं च तन्तुत्रिणाम् । अधोवासोमथा च' ॥ वेतन मूल्यम् । पवनम्—'कुलालपवनस्थाने स्यात्क्लीबं पवनो नरि । समीरणे च निष्पावे' । प्रयोजनम् 'कार्ये हेतौ प्रयोजनम्' । प्रधनम् येत्र । रसायनम्—जराव्याधिजिदौषधम् । पक्षिगरुडयोस्तु देहिनामदनात्पुंस्त्वम् ॥ सञ्चयनं तु शालम् । जयनम् 'जयन स्यात्तुरङ्गादिसन्नाहे विजयेऽपि च । दर्शन लोचने स्वप्ने बुद्धिशास्त्रोपलब्धिषु ॥ धर्मदर्पणयोश्चापि' ॥ योजनम् 'योजन स्याच्चतुष्क्रोश्यां योगे च परमात्मनि' । अयनम्—सूर्यादीनां दक्षिणोत्तरगमनम् । सजनन वशीकार । अपान पायु । व्यजन तालवृन्तम् । प्रधनम्—ग्यादिधन, आहवश्च । हैयङ्गवीनम्—नवनीत घृत च ह्योगोदोहसमुद्भवम् । वृजिनम्—धैपायित चर्म, पाप च । केशे तु तन्नामत्वात्पुंस्त्वमेव । सोपान अधिरोहिणी । वीराशसन 'सा वीराशसन युद्धभूमिर्याति भयप्रदा' । अञ्जनम्—कज्जलम्

---

पानमिति मद्यपानम् । सक्तौ इति आसक्तौ । काञ्चनारे इति काञ्चनारनाम्नि वृक्षे । उदुम्बरे इति उम्बरनाम्नि वृक्षे । किञ्जल्के इति केसरे । तेमने इति लोके सालणा [ ओलण ? ] । श्मश्रुणीति लोके मूछि । कङ्कट इति सन्नाह । भूर्ज इति भूर्जपत्रे । फेटे इति वीरणादिमये, लोके किटा । जैलसंभव इति जन्मीलन । वीतोर्मिरिति लोके वावोली । उरस्त्र इति अधिकाङ्गे । यदाहु 'सारसन त्वधिकाङ्ग हृदि धार्यं सकञ्चुकैः । तन्तुत्रिणां इति मकडुकानाम् । अधोवासोऽथनमिति पाटपटिकादय लोके पाटली स्यथ । कुलालपवनस्थाने इति लोके नीवाह । निष्पावे इति लोके वाल्नाम धान्य वन । चैतु शालमिति लोके चउसाल घर । बुद्धिरिति मत तत्र यथा दृश्यैषां हि दर्शनम् । शास्त्रमिति ग्रन्थ । उपलब्धिरिति ज्ञानम् । तालवृन्तमिति लोके वींजणो । आहव इति सङ्ग्राम । धैपायित चर्मेति रक्त चर्म । अधिरोहणीति

महारजतम् कुसुम्भं कमण्डलुश्च । श्मशानं पितृवनम् । आलानं हस्तिबन्धनकाष्ठम् । दानं मदः । कठिनं कठोरम्, गुणवृत्तेस्त्वाश्रयलिङ्गता । सवनम्—पूर्वाह्णादि कालः । कौलीनं 'कौलीनं स्यात्कुलीनत्वे गुह्ये जन्ये कुकर्मणि । कौलेयकविहङ्गाहिपशूनां सङ्गरेऽपि च' । मिथुनं युग्मम् । कापिशायनं मद्यम् । कुचन्दनं 'रक्तचन्दनपत्राङ्गद्रुभेदेषु कुचन्दनम्' । शकुनं 'देवशंसिनिमित्ते च शकुनः पुंसि पत्रिणि' । कौपीनम्—पायूपस्थं तदाच्छादनवस्त्रं अकार्यं च । संवेशनम् निधुवनं मोहनं मैथुनं च—रतम् । वनम्—क्लीबे स्यात्कानने नीरे निवासे निलये वनम् । काननं विपिनं गहनं च—अरण्यम् । आननं वदनं लपनं च—मुखम् ॥ लान्तम्, चत्वालः समूहः । दलामलं 'दलामलं मरुबके दमनेऽपि नपुंसकम्' । ताम्बूलं 'गुवाकेऽपि च ताम्बूलं नागवल्ल्यां च योषिति' । दलं शकलं किसलं विसलं च—किसलयम् । हरितालं धातुविशेषः ॥ पेलं वृषणम्, स्वार्थिके के पुंसि । यद्गौडः—'फलकोषश्च पेलकः' ॥ कुकूलम्—शङ्कुमान्गर्तः, तुषाग्नौ तु पुन्नपुंसको वक्ष्यते । वीलम्—भ्रंसः काण्डं च । ऊलम्—छद्म स्खलितं च ॥ मलम्—कश्मलं मूर्च्छा अविद्या च । पुरीषादौ तु पुन्नपुंसकः, मलिने त्वाश्रयलिङ्गः ॥ कज्जलं अञ्जनम् । निर्मलं 'निर्माल्याऽभ्रकयोः क्लीबं निर्मलं विमले त्रिषु' । शाद्वलं हरितम् । कुशलम् 'पर्याप्तौ सुकृते क्षेमे कुशलं शिक्षिते त्रिषु' ॥ मञ्जुलम् 'मञ्जुलं त्रिषु मञ्जौ ना जलरङ्कौ नपुंसकम् । जलाञ्चले निकुञ्जे च' ॥ लाङ्गलम्—'गृहदारविशेषे स्यात्ताले गोदारणेऽपि च । लाङ्गलं पुष्पभेदे च लाङ्गली तोयपिप्पली' ॥ विदलम्—दाडिमस्य चणः, वंशदले तु सिद्धमेव । तिलम्—अप्रतिहतं क्षेत्रम् । पललम्—'पललं तिलचूर्णे स्यात्पललं पङ्कमांसयोः । पललो यातुधाने ना' । गवलम्—माहिषं शृङ्गम् । स्थूलं दूष्यम् ॥ द्रुमलम्—काननं, जङ्गलं, अरण्यं, निर्जलदेशश्च । मांसे तु पुन्नपुंसकत्वं वक्ष्यते ॥ कुतूहलं कौतुकम्, प्रज्ञादाणि कौतूहलम् ॥ स्थण्डिलं स्थलम् । कीलालम्—अमृतम् जलम् रुधिरं च । करालं 'करालं कृष्णपर्णाशे त्रिषु भीष्मे च दन्तुरे' । चूलम्—'तडागे सैन्यपृष्ठे च स्तूपे चूलं

लोके पावडसाला । गुह्ये इति गोप्ये । जन्ये इति लोकापवादे । कुकर्मणीति कुत्सितकार्ये । कौलेयकविहङ्गाहिपशूनां सङ्गरे इति कुकुरपक्षिसर्पपशूनां युद्धे इत्यर्थः । रक्तचन्दनमिति रक्ताञ्जणी । पत्राङ्गमिति लोके पतग । द्रुभेद इति वृक्षभेदः । देवशंसिनिमित्ते इति लोके सउण । पत्रिणीति पक्षिणि । तदाच्छादनवस्त्रमिति पायूपस्थाच्छादनवस्त्रमिति । निलये इति गृहे । मरुबके इति लोके मरूअओ । दमने इति लोके दमणओ । गुवाके इति लोके सोपारी । नागवल्ल्यामिति नागरवेली । किसलयमिति नव पत्र लोके कूपल । धातुविशेष इति हरियाल । शङ्कुमान्गर्त इति कीलकयुक्तो गर्तः । भ्रंस इति कुन्त । काण्डमिति बाण । निर्माल्यमिति उपभुक्तपुष्पादि । अभ्रक इति लोके भोडल । पर्याप्तौ इति सामर्थ्ये । सुकृते इति पुण्ये । शिक्षिते इति अभिज्ञे । मञ्जौ इति मनोज्ञे । जलरङ्कौ इति बकविशेषे । जलाचले इति शेवाले । निकुञ्जे इति लतामण्डपे स्थाने । गृहदारविशेष इति गृहकाष्ठविशेषे वलके ओमालये । ताले इति ताडनाम्नि वृक्षे ताडफले वा । गोदारणे इति हले । तोयपिप्पलीति जलपिप्पली । वंशफले इति दाडिमफले । तिलचूर्ण इति लोके तिलवटि । पङ्क इति कर्दम । यातुधाने इति राक्षसविशेषे । दूष्यमिति वस्त्रगृह लोके तबू । कृष्णपर्णाशे इति कुठेरकाख्ये वृक्षे [illegible] आजओ इति प्रसिद्धे । यदाह 'कुठेरकस्तृतीयो-

तटेऽपि च' ॥ कुलम्–'कुल जनपदे गोत्रे सजातीयगणे तनौ । गृहे च' ॥ आमीलम्–भीषण दु र च । लप्रकृतित्वादामीरमित्यपि । उदूखल उदूखल च–खण्डनभाजनम् । डस्य लत्वे उलूखलमित्यपि । उद्दालम्–आर्द्रोद्धृता भू नन्दीपद्मश्च । अन्तराल मध्यम् । मालम्–कपट वनविशेषश्च । आलम्–अनथ हरिताल च । अवचूलम्–चिह्नम् शेखरश्च । तुमुलम्–भृशमाकुलम् । यद्गौड –'बिभीतकतरौ पुसि तुमुल रणसङ्कुले' ॥ बलम्–स्थौल्यादि । अन्यत्र यथाप्राप्तम् । यद्गौड –'बल तु स्थौल्यसैन्ययो । रूप गन्धरसे स्थाम्नि क्लीब वांचालके स्त्रियाम् । काके दैत्यान्तरे रामे पुसि स्याद्बलिनि त्रिषु' ॥ प्राणे तु पुनपुसको वक्ष्यते ॥ वायुफलम्–'क्लीब वायुफल शक्रचापे वर्षोपलेऽपि च' । अलम्–वृश्चिकलाङ्गूलम् । संस्वरुक् हरिताल रक्त च । शलम्–श्मशानम् । वृजिनम्–धान्त्विद्रोम चर्म च । खोलम्–शिरस्त्राणम् ॥ स्वन्तः–वस्तु–तत्त्वम् पदार्थश्च । मस्तु दधिनिस्यन्द ॥ तान्त. शीत अनुष्णम् । ऋतुविशेषे तु पुस्त्वनाधनार्थं नपुसकत्व वक्ष्यते । नवनीतम्–घृतप्रकृति । अलातम्–उल्मुकम् । अद्भुतम्–आश्चर्यम । गुणवृत्तेस्त्वाश्रयलिङ्गता । कृतम्–आदियुग पर्याप्त च । विहितहिंसितयोस्त्वाश्रयलिङ्गता । आकूतम्–अभिप्राय । फाणित खण्डक्ष्योत । द्वैत द्वैधीभाव । प्राचीनावीत निवीत च–ब्रह्मसूत्रभेदौ । यदाह–'उपवीत यज्ञसूत्र प्रोद्धृते दक्षिणे करे । प्राचीनावीतमन्यस्मिन्निवीत कण्ठलम्बितम्' इति । उपवीत तु पुन्नपुसक वक्ष्यते । मतम्–अभिप्राय लोष्टमर्दनकाष्ठ च । मरकत हरिन्मणि । अत्याहितम्–महाभीति साहस च । अपगीतम्–'क्लीबेऽपगीत निर्वादे दुष्टगर्हितयोस्त्रिषु' । सस्कृतम्–'सस्कृत लक्षणोपेते वाच्यलिङ्ग तु कृत्रिमे' ॥ तत वितत च–वाद्यभेदौ । यायौ तन्नामत्वात्पुसि । व्याप्तविस्तृतयोस्त्वाश्रयलिङ्गता ॥ क्षत व्रणम् । यतम्–निषादिना गजे पादसज्ञा । यात अङ्कुशवारणम् । वीतम्–एतद्द्वयोभयम् असार च हस्त्यश्वम् । ऋत सत्यम् । अमृतम्–यज्ञविशेष । पीयूषम्–मोक्ष जल च । मृत शवम् । अनृत असत्यम् । सत्यानृतम्–वणिक्सत्यम् । ऋतादयो जीविकाभेदा अपि । यन्मनु –'ऋतमुञ्छशिल ज्ञेयममृत स्यादयाचितम् । मृत [illegible] याचित

---

'यो मालुक कृष्णमालुक । कृष्णार्जक कालमाल कराल कृष्णमल्लिक' इति । भीष्म इति भयङ्कर । दन्तुरे इति उन्नतदन्ते । स्तूपे इति मृदादिकूटे, लोके थूभ । तनौ इति देहे । खण्डनभाजनमिति ऊखल । आर्द्रोद्धृता भूरिति आर्द्रा उद्धृता च या पृथ्वी । गन्धरसे इति बीजाबोल । वांचालके इति मल्लनाम्न्यां ओषधौ । शक्रचापे इति इन्द्रधनुषि । वर्षोपले इति लोके गड़ा । संस्वरुगिति धान्यरोग । रक्तमिति रुधिरम् । वृजिनमिति पापम् । धान्त्विद्रोमेति सेहल (ल ?) नाम्नो जीवस्य शलाका । चर्मेति इह चर्मशब्देन खेटक लोके खेडओ । शिरस्त्राणमिति लोके टोप । दधिनिस्यन्द इति लोके दही नी धरी । घृतप्रकृतिरिति लोके माखण । उल्मुकमिति लोके ऊम्बाडा । खण्डक्ष्योत इति गुडद्रव मत्स्यडी वा लोके काकबो । ब्रह्मसूत्रभेदौ इति वामे करे प्रोद्धृत प्राचीनावीतम् कण्ठे ऋजु लम्बते यत्तत् निवीत । यज्ञोपवीतविशेषौ इत्यर्थ । वाद्यभेदौ इति वीणादिवाद्यविशेषौ । एतद्द्वयोभयमिति वीतशब्देन निषादिनां गज पादसज्ञा अङ्कुशवारण चोच्यते । असारं च हस्त्यश्वमिति यत्तु हस्तिनश्च अश्वाश्च हस्त्यश्व सेनाङ्गभूत यो हस्ती योऽश्व सङ्ग्रामादिकार्य नायाति स वीतमुच्यत इत्यर्थ । ऋतादयो जीविकाभेदा इति । ऋत अमृत मृत अनृत सत्यानृतमित्येते आजीविकाभेदा इत्यर्थ । उञ्छशिलमिति उञ्छशब्देन

भैक्षं प्रमृतं कर्षणं स्मृतम् ॥ सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते । सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ॥ प्रमृतानृते एकार्थे । पिशितं मासम् । रतं सुरतं च—मैथुनम् । मणितं रतकूजितम् ॥ भारतं वर्षम् । यदमरः 'लोकोऽयं भारतं वर्षम्' । मालायां तु पुस्काण्डे पठितं ॥ मथितं घोलम् । यद्गौडः—'मथितं निर्जले घोले घृष्टे निर्मथिते त्रिषु' ॥ लोकायतं चार्वाकतर्कः । श्रुतम्—शास्त्रं आकर्णनं च ॥ पुटितं बस्तिपुटः । स्यूतपाटितयोस्त्वाश्रयलिङ्गः ॥ रोहितं 'रोहितं ऋजुशक्राख्ये रक्ते मीने मृगे पुमान्' । ललितं 'ललितं हारभेदे स्याल्ललिते चेष्टिते त्रिषु' । तान्तम्—भिन्नं शकलम् । पित्तं मायुः । कृत्तं मासम् । निमित्तम्—हेतुः लक्षणं व्याजश्च । तस्य संयुक्तस्य पृथगुपादानात्पूर्वे असंयुक्ता गृह्यन्ते । संयुक्तरान्तः अग्रं पुरः । यथा अग्रेसरः । अधिकम्, यथा साग्रं शतम् । उपरि यथा—वृक्षाग्रम्—भिक्षाभेदो यथा—'ग्रासप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयम् । अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः' ॥ मुख्यं यथा—अग्रहारः श्रेष्ठे त्वाश्रयलिङ्गता । 'अग्रमालम्बने प्राते परिमाणे पलस्य च । प्रान्ते पुरस्तादधिके प्रधाने प्रथमोर्द्ध्वयोः' ॥ गोत्रं 'गोत्रं नाम्नि कुले क्षेत्रे कानने च्छत्रवर्त्मनोः । संभावनीयबोधेऽपि गोत्रः क्षोणीधरे मतः । गोसमूहभुवोर्गोत्रा' ॥ शुक्रम्—सप्तमो धातुः, अक्षरोगश्च । अग्निमासयोः पुंनपुंसकत्वं वक्ष्यते । असुरे तु देहिनामत्वात्पुंस्त्वम् ॥ नीत्रं 'नीत्रं नेमो[10] वलीके[12]न्दौ[13] रेवतीभेऽपि कानने' । अस्रम्—अश्रु लोहितं च, केशे तु तन्नामत्वात्पुंस्त्वमेव । श्वित्रं कुष्ठम् । अम्लं पुरीतत् । चित्रम्—आलेख्यम् अद्भुतं च । चैत्रं 'चैत्रं मृतकचैत्ये स्यात्पुंसि मासाद्रिभेदयोः' । शिलिन्ध्रं 'शिलिन्ध्रं कदलीपुष्पे कवकत्रिपुटारयोः । ना मत्स्यद्रुमयोर्भेदे स्त्रियां गण्डूपदीमृदि । पक्षिणीभेदेऽपि' ॥ मित्रं सुहृत् । भास्करे तु प्रतिपदपाठात्पुंस्त्वम् ॥ पतत्रं पक्षः । तोत्रम्—प्रतोदः वेणुकं च । पोत्रम्—हलसूकरयोर्मुखम्, सूकरघोणा च । मूत्रं प्रस्रावः । आतपत्रं छत्रम् ॥ तन्त्रं प्रधानादि, प्रधानं यथा—वचनमतन्त्रम् सिद्धान्तः, यथा—चतुष्पीठमिदं तन्त्रम् । प्रसारितास्तन्तवः तन्तुवायोपकरणं च । यथा तन्त्रवायः । परिच्छदो यथा—तन्त्रपतिः, अत एव स्वमण्डलादिचिन्तातन्त्रम् । आयत्ते यथा—परतन्त्रम् । साधारणं भवेत्तन्त्रम्,

धान्यकणादानं शिलशब्देन कणिशाद्यर्जनं उञ्छश्च शिलं चेति उञ्छशिलं ऋतं कथ्यते इत्यर्थः । प्रमृतानृते एकार्थे इति प्रमृतशब्दो अनृतशब्दश्च कर्षणवाचकौ । रतकूजितमिति रते सुरते अङ्गनानां कूजितं अव्यक्तशब्दः । बस्तिपुट इति लोके पेडू । ऋजुशक्राख्ये इति ऋजु सरलं यत् शक्राख्यं तत्र । रक्त इति रक्तवर्णे । ईक्षणमिति चक्षुःस्पन्दनादि । परिमाणे पलस्य चेति पललक्षणे परिमाणे इत्यर्थः । संभावनीयबोध इति सम्भावनीयो यो बोधः स सम्भावनीयबोधः । मास इति ज्येष्ठमासः । नेमौ इति चक्रधारायाम् । वलीकमिति नेव्र । इन्दुरिति चन्द्रः । रेवतीभे इति रेवतीनाम्नि नक्षत्रे । पुरीतत् इति लोके आन्त्र । मृतकचैत्ये इति यत् दग्धस्य निखातस्य वा उपरि स्तम्भादि क्रियते तत्र । लोके सतीस्तम्भ थूभ घोर इति (आदि ?) । कदलीपुष्पे इति लोके केळिफूल । कवक इति लोके भूफोड । त्रिपुटाख्येति निसोत्र नाम्नो ओषधिः । मत्स्यद्रुमयोर्भेदे इति मत्स्यभेदे द्रुमभेदे च । गण्डूपदीमृदीति गण्डूपदी जलूका तस्या मृत् तत्र । प्रतोद इति लोके पराणी । वेणुकमिति वेणुमयं वेणुकं गजवशीकरणाय द्विशूलाकारं दण्डः ; लोके गजाङ्को [illegible] प्रसिद्धिः । सूकरघोणेति [illegible]नासिका । चतुष्पीठमिदं तन्त्रमिति चत्वारि

यथा श्वेतो धावति । अन्यत्रापि दृश्यते–'तत्र कुटुम्बकृत्ये स्वात्करणे च परिच्छेदे । शास्त्रे प्रधाने सिद्धान्ते तन्तुवाने गदोत्तमे ॥ तथा द्विसायकोपाये श्रुतिशास्त्रान्तरेऽपि च । इतिकर्त्तव्यतायां च तन्त्रीवीणागुणे तनौ । सिरायामऽसृतायां च' ॥ शासनम्–ग्रन्थ निर्देशश्च ॥ अस्त्रम्–चाप आयुध च । वटित्र 'क्लीब कटित्रं चर्माङ्गे रशनाकटिवाससो' । सामुद्रम्–देहलक्षणम् लवण च । दात्र लवनम् । गात्रम् 'अङ्गे गजाग्रजङ्घादिदेशे गात्र वपुष्यपि' । गजाग्रजङ्घादिदेशे [redacted] क्लीनपुसको वक्ष्यते । शुभ्र 'उद्दीप्तशुद्धयो शुभ्र वाच्यवत्क्लीवमऽभ्रके' । धवित्रम्–अग्निसन्धुक्षणार्थं मृगचर्मव्यजनम् ॥ वक्र भङ्गुरम्, गुणवृत्तेस्त्वाश्रयलिङ्गता ॥ क्षुद्रम्–अल्पम्, क्रूराधमयोस्त्वाश्रयलिङ्गता । योत्र योक्त्र च–धर्मरज्जु । लोत्रं लोप्त्र च–अपहृत द्रव्यम् ॥ मन्त्रामित्रपुत्राणा प्रतिपदपाठात्पुत्रच्छात्रादीनां तु देहिनामत्वात्पुस्त्वम् । क्षत्रवक्षोपचक्षादीनां तु पुनपुंसकत्व वक्ष्यते ॥ सयुक्तरुशब्दान्त जतु वक्षोऽससन्धिः । मश्रु कूर्चम् । अश्रु अस्रु च–नयनजलम् ॥ सयुक्तयान्त. शरव्यम् लक्ष्यम् वेध्य च–प्रहारविषय । साम्राज्य हविः । अवद्यम्–गर्ह्यम् अपशब्दश्च । तार्क्ष्यं रसाञ्जनम् । 'तार्क्ष्यं स्यादश्वकर्णारव्यवृक्षे रथतुरङ्गयो । तार्क्ष्य रसाञ्जने तार्क्ष्यो गरुडे गरुडाग्रजे' ॥ पद्य श्लोकबन्ध, अन्यत्र त्वाश्रयलिङ्ग –पद्य कर्दम, पद्या शर्करा । गद्य पद्येतरबन्ध ॥ गव्यम्–रागद्रव्य मौर्वी च, गोसमूहे लिदन्तत्वात्स्त्री, गोक्षीरादौ गोहिते चाश्रयलिङ्ग ॥ चोद्यम्–अद्भुत प्रश्न, चोदनार्हे त्वाश्रयलिङ्ग । दिव्यम् 'त्रिषु दिव्य दिवि भवे वल्गौ क्लीव लवङ्गके । आमलक्यां स्त्रियाम्' । वीर्यम्–रेत बल तेजः प्रभाव द्रव्यशक्तिश्च । 'रसान्तरजा (?) बल्य रेत बलकरे त्रिषु' । आश्चर्य अद्भुतम् । कुड्यम्–गृहभित्ति शिक्य भारावलम्बन वस्त्रविशेष प्रयु च । वाच्यम्–सविशेषणमाख्यातम् । हल धवलजीरकम्, यद्गौड – 'हरिप्रिये हलवे तद्वत् हल धवलजीरके । हलोपचे स्त्रिया वेदे सभ्ये ना वशकारिणि' । गुह्य 'रहस्योपस्थयोर्गुह्य पुमान्कमठदम्भयो ' । कल्य प्रभातम्, शल्य तदेव, प्रातराशे त्वाश्रयलिङ्ग । माल्यम्–माला पुष्प च । पृषदाज्यम्–दधिबिन्दुसहित घृतम् । लास्यम्–अनुद्धत नृत्तम् । नाट्यम्–लास्य तौर्यत्रिक कृतानुकरण च । सह्य 'सोढव्ये वाच्यवत्सह्यमारोग्ये

पीठानि प्रस्थानानि व्याख्येयानि यत्र तत् शास्त्रम् । करणे इति त्रिभुवने । परिच्छेदे इति सैन्यादिरूपे इत्यनेकार्थवृत्तौ । इतिकर्त्तव्यतायामिति अवान्तरव्यापारे । सिरायामिति [शरीरस्य] नाड्याम् । असृतायामिति गुडूच्याम् । निर्देश इति आज्ञा । चर्माङ्गे इति चर्मभेदे । रशनेति कटिमेखला । कटिवास इति कटीवस्त्रम् [लोके कणठ इति भाषा] । अभ्रके इति लोके आभूषा भोडल इति वा प्रसिद्धिः । मृगचर्मव्यजनमिति मृगचर्मणा निर्मित व्यजन मृगचर्मव्यजनम्, एतच्च यज्ञोपकरणे प्रसिद्धम् । धर्मरज्जुरिति लोके जोत्र । कूर्चमिति लोके मूछ । प्रहारविषय इति लोके वेधा । हविरिति होतव्य द्रव्यम् । अपशब्द इति कलङ्क । अश्वकर्णारव्यवृक्षे इति कणवीरनाम्नि । रसाञ्जने इति लोके रसवति । गरुडाग्रजे इति अरुणे । रागद्रव्यमिति गोरोचनादि । गोहिते इति गोसुखे । वल्गौ इति मनोहरे । लवङ्गके इति लिवग । तेजः इति उत्कटत्वम्, यदुक्त 'अधिक्षेपावमानादे प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहन तत्तेज समुदाहृतम् ॥ १ ॥' इति । प्रभाव इति द्रव्यमाहात्म्यम् । भारावलम्बनमिति लोके

ना नेगान्तरे' । सत्य 'सत्य च शपथे तथ्ये कृते तद्वति चान्यवत् । तपोलोकात्परे सत्य '। द्रव्य 'द्रव्य स्याद्द्रविणे भव्ये पृथिव्यादौ च पित्तले । भेषजे च विनेये च जतुद्रुमविकारयो.' । कव्य–ब्राह्मणमुखे पितृभ्योऽन्नम् । हव्यम्–अग्निमुखे देवेभ्योऽन्नम् । उभयमुभयत्रेति श्रुतिशा । हर्म्यं धवलगृहम् । धान्य व्रीह्यादि । धान्य पुंसीति बुद्धिसागर । सीत्य सैंदेन । धिष्ण्य 'धिष्ण्य स्थाने गृहे वह्नौ भैकिनक्षत्रयोरपि' ॥ काव्य ग्रन्थ, अन्यत्र यथाप्राप्तम्–'काव्य ग्रन्थे ग्रहे काव्य काव्या स्यात्पूतनाधियो '॥ कल्य मासम् । सस्यम्–धान्य मीना च । आस्य 'मुखे मुखभवे वक्त्रमध्ये चास्य स्थितौ स्त्रियाम्' । नैपथ्य वेष । पथ्य हितम् । तथ्य अवितथम् । भाष्यम् सूत्रव्याख्यानविशेष । वाद्य आतोद्य–डफादि । वरेण्यम्–दल शुभ च । मूल्य भरण्य च–वेतनम् । मद्य सरक । कक्ष्य 'सुरायामश्वमध्ये च वशार्हे कक्ष्यमद्वयो ' । वास्तु गृहम् । भाग्यम्–कर्म्म शुभाशुभ व्यस्त समस्त च ॥ अर्घ्य शिलाजतु, बुधन्यान्ययोस्त्वाश्रयलिङ्ग । योग्य ऋद्धि वृद्धिश्चौषध्यौ ॥ चर्चिक्य चर्चा । सैन्य सेना, सैनिके त्वाश्रयलिङ्ग ॥ सेव्य उशीरम् । सामर्थ्यं शक्तियोग्यते । अपत्य गोत्रपुत्री । भव्य 'भव्य सत्ये शुभे चास्नि वान्यवद्योग्यभाविनो । कर्म्मरङ्गतरौ भव्यो भव्या कैरिकणोर्मयो '॥ शीर्षण्य शिरस्त्राणम् । विशदकचे तु केशनामत्वात्पुंसि । सौरभ्य 'मनोज्ञताया सौगन्ध्ये सौरभ्य गुणगौरवे' । वैडूर्यं मणिविशेष । साङ्ख्य कपिलशास्त्रम् । लेख्य कलाविशेष । पण्यम्–मूल्य विक्रेय च । पुण्य 'पुण्य स्यात्सुकृते धर्म्मे क्लीन त्रिषु मनोहरे' । पारुष्य 'परुषत्वे शक्रवने पारुष्यं पुंसि गीष्पतौ' । अरण्य वनम् ॥ मरोभेदवाचिनस्त्यहल्याशब्दस्य बाहुल्यात्क्लीबत्वम्, गौतमस्त्रिया तु योनिमन्नामत्वात्स्त्रीत्वम् ॥ वेध आदीन्विना सन्त द्विस्वरम्–वेध प्रभृतीन् वर्जयित्वा सकारान्त द्विस्वर नपुंसकम् । इद रक्ष –निशाचर । वर्च –अकृत रूप तेजश्च । विभाषया पुन्नपुसक इत्यमरटीका ॥ मेद वपा । शेप मेढ्रम् । ओज 'ओजस्तेजसि धातूनामवष्टम्भप्रका-

---

शौका । 'धर्दे मन्त्रे मा वशकारिणी'ति वशकारिणि मन्त्रे पुंलिङ्ग इत्यर्थ । नेगान्तरे इति पर्वतविशेषे सप्तनाम्नी स्यय । शपथे इति सूस तन्त्र । कृते इति कृतयुगे । तद्वतीति तथ्यवति । तपोलोकात्परे इति भू १ भुव २ स्व ३ महो ४ जन ५ तप ६ सत्या ७ इति सप्त लोकाना मध्ये तपोनामलोका दमेतने सत्यनाम्नि लोके इत्यर्थ । पृथिव्यादौ इति 'पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनासि नवैव' तत्र । विनेये इति शिष्यार्हे । द्रुमविकार इति नियासादि । उभयमिति कव्यशब्दो हव्यशब्दश्च । उभयत्रेति ब्राह्मणमुखे पितृभ्योऽन्ने अग्निमुखे देवेभ्योऽन्ने चेति । सैंदेनेति धान्यम् । भैकिरिति वल्म् । ग्रहे इति शुक्रनाम्नि । पूतनेति राक्षसी । वक्त्रमध्ये इति मुखमध्ये । स्थितौ इति आसने । अवितथमिति सत्यम् । अश्वमध्ये इति अश्वस्य मध्यप्रदेशे । अद्वयोरिति नपुंसके । व्यस्तमिति शुभ कर्म्म अशुभ कर्म्म च । समस्तमिति शुभाशुभ कर्म्मैतत्र । शिलाजतु इति नयनौषधम्, यदाह 'शिलाजतु स्यादश्म च शैल गिरिजमश्मजम्' इत्यादीति । चर्चेति या स्त्रीणां पुरुषाणा च ललाटे केसरादिना क्रियते लोके आडि । उशीरमिति वीरणीमूलम् । कर्म्मरङ्गतरौ इति वृक्षभेदे । कैरिकणेति गजपीपलि । उमेति गौरी । शिरस्त्राणमिति लोके टोप । विशदकचे इति लोक पटी । परुषत्वे इति काठिन्ये । शक्रवने इति इन्द्र

शयो । ओजो बले च दीप्तौ च वह्नौ च' । उप प्रभातम्, उपसर्गस्यातथात्वात्प्रत्युष इत्यपि, सन्ध्यायां तु स्त्रीनपुंसकता वक्ष्यते । उर 'उर श्रेष्ठे च वक्षसि' ॥ तेज 'तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसो' । पराधिक्षेपावमानादेरसहन च ॥ पय –क्षीर उदक च । श्रव श्रोत्रम् । तप कृच्छ्राऽऽचरणम्, माघे तु पुंनपुंसको वक्ष्यते । तम –प्रकृतिगुण शोकश्च, राहौ तु पुंनपुंसको वक्ष्यते । अर्श गुदकील । रह 'रहो निधुवनेऽभ्यर्णे तत्त्वे गुह्ये नपुंसकम्', अयमव्ययोऽपि । छन्द –गायत्र्यादि अभिलाष वेदश्च । श्रेय 'धर्मम-ङ्गलयो श्रेय क्लीबे शस्तेऽभिधेयवत् । श्रेयसी करिपिप्पल्यामऽभयारास्नयोरपि' ॥ शिर 'शिर प्रधाने सेनाग्रभागमस्तकयोरपि' । रज 'रज स्यादार्त्तवे गुणे । रज परागे रेणौ च रेजथत्परिकीर्त्तितम्' । गौडस्तु–'क्लीब परागे रेणौ तु नृलिङ्ग रजवद्रज' इत्याह । अन शकटम् ॥ तर –वेग बल च । रह वेग । मह –उत्सव तेजश्च । यश कीर्त्ति । ऊध आपीन । वय 'क्लीब पक्षिणि बाल्यादौ वयो यौवनमात्रके' । याद –जलचर-प्राणी, नदीविशेषश्च । वपु 'शैलाकारे तनौ वपु' । आयु जीवितम् । परु पर्व । यजु अच्छन्दाश्रुति । जनु जन्म । अरु व्रण । सर्पि घृतम् । हवि 'हवि सर्पिषि होतव्ये' । छदि पटलम् । शोचि रोचिश्च–दीप्ति । ज्योति 'दीप्ति कनीनिकामध्यम्' । रवि –नक्षत्र अग्निश्च, गभस्तौ स्त्रीलिङ्ग इत्यमरटीका । गौडस्तु–'ज्योतिर्भद्योतदृष्टिषु । क्लीबे भास्करवह्न्योर्ना' इत्याह । आग –अपराध पाप च । एध इन्धनम् । सह बलम् । ओक गृहम् । स्रोत –इन्द्रियद्वारम्, नदीप्रवाहश्च ॥ वेध आदीन्वितेति किम् ? अय वेधा । 'वेधा विधौ बुधे विष्णौ' । विधा –सैन्य, देहिनामत्वात्पुंस्त्वम् । सहा –हेमन्त मार्गशीर्षश्च, ऋतुमासनामत्वात्पुंस्त्वम् । यद्गौड –'हेमन्ते मार्गशीर्षे ना सह क्लीब बलेऽपि च' । ज्योतिषि च नभा मेघादि । स्वन्तमिति पुंस्त्वम् । यदाह–'नभो व्योम्नि नभा मेघे श्रावणे च पतद्ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च नभा स्मृत' । जरसौ जरस । मिस्सा उषा स्त्री, अनयो क्ष्युत्पत्त्याद्योनिमित्तामत्वाच्च स्त्रीत्वम् । ओका आश्रय स्वन्तमिति पुंस्त्वम् । सद्मनि तु नपुंसक । यदमर 'ओक सद्माश्रयाश्चौका आश्रयेऽपि नपुंसक'मिति गौड । 'ओक आश्रयमात्रे च मन्दिरे च नपुंसकम्' । ओकस्य तु कान्तत्वादेव

बले । गोपेन्द्रो इति वृहस्पतौ । शर्हादिति गृहम् । प्रभावे इति प्रतापे । पराक्रमे इति बले । पराधिक्षेपावमानादेरसहनमिति तिरस्कारावसादे' । यद्रत्न —'अधिक्षेपावमानादे प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहन तत्तेज समुदाहृत'मिति । कृच्छ्राचरणमिति सान्तपनचान्द्रायणादिव्रतम् । गुदकील लोके हरस । निधुवने इति मन्मथे । अभयेति हरीतकी । रास्नेति लोके राठ । सेनाग्रभाग इति सेनाया अग्रभागोऽग्रप्रदेश । आर्त्तवे इति स्त्रीपुष्पे । गुणे इति रजोमात्रे गुणे । रेणुवदिति अकारान्तरजशब्द वत् । शैलाकारे इति पुमाकारे आकृतौ । सर्पिषीति घृते । होतव्ये इति होतव्यद्रव्ये । पटलमिति लोके छाजा । भद्योतदृष्टिष्विति नक्षत्रदीप्तिकनीनिकामध्येष्वित्यर्थ । विधौ इति ब्रह्मणि । बुधे इति पण्डिते । सैन्ये इति मन्वादिविष्णूनामित्यर्थ । ज्योतिषीति दीप्तौ । पतद्ग्रहे इति पात्रे, लोके पड्घा ।

पुंस्त्वम् । नूधा॰ नूधाश्च–मागध॰, देहिनामत्वात्पुंस्त्वम् ॥ द्विस्वरमिति किम् ? दो॰ बाहु, प्रतिपदपाठात्पुंनपुंसकत्वम् । अनेहा॰ काल । दमुना॰ दमूनाश्च वह्नि, सन्तत्वात्पुंस्त्वम् । पूर्वोऽपवादो योग, तेनाऽम्भ॰ यादः स्रोत इत्यादीनां नद्यादिनामत्वेऽपि सन्तत्वान्नपुंसकत्वमेव । गुणवृत्तेस्तु परत्वादाऽऽश्रयलिङ्गतैव । ओजा ना स्त्री वा ॥ मन्न कर्त्तरि–द्विस्वरमित्यनुवर्त्तते । अकर्त्तरि विहितो यो मन् तदन्तं नाम नपुंसकम् । चर्म दृतिः । वर्म सन्नाह । धाम 'धाम क्लीबं गृहे देहे प्रभावे रश्मिजन्मनो' । शुष्म बलम् । तर्म यज्ञे यूपाग्रम् । वर्ष्म 'प्रमाणदेहयोर्वर्ष्म स्यादाऽऽकारेऽतिसुन्दरे' । वर्त्म नयनपुट मार्गश्च । साम प्रियम् । भस्म भूति, स्वार्थिके के भस्मकम्–रोगविशेष विडङ्ग कलधौत च । छद्म उपधि । नर्म परिहास । वेश्म निशान्तम् । पक्ष्म 'पक्ष्म सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि', अक्षिरोमतूलयोस्तु पुंनपुंसकोऽयं वक्ष्यते । लक्ष्म–चिह्न प्रधानं च । मर्म प्राणस्थानम् । भर्म हेम च–सुवर्णम् ॥ अकर्त्तरीति किम् ? ददातीति दामा दामानौ दामान । एव कर्मा शर्मा । द्विस्वरमित्येव–नामशर्मेत्यादि ॥ पथ्यावक्त्रम् ॥ १ ॥

धनरत्ननभोऽन्नहृषीकतमोघुसृणागणशुक्तशुभाम्बुरुहाम् ॥
अघगूथजलाशुकदारुमनोनिलपिच्छधनुर्दलतालुहृदाम् ॥ २ ॥

धनादीनां नाम नपुंसकम् । धननाम, द्युम्नम् द्रविणम् वसु । अश्वभिदेवयोर्भेपूर्वन्तरनान्तस्त्वे । वित्तम् स्वापतेयम् सारम् । ऋक्थम्, व्यञ्जनादिरप्ययम्–रिक्थम् । शुल्कम् । ऋक्थम्, कस्वरमित्यादि । मन्थस्य तु घन्नन्तात्वात्पुंस्त्वम्, स्वधनदायशब्दास्तु पुंनपुंसका वक्ष्यन्ते । धनविशेषोऽपि धनम् । शैवम्–स्त्राप्यधनमित्यर्थ । यौतकं युतयोर्वधूवरयोर्देयम् । अनाहते रुक्मरूप्ये अरूप्यं च आहतं तु रूप्यम्, यद्बौड॰–'आहतस्वर्णरजते रजते च नपुंसकम् । सुरूपे त्रिषु रूप्यं स्यात्' । कृताकृतं हिरण्यम् । रूप्यसुवर्णादन्यत्कुप्यम् ॥ रत्ननाम, रत्नम् वसु माणिक्यमित्यादि । जातौ जातौ यदुत्कृष्टं तदपि रत्नम् ॥ नभोनाम, नभ वियत् खम्, इन्द्रिये तु तन्नामत्वात्सिद्धम्, सूर्ये तु देहिनामत्वात्पुंसि । अन्तरिक्षम् अम्बरम् ॥ अनङ्गम्, कामे तु देहिनामत्वात्पुंसि । व्योम गगनमित्यादि । द्योदिवौ स्त्रियामुक्तौ । आकाशविहायसी तु पुंनपुंसके वक्ष्येते ॥ अन्ननाम अन्नम् सिक्थम् भक्तम् अन्धः इत्यादि । पूपापूपकुल्माससदीदिवीनां पुंस्त्वम् भिस्साभिस्सटयोस्तु स्त्रीत्वं चोक्तम् । कूरौदनाशनानां तु

[1]नयोरिति जरस्–उपसशब्दयो । [2]मागध इति मङ्गलपाठक । [3]अम्भ इति नदी । [4]याद इति जलचर । [5]दृतिरिति लोके दीवडी । [6]प्रभावे इति प्रतापे । [7]आकारेऽतिसुन्दरे इति अतिसुन्दरे आकारे । [8]विडङ्ग इति विडङ्गनामौषधम् । [9]कलधौतमिति रूप्यम् । [10]उपधिरिति कपटम् । [11]परिहास इति क्रीडा । [12]निशान्तमिति गृहम् । सूत्रादिसूक्ष्मांशे इति इह आदिशब्दग्रहणात् कोमादिग्रह । [13]किञ्जल्के इति केसरे ॥ १ ॥ [14]युतयोर्वधूवरयोर्देयमिति लोके दाइजओ । [15]अनाहतरुक्मरूप्ये इति अनाहतशब्देन सामान्येन सुवर्णं रूप्यं चोच्यते इत्यर्थ । [16]अरूप्यं चेति अरूप्यशब्देन च अघटितं स्वर्णं रजतं च ज्ञेयम् । [17]आहतं च रूप्यमिति आहतरूप्याभ्यां घटितं सुवर्णं रूप्यं चोच्यते इत्यर्थ । [18]कृताकृतं हिरण्यमिति घटिताघटितं सुवर्णं रूप्यं च हिरण्यं उच्यते इत्यर्थ । [19]रूप्यसुवर्णादन्यत् कुप्यमिति रूप्यसुवर्णाभ्यां अन्यत्ताम्रादि कुप्यं

पुन्नपुंसकत्वं वक्ष्यते ॥ हृषीकनाम. हृषीकम् विषयि इन्द्रियम् खम् अक्षम् करणमित्यादि । देव च, यद्गौड —'नाम्ने कनामिपेक्षाया तेजोरिसूर्ययोः स्त्रियाम् । मेघे राशि सुरे देवे ना नपुंसकमिन्द्रिये' ॥ तमोनाम. अवतमसम् अन्धतमसम् सन्तमसम् इत्यादि ॥ भूमिच्छायम् । भूमिच्छायेत्यादौ ॥ सेनासुरेत्यादिना विकल्प एव । अन्धध्वान्तान्धकारतिमिराणि ॥ पुन्नपुंसकत्वम्, तमिस्रस्य तु स्त्रीनपुंसकत्वं वक्ष्यते । दिगम्बरस्य तु बाहुल्यात्पुंस्त्वम् । यद्गौड —'दिगम्बरो हरे ध्वान्ते क्षपणे त्रिष्ववाससि' ॥ घुसृणनाम. घुसृणम्, कुङ्कुमम् । वाचस्पतिस्तु लिङ्गाद्येऽपि कुङ्कुम सुरा स्यादिति पुंस्याह । वह्लीकम् । अतिविषाया तु शिशपादित्वात् स्त्रीत्वम् । काश्मीरम् वाह्लिकम् वाहीकम् अग्निशिखम् वर्णं रक्त वर पीतन असृगित्यादि । हरिचन्दनं च । यद्गौड —'कुङ्कुमे हरिचन्दनम् । गोशीर्षज्योत्स्नयोश्चापि न स्त्रियां दिवपादपे' ॥ धीरं च । यद्गौड —'धैर्ययुक्तेऽरणिद्धीरस्तु धीरं क्लीबं तु कुङ्कुमे' ॥ अङ्गणनाम. अङ्गणम् प्राङ्गणम् अङ्गनम् अजिरम् चत्वरमित्यादि ॥ शुक्तनाम शुक्तम् । पूतिनिपुर्योस्त्वाश्रयलिङ्गोऽयम् । शुक्ता चाच न वदेत । आरनाल तुषोदकम् । धान्याम्ल काञ्जिकम् । काञ्जिक कुल्माषाभिषुतम् । अवन्तिसोमम । कुञ्जल महारस वीर सौवीरमित्यादि ॥ शुभनाम शुभ श्वःश्रेयस कल्याण पुण्य मङ्गल भद्र मद्र कुशल सुकृत भेय सूनृत भव्य काम्य श्रेयसीयसम् भावुक भविक शिवमित्यादि । क्षेमस्य तु पुन्नपुंसकत्वं वक्ष्यते । पुण्यश्रेय शिवभद्रान्यत्वद्वत्वाश्रयलिङ्गा ॥ परमसुभत्वाभि श्रेयसमपि शुभम् नि श्रेयसम् । श्रेय शम्भावपि बाहुल्यान्नपुंसक । यद्गौड —'नि श्रेयस तु कल्याणेऽपवर्गे शङ्करेऽपि च । निर्वाण कल्याण'मित्यादि । मुक्ते श्च तत्वात्स्त्रीत्व मोक्षस्याऽऽनन्तत्वादपवर्गस्य च घनन्तत्वात्पुंस्त्वम् ॥ अम्बुरुहनाम अम्बुरुह सरोरुह अब्ज कुशेशय नालीकम्, 'नालीकस्तु शरान्जयो' इति तु गौड । तामरसम् सारसम्, अय पक्षिभेदचन्द्रयो' सान्तरत्वात्पुंसि । सरसीरुह राजीव अरविन्द पङ्कज श्रीपर्णम् । शतपत्रम्, अय राजकीरदार्वाघाटमयूरेषु देहिनामत्वात्पुंसि । अम्बुरुहभेदेऽप्यम्बुरुहम् । श्वेत पुण्डरीक कैरव कुमुदम् । कैरवे तु पुन्नपुंसक वक्ष्यते । अय रक्तेऽपि । यद्गौड —'कुमुद सितरक्ताब्जे' । कुमुदसमानाय कुमुदत्यस्ति । गर्दभ सौगन्धिककह्लारे । रक्त कोकनदम् । रक्तसन्ध्यकह्लारे । नील कुवलय इन्दीवरमित्यादि ॥ पद्मस्तु पुन्नपुंसको वक्ष्यते ॥ अघनाम अघ व्यसनेऽपि । कल्क रेफ न्यङ्क विन्ध्य पाप कल्मष रिष्ट किण्व शमल अणक अवम कौपीन रङ्कर याप्य भूणस अह् एनोऽपराधोऽपि इत्यादि ॥ पापकलुषादयस्त्वद्वत्वाश्रय-

अवयवे द्रव्य । तमोनामेति आकाशनाम । हृषीकनामेति इन्द्रियनाम । तेजोनीति सूर्यनाम्नी ओषधि, लोके पीलडनीति प्रसिद्धि । हृषीकेति पीकनाम अन्वद्रव्यम् । घुसृणनामेति केसरनाम । अतिविषायामिति लोके अतिविस । गोशीर्षमिति चन्दनम् । ज्योत्स्नेति चन्द्रोद्योत । शुक्तनामेति लोके काञ्जी तन्नाम । पूतिनिपुर्योरिति दुर्गन्धकठोरयो । श्रेयमिति शुक्रशब्द । परमसुभत्वात् नि श्रेयसमपि शुभमिति परमसुभत्वात् नि श्रेयसमपि मोक्षोऽपि शुभमुच्यत, तेन मोक्षनामानि । श्रेयमिति नि श्रेयसशब्द । शम्भावपीति शङ्करेऽपि । सितरक्ताब्जे इति श्वेतकमले रक्तकमले च ।

लिङ्गा ॥ गूथनाम, पुरीष अशुचि शकृत् शमल कीटमित्यादि ॥ गोमय छगण च–गोपुरीषम्, विट्विष्ठे स्त्रीलिङ्गे तूक्ते । वर्चस्कंगूथमलास्तु पुंनपुंसका वक्ष्यन्ते । उच्चारावस्करौ तु घञन्तत्वात्पुंसि ॥ जलनाम, जल सलिल कीलाल । क्षीरम्, मेघे तु तन्नामत्वात्पुंसि । शरम्, गुन्द्रायामयं रान्तत्वात्पुंसि । दधिसारत्राणयोस्तु पुंनपुंसको वक्ष्यते । अन्ध कूपीट व्योम तोय पुष्कर पानीय उदक दक क्षौद्रम् । 'क्षौद्रं मधुनि पानीये' । क वारि शम्बर घृत क्षुप नीर अम्बु जीवनीयमित्यादि ॥ 'घनरस'मिति माला । गौडस्तु 'घनरसोऽप्सु मोरटे । कर्पूरे सान्द्रनिर्यासे सम्यक्सिद्धरसे नरी'त्याह । वरुणस्य तु बाहुलकात्पुंस्त्वम् । यद्गौड –'पानीये याद्‌सा पत्यौ, वरणो वरुणद्रुमे' । अप्वारो स्त्रीत्वमुक्तम् ॥ अंशुकनाम, अंशुकम् चेलम्–नीचगर्हितयोस्त्वयमाश्रयलिङ्ग । चीर चीवर अम्बर वस्त्रम् । अयं विपणावपि इत्यादि ॥ क्षौमवस्त्रोष्णीषकर्पटाना तु पुंनपुंसकत्वं वक्ष्यते । अंशुकभेदोऽप्यंशुकम् । पौरशत अन्तरीय उत्तरीयम् । पटच्चरम्–अयं मालाया पुंस्काण्डे पठित । उत्तरमित्यादि । नक्तकरङ्कसिचयाना कौशेयवाचिनश्च पट्टशब्दस्य पुंस्त्वमुक्तम् । वाल्कफालकार्पासबादरकौशेयरौङ्कवअनाहतनिष्प्रवाणितत्रकादयस्तु गुणवृत्तित्वादाश्रयलिङ्गा ॥ दारुनाम काष्ठम् । काष्ठान्तत्वात्पूतिकाष्ठम्–सरलो देवदारुश्च द्रुमौ । शलिकम् इत्यादि ॥ कलिञ्ज च । यद्गौड –'क्लीबं कलिञ्ज सूक्ष्मं दारु यत्' । दारुशब्दस्य तु पुंनपुंसकत्वं वक्ष्यते । एधस्तु घञन्तत्वात्पुंस्येव । एधसस्तु सन्तत्वात्सिद्धम् । समिधस्तु रुयुक्तान्तत्वात्स्त्रीत्वम् ॥ मनोनाम, मन स्वान्त मानसमित्यादि ॥ बिलनाम, बिल रन्ध्र छिद्र विवर रोकम् । कुहरम्–अयं नागराजगह्वरयोरपि, यद्गौड –'कुहरं गह्वरे छिद्रनागराजविशेषयो' । शुषिरम्–अयं वाद्यभेदेऽपि बाहुलकान्नपुंसक । सरन्ध्रे त्वाश्रयलिङ्ग इत्यादि ॥ विवरादित्रयं दूषणेऽपि । यद्गौड –'गर्त्तदूषणयो क्लीबं विवर छिद्ररन्ध्रवत्' । सुरुङ्गायास्तु स्त्रीत्वमुक्तम् ॥ पिच्छनाम–पिच्छ पिञ्छ पत्रं छदन पत्त्रमित्यादि ॥ तनुरुहगरुद्वहास्तु पुंनपुंसका वक्ष्यन्ते ॥ धनुर्नाम, कालक कार्मुकम् । वेणौ तु कान्तत्वात्पुंसि । सर्वकर्मक्षमे त्वाश्रयलिङ्ग । कालपृष्ठ धनुः द्रुण शरासनमित्यादि ॥ धनुर्विशेषोऽपि धनु । ऐरावतम्–शाक धनु, शक्रगजे तु

गोमयमिति गोमयादयस्त्रय लोके छाण अथवा गोबर तन्नामानि । गुन्द्रायामिति मुञ्जे । अयमिति शरशब्द । दधिसार इति लोके दही रि थरि । मोरटे इति नवप्रसूवधेनो ससरात्रात्पर क्षीर मोरट उच्यते यत्र । सान्द्र इति घट्टल्म् । निर्यास इति रस । अयमिति चेलशब्द । अयमिति वस्त्रशब्द । विपणी इति हट्टे । पौरशतमिति वस्त्रविशेष । अन्तरीयमिति परिधान लोके पेटीया । उत्तरीयमिति प्रावरणम् लोके दुपटीप्रमुख कथ्यते । पटच्चरमिति जीर्णवस्त्रम् । अयमिति पटच्चरशब्द । उत्तरमिति उत्तरशब्देन उत्तरासग उच्यते । वाल्कमिति वल्कसम्बन्धि । फालमिति कौसुम्भवस्त्रम् । कार्पासबादरे इति कर्पासोत्पन्ने । कौशेयमिति कृमिकोशोत्थम् [ लोके पाट्ट लगडा ] । रौङ्कवमिति मृगरोमजम् । अनाहतनिष्प्रवाणितत्रका इति एते नवीनाम्बरवाचका । पूतिकाष्ठ सरलो देवदारुश्च द्रुमौ इति पूतिकाष्ठशब्देन सरलनामा द्रुमो देवदारुनामा द्रुमश्चोच्यते इत्यर्थ । अयमिति कुहरशब्द । नागराजगह्वरयोरिति सर्प्पे गुदायां च । विवरादित्रय   छिद्र रन्ध्र चेति   दोषे

पुंनपुंसको वक्ष्यते, त्रिपुटि तु वज्रान्तत्वात्स्त्रीत्वम् । अजकाव अजकव अजगव च-रुद्रधनु । 'मण्यादिभ्य' (७।२।४४) इति च । अजगवोऽस्त्रिविशारमलादणि आजगवमित्यन्ये । यत् पाठ 'धनुर्वेदस्याजगव पिनाकिकरगोचरम्' । 'अजगाव धनु शौरे'रि-त्यपि कश्चित् । आसेष्वासचापधनु पिनाककोदण्डगाण्डिवगाण्डीवाना पुंनपुंसकत्व वक्ष्यते ॥ दलनाम, किसलय पर्ण पलाशम् । शल्या त्वय बाहुल्यात्पुसि । यद्गौड —'पत्रे पलाश ना रक्ष शटीहरितर्किंशुके' । छदपत्रपल्लवदलाना पुंनपुंसकत्व वक्ष्यते ॥ तालुनाम, तालु काकुद इत्यादि ॥ हृन्नाम, हृत् हृदयम् । उर वक्ष इत्यादि ॥ वत्सस्तु पुंनपुंसको वक्ष्यते ॥ वोदकम् ॥ २ ॥

हलदु खसुखागुरुहिङ्गुरुचत्वचभेषजतुत्थकुसुम्भदशाम् ।
मरिचास्थिशिलाभवसूक्ष्मपकमलदान्तिकवल्कलसिक्थमधुधाम् ॥ ३ ॥

एतेषा नाम नपुंसकम् ॥ हलनाम गोदारम् गोदारकम् गोदारणम् । कृषम्—वे क्रकच-मित्यादि ॥ सीरहलौ तु पुंनपुंसकौ वक्ष्येते ॥ दु खनाम, दु खम् कष्टम् प्रगाढम् कृच्छ्रम् आभीलम् इत्यादि ॥ गुणवृत्तित्वे त्वमीषामाश्रयलिङ्गतैव । सुखदु खाविमौ मामौ । पीडा बाधाव्यथास्तु क्युरुान्तत्वेन स्त्रीलिङ्गा ॥ सुखनाम सुखम् शर्म शिवम् जोषम् उपजोषम् इत्यादि ॥ गुणवृत्तित्वे त्वाश्रयलिङ्गतैव । सुख सुखा सुखम् इत्यादि ॥ अगुरुनाम, कृमिजम् जोङ्गकम् कृमिगन्ध अनार्यजम् राजार्हमित्यादि ॥ अगुर्वंगरुलोहा पुंनपुंसका, वशिका तु स्त्रीनपुंसको वक्ष्यते ॥ हिङ्गुनाम सहस्रवेधि—अयमम्लवेतसे पुंसि । जतुकम् बाह्लिकम् बाह्लीकम् रामठम् । जरणम्—जीरणे तु णान्तत्वात्पुंसि । अत्युम भूतनाशनम् गूढगन्धम् इत्यादि ॥ हिङ्गोस्तु पुंनपुंसकत्व वक्ष्यते ॥ रुच ह्रीबेरम् । तन्नाम, रुचम् केशम् बालकम् वज्रम् । 'वज्र ह्रीरकदम्भोलिवालवामलकेषु च । वज्रा गुडूचिकाया स्यात्' । उदीच्यम् पिङ्गम् आचमनम् बर्हिषम् जलमित्यादि ॥ बालस्तु पुंनपुंसको वक्ष्यते ॥ त्वच गन्धविशेषस्तन्नाम—रोचम् चोचम् उत्कटम् भृङ्गम् शकटम् वराङ्गमित्यादि । त्वच स्त्रीत्वमुक्तम् ॥ भेषजनाम—भेषजम् शमनम् शल्यम् [illegible] मिषज्जि-तम् चिकित्सितम् इत्यादि ॥ औषधस्तु पुंनपुंसको वक्ष्[illegible] भेषजम् ।

व्योषम् त्रिकटुकम् अरुष्करम् भल्लातकम् त्रिफलकम् भूनिम्ब कैरातम् छिन्ना यवानी च,

इत्यथ । गाण्डिवगाण्डीवेत्येतौ अर्जुनधनुर्वाच-नामप्रसिद्धायां औषध्याम् । हरितमिति सहस्रवेधिशब्द । ह्रीबेरमिति लोके वाल्भो त्रिकटुकमिति लोके त्रिगड्ड । त्रिफलोच्यते । भूनीक भूनिंब इति लोके सारे च भूनिंबे भूस्तृणेऽपि च इति । भूनिंब

लशुनेऽतिविषायां च शुण्ठ्यामपि महौषधम्' । नागरम्—शुण्ठी राजकशेरु च कन्दः । मुस्तम् वांसकम्, कन्दविशेषे तु जिलिङ्गो वक्ष्यते इत्यादि ॥ हरीतक्यादयस्तु यथायोगमपवादविषयाः । गोबलीवर्दन्यायेनोक्तातिरिक्तभेषजसङ्ग्रहार्थमिदम् ॥ तुत्थं चक्षुष्यो द्रव्यविशेषस्तन्नाम—तुत्थम् खर्परीतुत्थम् कायोद्भवम् अमृतासङ्गम् शिखिग्रीवम् वितुन्नकम् मयूरकमित्यादि ॥ खर्परी तु स्त्रियामुक्ता नीली सूक्ष्मैलयोस्तु तुत्था शिंशपादित्वात् ॥ कुसुम्भनाम, बहिःशिखम् महारजनम् कमलोत्तरमित्यादि ॥ कुसुम्भस्य तु पुन्नपुंसकत्वं वक्ष्यते ॥ दृङ्नाम, अक्षि ईक्षणम् तारकम् अम्बकमित्यादि ॥ दृग्दृष्टी स्त्रीलिङ्गे उक्ते । नेत्रस्य तु पुन्नपुंसकत्वं वक्ष्यते ॥ मरिचनाम, 'मरिच वल्लिजं श्याम वेल्लजं कृष्णमूषणम् । यवनेष्टं द्वारवृत्तं कोलकं धर्मपत्तनम्' । मरीच च । अस्थिनाम—अस्थि कीकसमित्यादि ॥ कुल्यस्तु पुन्नपुंसकः ॥ शिलाभवं शैलेयं तन्नाम—शिलाभवम् शैलेयम् शैवलम् पलितम् वृद्धम् कालानुसार्यम् । स्थविरम् शिलापुष्पम् इत्यादि । शीतशिवं च ॥ यद्गौडः—'मधुर्यां च शीतशिवं छीबं शैलेयसैन्धवे' । सृक्कं ओष्ठपर्यन्तस्तन्नाम—सृक्क सृक्कणी सृक्विणी इत्यादि ॥ यकृत् दक्षिणपार्श्वे कृष्णमांसांशस्तन्नाम—यकृत् कालखण्डम् कालखञ्जम् इत्यादि ॥ नैलदनाम, नलदम्, सेव्यम्, लामज्जकम्, सुरालम्, अमृणालम्, लयम् लघु इष्टकापथम् शीघ्रम् दीर्घमूलम् जलाशयम् इत्यादि ॥ अन्तिकं समीपं तन्नाम, अन्तिकम् समीपम् उपकण्ठं निकटं समर्यादम् समासन्नम् नेदिष्ठम् पार्श्वम् उपान्तम् सवेशम् सविधम् अभ्यग्रम् सनीडम् सदेशम् अभ्यर्णं इत्यादि ॥ अभ्याशं च—तालव्योपान्त्योऽयम्, दन्त्योपान्त्यस्य तु बाहुलकात्पुंस्त्वम् । यद्गौडः—'अभ्यासस्तु समीपे स्यात्पुमानभ्यसनेऽपि च' । उपह्वरस्य तु पुन्नपुंसकत्वं वक्ष्यते ॥ वल्कलनाम, वल्कम्—कषायादौ तु पुन्नपुंसको वक्ष्यते । चीरं इत्यादि, वल्के त्वस्य तन्नामत्वादेव नपुंसकत्वम् । त्वच स्त्रीत्वमुक्तम्, वल्कवल्कलयोस्तु पुन्नपुंसकत्वं वक्ष्यते । सिध्मनाम, सिध्मम् किलासमित्यादि ॥ युन्नाम, 'युद्धम् द्वन्द्वम् जन्यम् मृधम् समीकम् प्रविदारणम् साम्परायिकम् आयोधनम् आक्रन्दनमित्यादि ॥ युधस्तु स्युत्का इति स्त्रीत्वम् । सर्वतो नपुंसकत्वम् । रणसङ्ख्यसम्परायशब्दानां तु पुन्नपुंसकत्वं वक्ष्यते ॥ तोटकम् ॥ ३ ॥

सौवीरस्थानकह्लारक्षौमधौतेयकाष्ठजाम् ।
लवणव्यञ्जनफलप्रक्षनद्रवता समित् ॥ ४ ॥

---

यदाहु 'रौहिषे श्यामकं पौरं भूतीकं भूरिकत्तृण'मित्यादीति । 'कत्तृणं रौहिषं फल्ह्येत्यनेकार्थः । धेति लोके विरहालीधान्यकं भूमिस्फोटो वा । यदाहु 'छत्रा मधुरिकौषधी । धान्याके च शिलिंध्रे चे'ति । मधुरिकौषधी विरहालीति प्रसिद्धायाम् । यवानीति लोके जवानि । यदाह 'यवानी दीपको दीप्यो यवासाह्वयवानकः' इत्यादीति । एते भूनिम्बाद्याः सर्वे भूतीकशब्दस्यार्थाः । अगस्त्यहरीतकीति हरीतकीविशेषः । अतिविषायामिति लोके अतिविस । वांसकमिति लोके अरडूसो । कन्दविशेषे इति मोथनाशि । चक्षुष्यो-द्रव्यविशेष इति लोके खापरीयभो शैलेयमिति लोके शिलाजित । मधुर्यामिति लोके मीहाली । शैलेयमिति शिलाजित । मै यवानाशि एवणे । ओष्ठपर्यन्तमिति ओष्ठप्रान्त । यकृत् दक्षिणपार्श्व कृष्णमांसांश इति । नैलदनामेति लोके खाषजड तन्नाम । वल्कलनामेति वृक्षछालिनाम । युन्नामेति युद्धनाम । सर्वतं इति

सौवीरादीनां लवणादीनां तु सभिन्नभेदमपि नाम नपुंसकम् । धान्यस्य सभेदस्याभिधानमपि सभेदमुक्तम् । सौवीरम्[2] सौवीराञ्जनं तन्नाम—सौवीरम् । नदरे तु फडागमत्वान्नैव सिद्धम् । मेचकम् कृष्णम् सुवीरजम् कापोतम् यामुनम् स्रोतोऽञ्जनमित्यादि ॥ स्थानकम् योद्धॄणां सस्थानविशेषस्तन्नाम—आलीढम्, प्रत्यालीढम्, समपादम् वैशाखम् मण्डलमित्यादि ॥ द्वारनाम—द्वारम् । उपायेऽपि बाहुल्यान्नपुंसकत्वम् । वरत्रम्—केदारे[3] स्वर्ऽस्य त्रिलिङ्ग वक्ष्यते । गोपुरम्—अय[4] पुरद्वारेऽपि । निःसरणमित्यादि ॥ द्वारस्तु[5] स्त्रीत्वमुक्तम् । प्रतीहारस्तु वक्ष्यन्तस्त्वात्पुंसि ॥ क्लोमसुवर्णो जलाधार हृदयस्य दक्षिणे वर्त्त क्लोम च । वामे प्लीहा पुप्फुसश्चेति हि वैद्या । तन्नाम—क्लोमम् । क्लोतोऽयमित्येके । क्लोम, क्लोमनी, तिलकमित्यादि ॥ धौतेयकं ग्रन्थिपर्णं तन्नाम—धौतेयकम्, बर्हम् गुच्छबर्हम्, ग्रन्थिपर्णम्[6], पुष्पम्, शुरम्, स्थौणेयम्, शुकुरम् । वर्हिचूडम् शुकपुच्छम् शुकच्छदम् विरचम्, हरितम्, जीर्णरोमक इत्यादि ॥ जीवदस्तु बाहुल्यात्पुंसि । यद्गौड —'ग्रन्थिपर्णे च पुंसि स्याद्वैद्ये शत्रौ च जीवद' । असृग्नाम[7]—असृग् कीलालम् तिग्मम् आत्मजम् अस्रजम् क्षतजम् रुधिरम् रक्तम् इत्यादि ॥ लवणभेदनाम—अक्षीवम्[8], सिन्धूत्थमाणिमन्थे[9] रौमकवसुके[10] अक्षरुचके, सौवर्चलसैन्धवयोस्तु पुन्नपुंसकत्व वक्ष्यते । बिडम्, पाक्यम्, औद्भिदमित्यादि[14] ॥ व्यञ्जनभेदनाम—दधि दुग्धम् आज्यम् उदश्वित् अरिष्टम् घोलम् कालशेयमित्यादि । गोरसस्य तु सान्तत्वात्पुंस्त्वम् ॥ फलनाम—प्रसूतम् बीजालयम् वृक्षोद्भव इत्यादि ॥ तद्भेदनाम—नालिकेर चैर्वंतम्[15] मातुलिङ्गम्[16] नर्पुसम्[17] चौक्षोक्षम्[18] घुण्टाकम्[19] नारङ्गकम् जम्बीरम् बदरम् पूगम् फद्लम् आम्रमित्यादि । फलस्य तु पुन्नपुंसकत्वम् । शैलाटुवैनौ[20] तु गुणवृत्तित्वादाश्रयलिङ्गौ ॥ प्रसूननाम[21]—प्रसूनम् प्रसूनकम् सूनम् प्रसूनम् फुल्लम् मधुजपुष्पम् । कुसुम पुन्नपुंसक वक्ष्यते । नेत्ररोगे त्वस्य[22] बाहुल्यान्नपुंसकत्वम् । यद्गौड —'दृग्रोगे कुसुमं पुष्पे फले च स्त्रीरजस्यपि' । सुमम् मणीवकम् । तद्भेदनाम[23]—चम्पक करवीरम् अशोकम् विचकिलम् रोध्रम् कुरुवकम् शिरीषम नीपमित्यादि ॥ अग्निसम्पर्के द्रवन्ति विलीयन्ते ये ते द्रवन्तो लोहादय । तद्भेदनाम—गिरिसारम् अश्मसारम् । एतौ पुन्यपीत्यमर । कालायस कृष्णम् तीक्ष्णम । पारशवस्य तु पुन्नपुंसकत्व वक्ष्यते । सीसक महानलम नागम् । वर्द्धस्य तु पुन्नपुंसकता वक्ष्यते । त्रपु वङ्गम् मधुकम् नागरङ्गम् ताम्रम्

छदस्य ॥ ३ ॥ वोच्यस्येति अथस्य । सौवीरमिति[2] लोके सुरमा नाम अञ्जन । केदारे[3] इति क्षेत्रे । अयेति[4] षडजशब्दस्य । अयमिति[5] गोपुरशब्द । द्वार[6] इति व्यञ्जनान्तद्वारशब्दस्य । ग्रन्थिपर्णमिति[7] लोके थूणिचमो तन्नाम । असृग्नामेति[8] लोके लोहा तन्नाम । अक्षीवमिति[9] समुद्रलवणम् । सिन्धूत्थमाणिमन्थे[10] इति नदीभवे लवणे । रौमकवसुके[11] इति रुमाकरोद्भवे लवणे । अक्षरुचके[12] इति सुवर्चलनामलवणे । बिड[13] पाक्यमिति कृत्रिम लवणम्, लोके बिडलूण । औद्भिदमिति[14] लोके मीठ । धन्वन्तरि 'औद्भिद पांसुलवण इत्यादीति । चैर्वतकमिति[15] हरीतकीफलम् । मातुलिङ्गमिति[16] बीजपूरफल । नर्पुसमिति[17] लोके तेडसी ककरी तत्फलम् । चौक्षोक्षमिति[18] लोके बहुणा । घुण्टाकमिति[19] रींगणीफलम् । शैलाटुरिति[20] अपक्वफलम् । वैनमिति शुष्क फलम् । प्रसूननामेति[21] फूलनाम । अस्येति[22] कुसुमशब्दस्य । तद्भेदनामेति[23] फुल

उदुम्बरम् वरिष्टम् उदुम्बरम्, त्रपुष्टम् शुल्वम् म्लेच्छमुखम् ताम्रम् दुर्वर्णम् रूप्यम् खर्जूरम् रूप्यम् कलधौतम् । रजतस्य तु पुंनपुंसकत्वं वक्ष्यते । कनकं जातरूपम् रुक्मम् हाटकम् गाङ्गेयम् गैरिकम् चरयाणम् चामीकरम् भूरि जाम्बूनदम् कार्तस्वरम् कर्बुरम् तपनीयम् । शातकौम्भम्, अँय कैरवीरे वरनामत्वात्पुंसि । कलधौतम् कर्पूरम् पेशम् रूपमपि । अँलङ्कारसुवर्णं तु शृङ्गीकनकम् । भर्महेम्नोर्मन्नन्तत्वादेव सिद्धम् । निष्कस्वर्णसुवर्णाष्टापदहेमहिरण्यचन्द्रास्तु पुंनपुंसका वक्ष्यन्ते । अवष्टम्भस्य तु घञन्तत्वात्पुंस्त्वम् । यद्गौड – 'सुवर्णे स्यादवष्टम्भ आरम्भस्तम्भयोरपि' । चाम्पेयस्य तु बाहुलकात् पुंस्त्वम् । यद्गौड – 'किञ्जल्के चम्पके स्वर्णे चाम्पेयो नागकेसरे' । प्रॉलेयं तुहिनम् । हिमतुषारनीहारशिशिरास्तु पुंनपुंसका वक्ष्यन्ते । अवश्यायस्तु यान्तत्वात्पुंसि ॥ जँतु मँधूच्छिष्टम् सिक्थमित्यादि । रीतिरीतौ स्त्रियामारकूट पुंनपुंसकयो पित्तला तु स्त्रीनपुंसकयोर्वक्ष्यते । आरस्तु पुंस्युक्त । मदनस्य तु बाहुलका पुंस्त्वम् । यद्गौड –'मदन सिक्थवसन्तकुँठमन्मथे' । इह पृथक् लवणग्रहणाद्ये जलसम्पर्काद्भवन्ति न तेषा परिग्रह । तेन न मृदोऽपि प्रसङ्ग' । नविपुलावृत्तम् ॥ ४ ॥

> पुर सद्माङ्गयोश्छत्रशीर्षयो' पुण्डरीकके ।
> मधु द्रवे, श्वुन शश्वत् तर्कयोः, खपुर घटे ॥ ५ ॥

' पुर सद्माङ्गयोः–सद्मनि अङ्गे च देहे वाच्ये पुरशब्दो नपुंसक । पुरम्–सद्म देहश्च । अन्त पुरमिति पुरान्तत्वात् । नगरे तु त्रिलिङ्गो वक्ष्यते । पाटलिपुत्रे तु पूर्नामत्वात्क्लीन । गुग्गुलौ तु निर्यासनामत्वात्पुंस्त्वम् ॥ छत्रशीर्षयोः पुण्डरीकके–पुण्डरीकशब्द कशब्दश्च यथासङ्ख्य छत्रे शीर्षे च शिरसि वाच्ये नपुंसक । पुण्डरीकम्–सित छत्रम् । अम्बुरुहे भेषजे च तन्नामत्वात्सिद्धम् । यदाह–'पुण्डरीक सिताम्भोजे सितच्छत्रे सुभेषजे । कोषँकारान्तरे व्याघ्रे पुण्डरीकोऽग्निदिग्गजे ॥ कम्–शीर्षम, सुखजलयोस्तु तन्नामत्वात्सिद्धम् । अन्यत्र तु देहादिनामत्वात् पुंस्त्वम् । यदाह–'को ब्रह्मात्मानिलार्केषु शमने सर्वनामनि । पावके च मयूरे च सुखशीर्षजलेषु कम्' ॥ मधु द्रवे–द्रवे द्रव(व ?)ति वस्तुनि वाच्ये मधुशब्दो नपुंसक । इद मधु मँकरन्द । क्षौद्रादिभेदभिन्न च । यदाहु –'माक्षिक तैलवर्णं स्याद्घृतवर्णं च पौत्तिकम् । भ्रामर तु भवेच्छुक्ल क्षौद्र तु कपिल भवेत्' इति नन्दी । माक्षिके पुंनपुंसक इति बुद्धिसागर । मद्ये तु पुंनपुंसकत्व वक्ष्यते । अन्यत्र तु वसन्ते चैत्रे मधूकवृक्षे दानवे चोदन्तत्वात्पुंस्त्वमेव । गौडस्तु–'क्षौद्रे पुष्परसे मद्ये मधु ना तु मधुद्रुमे । दैत्यचैत्रवसन्तेषु जीवाशाके च योषिति' इत्याह । श्वुन शश्वत्तर्कयोः–शश्वन्नित्य तस्मिन्

---

विशेषनाम । चिचविल्लमिति लोके केवडी । अँयमिति शातकाम्भशब्द । कँरवीरे इति कणवीरनाम्नि । अँलङ्कारसुवर्णमिति अलङ्काराय सुवर्ण अलङ्कारसुवर्णम् । प्राँलेयमिति लोके हीम । जँत्विति लाक्षा । मँधूच्छिष्टमिति लोके सद्रधू । ... । कुँठ इति राढनामा वृक्ष , लोके
यदाह 'मदन शल्यको राढ ' इति ... ॥ ४ ॥ कोषँकारान्तरे इति कृमिभेदे,

**धर्मं दानादिके**—दानादिके पुण्यस्योपाये दानयामादौ वाच्ये धर्मशब्दो नपुंसक । इद धर्मम् । 'तानि धर्माणि प्रथमान्यासन्' । अन्यत्र तु धर्म्म पुण्यम्, मान्तत्वात्पुंस्त्वम् । स्वभावे तु पुन्नपुंसको वक्ष्यते । लोकधर्मी नाट्यधर्मीति पारिभाषिको धर्मीशब्दोऽप्यस्ति ॥ **तुल्यभागेऽर्द्धम्**—तुल्यभागे समेऽशे वाच्येऽर्द्धशब्दो नपुंसक । अर्द्धं पिप्पल्या अर्द्धपिप्पली । तुल्यो भाग इत्यर्थ । अतुल्यभागे तु प्रतिपदपाठात्पुंस्त्वम् । अर्द्ध पटी । अर्द्धो नगरम् । ग्रामस्यार्द्धो ग्रामार्द्ध । एव नगरार्द्ध । अतएव 'समेऽशेऽर्द्धं नवा' ( ३।१।५४ ) इति अंशिसमासोऽपि न भवति । अन्ये त्वसमेऽशे आश्रयलिङ्गमेनमाहु । अर्द्ध पट । अर्द्धा शाटी । अर्द्धं वस्त्रम् । यट्टीका—खण्डमात्रवृत्तिताया त्वभिधेयलिङ्ग इति ॥ **ब्राह्मणं श्रुतौ**—श्रुतौ वेदविषये ब्राह्मणशब्दो नपुसक । ब्राह्मण वेदैकदेश । ब्राह्मणसहतौ तु समूहज इत्येव सिद्धम् । अन्यत्र तु यथाप्राप्तम् । 'विप्रे तु ब्राह्मणो वेदे ब्राह्मण द्विजसहतौ । ब्राह्मणी हिङ्गिकार्स्पृक्काद्विजपत्नीषु विश्रुता ॥ **न्याय्ये सारम्**—न्यायादनपेत न्याय्यम्, तस्मिन्वाच्ये सारशब्दो नपुसक । नैतत्सारम्—नैतन्न्याय्यमित्यर्थ । सार च तत्सद्वहश्च सारसद्वह । राज्ये सार वसुधा' । 'सार सारङ्गलोचना' । अनयोर्न्याय्यार्थत्वे न्याय्य नपुंसकत्वमन्यथा तु चिन्त्यम । नीरधनयोस्तु तन्नामत्वादेव सिद्धम् । अन्यत्र तु बले स्थिराङ्गे मज्ज्नि(ज्जि ?) च पद्मन्तरत्वात्पुंस्त्वम् । श्रेष्ठे तु गुणवृत्तित्वादाश्रयलिङ्ग । यदाह—'सारो बले मज्जनि च स्थिराङ्गे । न्याय्ये च नीरे च धने च सारम्' । श्रेष्ठेऽन्यवत् ॥ **पद्ममिभबिन्दौ**—गजबिन्दौ वाच्ये पद्मशब्दो नपुसक । पद्म गजबिन्दु । स्वार्थिके के पद्मक तदेव । दारौ तु तन्नामत्वात्सिद्धम् । अन्यत्र तु निधौ तन्नामत्वान्नागविशेषे देहितामत्वाद्व्यूहे तु मान्तत्वात्पुंस्त्वमेव । पङ्कजसङ्ख्याविशेषयोस्तु पुन्नपुंसको वक्ष्यते । लक्ष्म्या तु तन्नामत्वात्स्त्रीत्वम् ॥ **काममनुमतौ**—अनुमतावनुज्ञाया च कामशब्दो नपुसक । काम गच्छतु—अनुमतमेतदित्यर्थ । रेतोनिकामयोरपि कश्चित् । तदुपलक्षणात् निकाम प्रकाममित्यादौ तु अव्ययीभावत्वान्नपुसक । इच्छामदनयोरिन्द्रियभोग्ये च मान्तत्वात्पुंस्त्वम् । काममित्यव्ययमप्यस्ति । मविपुला ॥ ७ ॥

खल श्रुवि तथा लक्ष वेध्येऽह्नः सुदिनैकत ।
भूमोऽसङ्ख्यात एकार्थे पथः संख्याऽव्ययोत्तरः ॥ ८ ॥

---

इति मारीटा नामा वृक्ष ॥ ६ ॥ लोकधर्म्मी नाट्यधर्म्मीति लोकस्य धर्म्मी लोकधर्मी नाट्यस्य धर्म्मी नाट्यधर्म्मी स्त्रीलिङ्ग । यद्वाचस्पतिः 'नाट्यधर्म्मी तु स्त्रियाम्' । धर्म्मीत्यत्र गौरादित्वात् ङीमन्यपः । पारिभाषिक इति लोकचारात्साङ्केतिक । वेदैकदेश इति वेदावयव । ब्राह्मणसहतौ इति ब्राह्मणसमूहे । समूहज इत्येव सिद्धमिति 'ब्राह्मणमाणव०' (६।२।१६) इति सूत्रेण यप्रत्ययबाधक 'खाद्भ्योऽञ्' (६।२।२६) इत्यञ्प्रत्यये सिद्धम् । हिङ्गिकेति भारंगीनाम्नि ओषधि । स्पृक्केति लोके पीकनाम गन्धद्रव्यम् । न्याय्यमिति युक्तम् । वेदवेति गजबिन्दु । दारौ इति पद्माकनाम्नि काष्ठे । निकाम प्रकाममिति पर्याप्तं कामस्य निश्चितत्य प्रकृष्टस्य च । 'तिष्ठद्गित्यादय' (३।१।३६) इत्यव्ययीभावः । इन्द्रियप्र०

खल भुवि–भुवि वाच्यायां खलशब्दो नपुंसकः । इदं खलम् भूः । यद्गौडः–'खलं भूस्थानकल्केषु नीचे क्रूरेऽधमे त्रिषु' । अन्यत्र तु पिण्याके, दुर्जने च पुंनपुंसकः । स्थाने तु त्रिलिङ्गो वक्ष्यते ॥ तथा लक्षं वेध्ये–वेध्ये वाच्ये लक्षशब्दो नपुंसकः । लक्षं वेध्यम् । व्याजे पुंनपुंसकः, सङ्ख्यायां स्त्रीनपुंसको वक्ष्यते ॥ अहः सुदिनैकतः–सुदिन-एक इत्येताभ्यां परः अह इति कृतसमासान्तोऽहन्शब्दो नपुंसकः । 'अह्नर्निर्यूहकलहाः' इति पुंस्त्वापवादः । सुदिनं च तदहश्च सुदिनाहम् ॥ सुदिनशब्दः शोभनवाची । यथा सुदिनासु सभासु कार्यमेतत् । एकमेवाहम् । सुदिनैकत इति किम् ? अयं परमाहः, अयमुत्तमाहः । पुण्यात्परस्तु नयः पुंनपुंसको वक्ष्यते ॥ भूमोऽसङ्ख्यात एकार्थे–भूम इति 'सङ्ख्यापाण्डूदक्कृष्णाद्भूमेः' (७।३।७८) इति कृतसमासान्तो भूमिशब्दः, स सङ्ख्याया अन्येभ्यः पाण्डूदक्कृष्णेभ्यः परः एकार्थे कर्मधारये वर्तमानो नपुंसकः । पाण्डुर्भूमिः पाण्डुभूमम्, उदीची भूमिः उदग्भूमम्, कृष्णा भूमिः कृष्णभूमम् । असङ्ख्यात इति किम् ? द्वयोर्भूम्योः समाहारो द्विभूमः त्रिभूमः अन्यस्तु सर्वो नपुंसकः इत्येव नपुंसकत्वम् । एकार्थ इति किम् ? पाण्डुर्भूमिर्यत्र स पाण्डुभूमो देशः । एवं उदग्भूमः कृष्णभूमः । बहुव्रीहावाश्रयलिङ्गतैव ॥ पथः सङ्ख्याव्ययोत्तरः–सङ्ख्यावाचिनोऽव्ययाच्चोत्तरः उत्तरपदभूतः पथ इति पथिन्शब्दः 'ऋक्पूःपथ्यपोऽत्' (७।३।७६) इति कृतसमासान्तः पथशब्दो वा नपुंसकः । द्वयोः पन्थाः द्वयोरवयवः पन्था इति वा तत्पुरुषकर्मधारययोः । द्विपथम्, एवं त्रिपथम् । द्वयोः पथोः समाहारो द्विपथम् त्रिपथमित्यादौ तु समाहारद्विगावन्यस्तु सर्वो नपुंसक इत्येव नपुंसकत्वम् ॥ अव्ययादपि, विगतः पन्था विपथम् । उद्गतः पन्था उत्पथम् । उच्चैः पन्था उच्चैःपथम् । कुत्सितः पन्था कापथम् । विपथकापथयोः पुंस्त्वमित्यमरसिंहः । गौडश्च 'व्यध्वो[10] विपथकापथौ' । पथोऽभावोऽपथमित्यव्ययीभावे तु द्वन्द्वैकत्वाव्ययीभावावित्येव नपुंसकत्वम् । द्वाभ्यां पथिभ्यां क्रीतः द्विपथः कम्बलः । द्विपथा वडवा इत्यादि तद्धितद्विगौ । द्वौ पन्थानौ यस्याः सा द्विपथा चतुष्पथा नगरीत्यादि बहुव्रीहौ । उद्गता पन्थानमुत्पथा वडवेत्यादि पूर्वपदार्थप्रधानतत्पुरुषे त्वाश्रयलिङ्गतैव । सङ्ख्याव्ययोत्तर इति किम् ? पथः परमपथः उच्चैःपथः । केवलोऽपि विना समासान्तेनौणादिकः पथशब्दोऽस्ति । 'पथे गतौ' इत्यस्य वाऽचि रूपम् । यद्वा जले पन्थाः समासान्तेऽविकल्पः । स्थलपथः । पथ

भोग्ये इति शब्दादौ ॥ ७ ॥ भूरिति शुद्धा अथ शष्पाद्यपनयनेन संस्कृता भूमिः । स्थानमिति धान्यनिष्पवनक्षेत्रम् । कल्कमिति द्विष्टेऽह द्रव्यं किट्टमित्यर्थः । पिण्याके इति लोके खलिः । वेध्यमिति लोके वेसा । सुदिनाहमिति प्रधानं दिनमित्यर्थः 'अह्नः' (७।३।११६) इति सूत्रेण अट् । असङ्ख्यात इति किमिति ननु यदि सङ्ख्या पूर्वस्यापि क्लीबत्वं तर्हि व्यावृत्तिर्व्यर्था । एवं तर्हि एका चासौ भूमिश्चैकभूमम् इत्यादौ क्लीबत्वं मा भूदिति व्यावृत्तेर्मुख्यं फलम् । कर्मधारय इति मध्यमपदलोपी कर्मधारयः । व्यध्व इति विगतोऽध्वा व्यध्वः 'उपसर्गादध्वनः' (७।३।७९) इत्यसमासान्तः । द्विपथ इत्यत्र 'ऋक्पूःपथ्यपोऽत्' (७।३।७६) इत्यत् । 'मूल्यैः क्रीते' (६।४।१५०) इतीकण्, 'अनाम्न्यद्विः प्लुप्' (६।४।१४१) इतीकणो लुप् । पथ इति अकारान्तः पथशब्दः ॥ ८ ॥ सुखदुःखमिति सुखं च [illegible] च सुखदुःखे एव

इति किम् ? शोभनः पन्थाः सुपन्था –'पूजास्वते प्राक्टात्' ( ७।३।७२ ) इति समासान्तप्रतिषेधः । अपन्थाः–'नञ्तत्पुरुषात्' ( ७।३।७१ ) इति समासान्तप्रतिषेधः । अपथमित्यत्र तु नञा निर्दिष्टस्यानित्यत्वाद्भवत्यपि समासान्तः । यदुक्तं–'अपन्थास्त्वपथं समम्' । पथ्यादिकम् ॥ ८ ॥

द्वन्द्वैकत्वाव्ययीभावौ, क्रियाव्ययविशेषणे ।
कृत्याः क्तानाः खल् त्रिन् भावे त्वताच्चादिः समूहजः ॥ ९ ॥

द्वन्द्वैकत्वाव्ययीभावौ–द्वन्द्वस्यैकत्वं समाहारोऽव्ययीभावश्च समासो नपुंसकः । द्वन्द्वैकत्वम्–सुखदुःखम् अश्ववडवम् गोमहिषम् दधिघृतम् न्यग्रोधम् हस्त्यश्वम् बदरामलकम् आराशस्त्रि पाणिपादम् उद्गात्कठकालापम् अर्काश्वमेधम् पदकक्रमकम् अहिनकुलम् गङ्गाशोणम् तक्षायस्कारम् गवाश्वम् । द्वन्द्वेति किम् ? प्लक्षाः । एकत्वेति किम् ? सुखदुःखाविमौ । अव्ययीभावः खल्वपि–दण्डादण्डि, तूष्णींगङ्गः देशः, पञ्चनदम्, द्विमुनि व्याकरणस्य, पारेगङ्गम्, यावदमत्रमतिथीनामन्त्रयस्व, परित्रिगर्त्तम् वृष्टो मेघः, अभ्यग्नि शलभाः पतन्ति, अनुगङ्गं वाराणसी, अनुवनमशनिर्गता, इह तिष्ठद्गु कालः, सूपप्रति, एकपरि, अधिस्त्रि, अनुरूपम् । परवल्लिङ्गत्वे प्राप्ते द्वन्द्वैकत्ववचनम्, पूर्वान्यपदा-

---

र्थेऽपि यथायथमर्थः । पदकक्रमकमिति पदं वेत्त्यधीते वा पदकः । क्रमं वेत्त्यधीते वा क्रमकः 'पदक्रमशिक्षामीमांसासाम्नोऽकः' ( ६।२।१२६ ) इत्यकः । पदकश्च क्रमकश्च पदकक्रमकम् । सुखदुःखाविमौ ग्रामौ इति सुखयतः ग्रामो दुःखयतः ग्रामश्चेत्यर्थः । अव्ययीभावः खल्वपीति–अव्ययीभावो यथा दण्डादण्डीति दण्डैश्च दण्डैश्च मिथः प्रहृत्य कृतं युद्धं दण्डादण्डि 'तत्रादाय मिथस्तेन प्रहृत्येति सरूपेण युद्धेऽव्ययीभावः' ( ३।१।२६ ) इति अव्ययीभावः । तूष्णींगङ्गः देश इति तूष्णीं स्थिता गङ्गा यत्र स तूष्णींगङ्ग इति नाम्ना देशः 'नदीभिर्नाम्नि' ( ३।१।२७ ) इति अव्ययीभावः । पञ्चनदमिति पञ्चानां नदीनां समाहारः पञ्चनदम् 'सङ्ख्याया नदीगोदावरीभ्याम्' ( ७।३।९१ ) इत्यत्समासान्तः प्रत्ययः 'सङ्ख्या समाहारे' ( ३।१।२८ ) इति अव्ययीभावः । द्विमुनि व्याकरणस्येति–द्वौ मुनी यस्यां व्याकरणस्य द्विमुनि व्याकरणस्य पाणिनिवररुची व्याकरणस्य कर्त्तारौ इत्यर्थः; 'वंश्येन पूर्वार्थे' ( ३।१।२९ ) इत्यव्ययीभावः । पारेगङ्गमिति पारं गङ्गायाः पारेगङ्गं, गङ्गायाः परतटमित्यर्थः 'पारेमध्येऽग्रेऽन्तः षष्ठ्या वा' ( ३।१।३० ) इत्यव्ययीभावः । यावदमत्रमतिथीनामन्त्रयस्वेति यावन्ति अमत्राणि यावदमत्रं अतिथीन् आमन्त्रयस्व यावन्त्यमत्राणीति अज्ञातपरिमाणेन अमत्रादिना तावन्त इत्यतिथिपरिमाणमिहावधार्यते इति 'यावदियत्त्वे' ( ३।१।३१ ) इति अव्ययीभावः । परित्रिगर्त्तमिति परि त्रिगर्त्तेभ्यः परित्रिगर्त्तम्, परित्रिगर्त्तान् देशान् वर्जयित्वेत्यर्थः 'पर्यपाङ्बहिरच् पञ्चम्या' ( ३।१।३२ ) इत्यव्ययीभावः । अभ्यग्नि शलभाः पतन्तीति अभि अग्नि अभ्यग्नि, अग्निं लक्षीकृत्य अभिमुखं पतन्तीत्यर्थः 'लक्षणेनाभिप्रत्याभिमुख्ये' ( ३।१।३३ ) इत्यव्ययीभावः । अनुगङ्गं वाराणसीति अनुगङ्गा दीर्घा अनुगङ्गं, गङ्गाया लक्षणभूताया आयामेन वाराणस्या आयामो लक्ष्यते इत्यर्थः 'दैर्घ्येऽनु' ( ३।१।३४ ) इत्यव्ययीभावः । अनुवनमिति अनु वनस्य अनुवनं वनसमीपे इत्यर्थः 'समीपे' ( ३।१।३५ ) इत्यव्ययीभावः । तिष्ठद्गु इति तिष्ठन्ति गावो यस्मिन् काले गमनकालाय दोहाय घासेभ्यो निवासाय जलपानार्थं वा स कालः तिष्ठद्गु 'तिष्ठद्ग्वित्यादयः' ( ३।१।३६ ) इत्यव्ययीभावः । सूपप्रतीति सूपस्य मात्रा सूपप्रति अहितस्य अल्पत्वमित्यर्थः 'नित्यं प्रतिनाल्पे' ( ३।१।३७ ) इत्यव्ययीभावः । एकपरीति एकेन अक्षेण शलाकया वा न तथा वृत्तं यथा पूर्वं जये इति एकपरि अक्षेण शलाकया वा एवं न पतितं यथाह पूर्वं जये इत्यर्थः 'सङ्ख्याक्षशलाकं परिणा द्यूतेऽन्यथावृत्तौ'

धर्मप्राधान्येनालिङ्गत्वे विशेष्यलिङ्गत्वे च प्राप्तेऽव्ययीभाववचनम् । ननु पूर्वपदार्थत्वे सात्र-काशोऽव्ययीभाव इत्यन्यपदार्थत्वे पैरत्वादाश्रयलिङ्गता प्राप्नोति । सत्य बाहुल्यान्न भवति ॥ क्रियाव्ययविशेषणे-क्रियाया अव्ययस्य च यत्समानाधिकरणं विशेषणं तद्वाचि नाम नपुंसकम् । साधु पचति । मृदु धावति । एवं दीर्घसत्वरत्वरितक्षिप्रमीदृग-द्रुततूर्णविलम्बितसततानारतमाभान्तानवरतानिशाजस्रमन्दसुलभानल्पाभिरामोऽशर्ध्वमिरमन्दप्रकान्तनितान्तबाढगाढदृढादयो द्रष्टव्याः । गुणवृत्तित्वे त्वाश्रयलिङ्गा ॥ अव्ययविशेषणम्-प्रापमणीयम् दिग्देशः कालो वा । रम्यमुदक् प्रत्यगित्यादि ॥ धैनयोरपि 'अधणतस्वि-' (१।१।३२) सव्ययत्वम् । अन्यथाभावे त्वाश्रयलिङ्गत्वमेव । यदाह-'दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगव्ययम् । प्राच्योदीच्यप्रतीच्यानां वाचकं स्यादनव्ययम्' ॥ क्रियाव्यययोरस-त्त्वात्तद्विशेषणानामौत्सर्गिकमेकवचनमेव ॥ कृत्याः क्तानाः खल् त्रिन्भावे-भावे विहिता ये कृत्याः क्तानाः खल् त्रिन् च तदन्तं नाम नपुंसकम् । कृत्य. देवदत्तेन कार्यम्, पाक्यं कर्तव्यम् करणीयम् देयम् । ब्रह्मभूय वर्तते ब्रह्मत्वमित्यर्थः । कृत्यम् । भव्यम् ब्रह्मत्वाभिधि-त्सेत्यादि 'हत्याभूयं भावे' (५।१।३६) इत्यादि निपातनात्सिद्धम् । क्तानाः इति अल्पेगढ्ढ-वचननिर्देशात् क्त अनट् अन गृह्यन्ते । क्त-शयितम् छात्र । क्षुत डिम्भ । निरुक्तं ग्रन्थ-विशेष । छात्रेण हसितम् । राज्ञा मतम् । मयूरस्य नृत्तम् । प्रडीनम् उड्डीनम् सण्डीनम् विडीनम् । एता खगगतिक्रिया । आनेति यानानयोरस्पष्टानुबन्धयोर्ग्रहणम् । पेचान चैत्रेण । भूयमानं भविष्यमाणं वा देवदत्तेन । अनट्-निर्वाणम् 'निर्वाण निर्वृतौ मोक्षे ऽस्तगमे गजमज्जने' । निर्यातनं वैरशुद्धि । दानम्-न्यासार्पणम् ऋणादिशोधनं च । उल्लसन रोमाञ्च । परिभाषणम्-आलाप नियम निन्दात्मकश्चोपालम्भ । धर्पणम्-परिभव रत च । भावादन्यत्र धर्षणी कुलटा-योनिमनामत्वात्स्त्रीत्वम् ॥ संसरणम्-आगवजवीभाव, संसार इत्यर्थ । असम्बाधचमूगति पुरः समीपे विश्राममूश्च घण्टापथास्या ॥ समुद्धरणं ऊर्ध्व-नयनम्, वान्तान्न च । गन्धनम्-उत्साहना, हिंसायै सूचना, प्रकाशना च । आवक्ष्णं हुतस्य सुवर्णादेर्द्रव्यान्तरेणावचूर्णनम्, आप्यायनं च । उत्थानम्-पौरुषम्, सैन्यम्, उद्गमनम्,

---

(३।१।१८) इत्यव्ययीभाव । अधिस्त्रीति स्त्रिया अधिकृत्य वर्तमानेति अधिस्त्रि 'विभक्तिसमीप०' (३।१।३९) इत्यादिसूत्रेणाऽव्ययीभाव । अनुरूपमिति रूपस्य योग्यं अनुरूपम्, रूपस्य योग्यता 'योग्यतावीप्सार्थानतिवृत्तिसादृश्ये' (३।१।४०) इत्यव्ययीभाव । पूर्वोऽन्यपदार्थप्राधान्येनालिङ्गत्वे विशेष्यलिङ्गत्वे चेति-पूर्वपदार्थप्राधान्येन अलिङ्गत्वे अन्यपदार्थप्राधान्येन च विशेष्यलिङ्गत्वे इत्यर्थः । परत्वादिति गुणवृत्तित्वात् [ अपरत्वात् ? ] कृत्या इति 'तव्यानीयौ स्वरात्र (यश्च ?) तथान्यौ क्यप्घ्यणौ वपि । पञ्चैव सम्मता कृत्या हेमसूरिमहामुने' । इति वचनात् तव्यानीययक्यप्घ्यण् इत्यते प्रत्यया कृत्या उच्यन्ते इत्यर्थ । पेचान चैत्रेणेति चैत्रेण पेचे पक्वमित्यर्थ । निन्दात्मकश्चोपालम्भ इति निन्दारूप उपालम्भ, लोके ओलभओ । धर्षणीति इह रम्यादित्वादनट् । आजवजवीभाव आगतगतीभाव आकलकरीभाव इति पर्याया संसारस्य । असम्बाधचमूगतिरिति असङ्कटसेनागमनम् । उत्साहनेति उद्यम । हिंसायै सूचनेति हिंसार्थ परदोषोद्घाटनम् । प्रकाशनेति प्रकटम् । हुतस्येति गालितस्य । अवचूर्णनमिति मिश्रीकरणम् । आप्यायनमिति प्रीणनम् । पौरुषमिति शौर्यम् । उद्गमनमिति ऊर्ध्वं

मैलोत्सर्गं, चैत्यगृहम्, धौत्त्वन्तश्च । व्युत्थानं प्रतिरोधः, स्वातन्त्र्यकृत्यं विरोधाचरणम्, समाधिनिवृत्तिश्च । प्रज्ञानम्-बुद्धिः चिह्नं च । संस्थानम्-संनिवेशः चतुष्पथ आकृतिः मृत्युश्च । आराधनम्-तोषणम् साधनम् अवाप्तिश्च । आच्छादनम्-सम्पिधानम् अपवारणम् वस्त्रं च । अधिष्ठानम्-रथाङ्गम् पुरम् प्रभावः अध्यासनं च । देवनम्-परिदेवनम् द्यूतम् विजिगीषादि चेष्टादि ॥ अन. ईषत्पानः गैत्रेण ॥ खल्, दुर्भवं देवदत्तेन । दुराढ्य भवं मैत्रेण ॥ जिन् समन्ताद्रावः सारावेण वर्त्तते । एवं साङ्कोटिन वर्त्तते । 'नित्यं समिनोऽण्' (७।३।५८) इत्यण् । भाव इत्येव कृते प्रश्न निश्च पाक आदि. इञिरित्यादावपि भावे परत्वान्नपुंसकत्वं स्यात् । ननणानित्यादि हि पुंस्त्वविधायकं स्युक्ता इति च स्त्रीत्वविधायकमकर्त्तरि सावकाशमिति लिङ्गत्वात्स्त्रीत्वं मा भूदिति खल्ग्रहणम् ॥ भाव इति किम् ? कार्यः घटः, कार्या शाटी । कृतः कटः, कृता शाटी । पेचानो जनः, पेचाना सेना । पचमाना स्थाली, पक्ष्यमाणो जनः, पक्ष्यमाणा स्थाली । पलाशशातनो दण्डः । गोदोहनी पात्री । दुष्पानो मण्डः । दुष्पाना यवागूः । दुष्करः कटः । दुष्करा शाटी । सुपटङ्करास्तन्त्वम् । सुपटङ्करा सूत्रं इति कर्माणि यथायथं लिङ्गान्तरमपि प्रतिपद्यन्ते ॥ 'आत्वात् स्वादिः' 'भावे त्वतल्' (७।१।५५) इतिरप्रत्ययात्प्रारभ्य 'ब्रह्मणस्त्व' (७।१।७७) इति त्वममिव्याप्य ये प्रत्ययाः त्व-य एयण्-अञ्-अण् अकञ्-ईयत्वरूपास्तदन्तं नाम नपुंसकलिङ्गम् । त्व. तैदात्वं तैत्काल । शुक्लत्वं शौक्ल्यम् ॥ तल स्त्रीत्वम्, इमनश्च पुंस्त्वमुक्तम्, ट्यण् तु बहुलं स्त्रीनपुंसको वक्ष्यते । य. सख्यं मैत्री । स्तेयं चौर्यम् । यणिश्च तु स्त्रीनपुंसकं वक्ष्यते । एयण्. कापेयं कपे क्रीडादिकम् । अञ्. द्वैपं द्वीपिनो जातिः कर्म च । अण्. चापलं चपलता । द्वैहायनं द्विहायनता । वैमवं विनादः । लाघवं लघुता । पौरुषं पुरुषकारः । हार्दं हृदयत्वम् । श्रौत्रं श्रोत्रयिता । अकञ्. आचार्यकम् आचार्यता, चोरादिभ्योऽकञः स्त्रीनपुंसकत्वं वक्ष्यते, लिङ्गस्तु स्त्रीत्वमुक्तमेव । ईय. होत्रीयं मैत्रावरुणीयम् । त्व. ब्रह्मत्वमित्यादि ॥ समूहजः-समूहे जाता ये प्रत्यया (६।२।९-२९) अण् अकञ्-ण्य-इकण्-य-ईय-ष्ण्-ईन अञ्-एयञ्रूपास्तदन्तं नाम नपुंसकलिङ्गम् । अण्. याचम् भैक्षम् । अकञ्. औपगवकम् । ण्य. कैदार्यम्, गाणिक्यम् । इकण्. कावचिकम् । य. ब्राह्मण्यम् । ईय. अश्वीयम्, अश्वहिते स्वाश्रयलिङ्गः । ष्ण्. पार्श्वम् । अञ्. शौवम् । एयञ्. पौरुषेयम् । गौडस्तु-'पुंसो वधे समूहे च पौरुषेयं पदान्तरे । वाच्यवत्पुरुषकृते

---

भवनम् । मैलोत्सर्ग इति पुरीषोत्सर्गः । चैत्यगृहमिति लोके देहरओ । धौत्त्वन्त इति धातोर्गृहस्यान्तो विनाशो वास्तवन्तः । प्रतिरोध इति निवारणम् । स्वातन्त्र्यकृत्यमिति स्वैरवृत्तिः । समाधिनिवृत्तिरिति योगादुपरतिः । संनिवेश इति सैन्यरचना । अपवारणमिति निवारणम् । अध्यासनमिति आश्रयणम् । [10] परिदेवनमिति विलापः । सुपटङ्करा इति सुखेन अपटः पटः क्रियते एभिरिति सुपटङ्कराः । सुपटङ्करेति सुखेन अपटो पटः क्रियतेऽनयेति सुपटङ्करा । यथायथमिति यथास्वम्, यदाह । 'यथास्वे यथायथम्' । तैदात्वमिति तदा इत्येतस्य भावः तदात्वम् । तैत्काल इति लोके तिवारइज । पदान्तरे इति पदादन्य

विकारे पुरुषस्य च' इत्यादि इत्यादि ॥ पृष्ठ्याहीनयोस्तु भगवनामत्वात्पुंस्त्वमेव । पृष्ठ्यानामह्ना च समूहः पृष्ठ्यः, अहीनश्च क्रतुः ॥ मनिपुला ॥ ९ ॥

गायत्र्याद्यण् स्वार्थेऽव्यक्तमथानञ्कर्मधारयः ।
तत्पुरुषो बहूनां चेच्छाया शाला विना सभा ॥ १० ॥

गायत्र्याद्यण्स्वार्थे । स्वार्थे योऽण्तदन्तानि गायत्र्यादीनि छन्दोनामानि नपुंसकानि । गायत्र्येव गायत्रम् । एवमानुष्टुभम्, त्रैष्टुभम्, जागतम् ॥ अव्यक्तम्–अविशिष्टलिङ्गवाचि नाम नपुंसकम् । किं तस्या गर्भे जातम् ? यत्तत्रोत्पद्यते ग्रामे तदानेयम् । इमानि गोरूपाणि–ऽगावो बलीवर्दाश्च समेता उच्यन्ते । ईदं च शिष्टप्रयुक्तेष्वेव द्रष्टव्यम् । न पुनः सर्वत्र ईष्टानिष्टसामान्यवाची नपुंसकं प्रयोक्तव्यः । तेन गोशिशुसिन्धुप्रभृतीनां यथाभिहितमेव लिङ्गम् ॥ अथानञ्कर्मधारयस्तत्पुरुषः । अधिकारोऽयम् । 'गृहतः स्थूणे'ति यावत् । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र नञ्समासं कर्मधारयं च वर्जयित्वा योऽन्यस्तत्पुरुषः स नपुंसकं भवतीत्यधिकृतं वेदितव्यम् । अथेत्यधिकारार्थः । नञ्मात्रस्य तत्पुरुषत्वाभावान्- ञिति नञ्समासोपलक्षणम् । तत्पुरुष इति सामान्यधर्मापेक्षया नञ्–कर्मधारययोस्तुल्या धिकरणत्वोपपत्तिः, कर्मधारयं कृत्वा नञ्समासः बहुव्रीहिर्वा । बहुव्रीहौ च परमसमे स्यादौ व्यपदेशिवद्भावात्तत्पुरुषस्य कर्मधारयत्वम् । द्वन्द्वगर्भो वा नञ्बहुव्रीहिः ॥ बहूनां चेच्छाया । छायान्तस्तत्पुरुषो नपुंसकः । सा चेच्छाया येषां बहूनां समुदितानां छाया सम्भवति तेषां सम्बन्धिनी भवति । शलभानां छाया शलभच्छायम्, धनुश्छायम्, गृध्रच्छायम्, शरच्छायम् । बहूनामिति किम् ? कुड्यस्य छाया कुड्यच्छायम्, कुड्य- च्छाया । तत्पुरुष इत्येव–बहुछायो दिवसः । सेनाशालासुराछायानिशं वेति विकल्पे प्राप्ते नित्यार्थं वचनम् । परवल्लिङ्गापवादः प्रकरणम् ॥ शाला विना सभा–शालां मुक्त्वाऽन्य- ग्रार्थे यो वर्त्तते सभाशब्दस्तदन्तस्तत्पुरुषो नपुंसकः–स्त्रीसभम्, दासीसभम्, मनुष्यस- भम् । स्त्रीदासीनृसमूह इत्यर्थः ॥ शाला विनेति किम् ? अनाथसभा अनाथशालेत्यर्थः ॥ तत्पुरुष इत्येव । परमसभो राजा । सभा ॥ अनञ्कर्मधारय इत्येव । असभा, परमसभा । सभाया उत्तरपदत्वविधानादिह न भवति । स्त्रीणां परमसभा स्त्रीपरमसभा । एवमुत्तर- त्रापि । चौराणां परमनिशा चौरपरमनिशा ॥ मविपुला ॥ १० ॥

राजवर्जितराजार्थराक्षसादेः परापि च ।
आद्याद्युपक्रमोपज्ञे कन्थोशीनरनामनि ॥ ११ ॥

राजवर्जितराजार्थराक्षसादेः परापि च । सभेति वर्त्तते । राजार्थाः ऐश्वर्यवचना ईश्वरादयः । राक्षसादयो रक्षःपिशाचान्यः । प्राणिनो मनुष्याः । राजशब्दवर्जितेभ्यो

---

किम् धाक्षे । दृष्टानामिनि इह पृष्ठशब्दोऽह पर्यायो रथ्यवरादिसामपर्याय इत्यन्ये ॥ ९ ॥ समेता इति मिलिता एकत्रभूता इत्यर्थः । ईदमिति अव्यक्तलिङ्गम् । इष्टानिष्टेति यत्र स्त्रीगवीत्यादि इष्ट तदा पुंव त्त्वादिष्ट स्यादिति । सामान्यधर्मापेक्षयेति तत्पुरुषो हि भवन् मञ्तत्पुरुषरूपः कर्मधारयरूपोऽन्यो

राजार्थेभ्यो राक्षसादिभ्यश्च परा या सभा तदन्तस्तत्पुरुषो नपुंसक॰ । शालार्थ आरम्भ । इनसभ ईश्वरसभम्, स्वामिसभम्, नृपतिसभम्, राक्षससभम्, रक्ष सभम्, पिशाचसभम्, तद्गृह तत्सघो वा इत्यर्थ । नृपतिसभामगमदिति तु नाहुलकात् । राजयार्जितेति किम् ? राजसभा । समूहार्थस्य तु पूर्वेण भवत्येव । राजसभम् । राजार्थराक्षसादेरिति किम् ? नरसभा, क्षत्रियसभा, युधिष्ठिरसभा, जगत्तुङ्गसभा, काष्ठसभा, इष्टकासभा ॥ आद्यावुपक्रमोपज्ञे । उपक्रम उपज्ञा इत्येतदन्तस्तत्पुरुषो नपुंसक । आद्ये—उपक्रमस्योपज्ञानस्य च प्राथम्ये विवक्षिते, ततोऽस्य प्रथम प्रवृत्तिरित्येतस्या विवक्षायामित्यर्थ । श्रेयासस्य उपक्रम श्रेयासोपक्रम दानम्, श्रेयासेन श्रेयसे प्रथम प्रवर्त्तितमित्यर्थ । आदिदेवस्योपज्ञा आदिदेवोपज्ञ धर्माधर्मव्यवस्था, आदिदेवेन प्रथम ज्ञात्वा प्रवर्त्तिता इत्यर्थ ॥ उपक्रम्यत इत्युपक्रम. । उपज्ञायत इत्युपज्ञा कर्मणि घञङावित्यनुप्रयोगेण सामानाधिकरण्यम् । भावेऽपि विषयविषयिणोरभेदनिर्देशात् । भेदे तु षष्ठी सप्तमी वाऽनुप्रयोगे भवति ॥ आद्याविति किम् ? चैत्रोपक्रम प्रासाद । मैत्रोपज्ञो रथ ॥ कन्थोशीनरनामनि । कन्थातस्तत्पुरुषो नपुंसक । उशीनरेषु नाम्नि सज्ञायाम् । उशीनरा नाम जनपद । तत्र चेत्स कन्थान्तस्तत्पुरुष कस्यचित्सज्ञात्वेन वर्त्तते । नाम्नीति नामसामान्य विशेषस्याधारतया विवक्ष्यते । नाम्नोऽथद्वारेणोशीनरा आधार इति उशीनरेषु नामेति विग्रहे सप्तमी । सौसमीना कन्था सौसमीकन्थम् । आह्वरकन्थम्, धर्म्मकन्थम्, आशेमिकन्थम् नाम ग्रामा । नाम्नीति किम् ? वीरणकन्था वीरणै कृता कन्थेत्यर्थ । उशीनरेति किम् ? दाक्षिकन्था—ग्रामस्येय सज्ञास्ति, किन्तूशीनरेषु ग्रामो न भवति ॥ पथ्यानकम् ॥ ११ ॥

सेनाशालासुराछायानिशं वोर्णा शशात्परा ।
भाद्रणो गृहतः स्थूणा, सङ्ख्याऽदन्ता शतादिका ॥ १२ ॥

सेनाशालासुराछायानिशं वा. सेनाद्यन्तस्तत्पुरुषो वा नपुंसक । कपिसेनम् कपिसेना, हस्तिशालम् हस्तिशाला । यवाना सुरा यवसुरम् यवसुरा । श्वश्र्वै सुरा श्वश्रूसुरम् श्वश्रूसुरा । छत्रच्छायम् छत्रच्छाया । चोरनिशम् चोरनिशा ॥ तत्पुरुष इत्येव । महासेनो राजा बृहच्छाल कुलाल, पीतसुर शौण्ड, बहलच्छायस्तरुखण्ड, दीर्घनिशो हिमर्तु ॥

---

धा भवति इति सामान्यधमता, अतो यो नपुंसकपुरुषरूप कर्मधारयरूपश्च न भवति स तत्पुरुषो नपुंसक इति ॥ १० ॥ तद्गृह इति ईश्वरादिगृहम् । तत्सङ्घो वेति ईश्वरादिसमूह । समूहार्थे [illegible] 'शालाविनासभे'त्यनेनैव नपुंसकत्वम् । समूहार्थस्येति समूहार्थराजशब्दपूर्वकसभाशब्दस्य । पूर्वेणेति शाला विना सभेत्यनेन । नरसभेति नरसभेत्यादिषु सर्वत्र सभाशब्दो गृहार्थ । जगत्तुङ्गसभेति जगति तुङ्गा प्रधानकृता ये तेषा सभा जगत्तुङ्गसभा । श्रेयासस्येति श्रेयासस्य कर्तु । विषयविषयिणोरिति दानोपक्रमलक्षणयोर्विषयविषयिणो । चैत्रोपक्रम इति प्रागपि येनापि प्रासाद प्रारब्ध आसीत्पुनश्चैत्रेणोपक्रम्यते प्रारभ्यते इत्यर्थ । मैत्रोपज्ञ इति प्रागपि केनापि रथो ज्ञात आसीत्तु मैत्रेणोपज्ञायते इत्यर्थ । नाम्नीति ननु कन्था तत्पुरुषो य स चेदुशीनरेषु ग्रामनाम स्यात्तदाक्लीबत्वम्भवतीति युक्त(सीयुक?) तत्कथ नाम्नीति

अनन्कर्मधारय इत्येव । असेना परमसेना, अनिशा परमनिशा ॥ ऊर्णा शशात्परः । शशशब्दात्परो य ऊर्णाशब्दस्तदन्तस्तत्पुरुषो नपुंसकः । शशोर्णं शशलोम । शशादिति किम्? छागोर्णा ॥ भाद्गणः । भशब्दात्परो यो गणशब्दस्तदन्तस्तत्पुरुषो नपुंसकः । भगणम् नक्षत्रमण्डलम् । भादिति किम्? गोगणः—परवल्लिङ्गत्वेन णान्तत्वात्पुल्लिङ्गः ॥ गृहात् स्थूणा—गृहशब्दात्परो य स्थूणाशब्दस्तदन्तस्तत्पुरुषो नपुंसकः । गृहस्थूणं गृहधारणम् । गृहादिति किम्? शाला स्थूणा ॥ सङ्ख्याऽदन्ता शतादिका । अकारान्ता शतप्रभृतिसङ्ख्या नपुंसकलिङ्गा । अब्जम्, खर्वम्, निखर्वम्, महासरोजम्, समुद्रम्, अन्त्यम्, परार्द्धम्, सङ्ख्याविशेषा एते । शतसहस्रायुतप्रयुतार्बुदानां पुंनपुंसकत्वम्, लक्षस्य तु स्त्रीनपुंसकत्वं वक्ष्यते । अदन्तेति किम्? इयं कोटिः ॥ पथ्यावक्त्रम् ॥ १२ ॥

अथ प्रातिपदिकेनाऽदन्तास्तेषु कान्ताः सप्तचत्वारिंशत् ।

मौक्तिक माक्षिक सौप्तिक क्षीतक नाणक नाटकम् खेटक तोटकम् ।
आह्निक रूपक जापक जालक पेणुक गैरिक कारक वास्तुकम् ॥ १३ ॥

एते शब्दा नपुंसकाः । मौक्तिकं मुक्ताफलम् । माक्षिकं धातुविशेषः । अर्थप्राधान्यात् ताप्यम् । ताप्युत्थम् (तप्युत्थम्?) तापीजम् धातुमाक्षिकमित्यपि । सौप्तिकं रात्रिधाटी । क्षीतकं मधुकम् । नाणकं रूपकादि । नाटकं दशरूपकभेदः । खेटकं फलकम् । तोटकं दशरूपकभेदः वृत्तं च । आह्निकम्—नित्यक्रिया, भोजनम्, प्रकरणसमूहश्च । दिननिर्वर्त्ये त्वर्थे आश्रयलिङ्गः । रूपकम्—काव्यालङ्कारविशेषः, हिरण्यमुद्रा च, उपलक्षणत्वाद्यमकम् दीपकं चालङ्कारविशेषौ । जापकम् दार्वी, सुगन्धिद्रव्यभेदश्च । अर्थप्राधान्यात्कालीयकमित्यपि—गौड्यां तु पुल्लिङ्गोऽप्ययमिष्यते । जालकम्—कुड्मलम्, तंससमूहः, गवाक्षश्च । पेणुकम्—गजतोत्रं वशमयम् । गैरिकम्—धातुः, पुस्तपीति गौडशेष, सुवर्णे तु द्रव्यनामत्वात्सिद्धम् । कारकं कर्मादि, गुणवृत्तिस्त्वाश्रयलिङ्गः । वास्तुकं शाकभेदः । स्रग्विणी ॥ १३ ॥

रुचक धान्याकनिःशलाका-ऽलीकाऽलिकशल्कोपसूर्यकाल्कम् ।
पनसकिञ्चुकतोकतिन्तिडीकै-डूक छत्राकनिकोल्मुकानि ॥ १४ ॥

एते शब्दा नपुंसकाः । रुचकम्—चन्दनपेषणी शिला, सौवर्चले लवणनामत्वात्सिद्धम्, मातुलुङ्गे ग्रीवाभरणे च पुंनपुंसको वक्ष्यते । धान्याकं कुस्तुम्बुरु । अर्थप्राधान्याद्धानेयक

सप्तमीत्याह नाडीत्यादि ॥११॥ भशब्दादिति नक्षत्रवाचिशब्दात् ॥१२॥ धातुविशेष इति सोधनमाखी । मधुकमिति लोके जेठीमधु । रूपकादीति रूपैयाप्रमुख, नाणा इति प्रसिद्धिः । दशरूपकभेद इति नाटकादि दशरूपके प्रकरणभेदः यदाहुः नाटकं प्रकरणमित्यादि । वृत्तमिति तोटकनामच्छन्दः । प्रकरणसमूह इति ग्रन्थाध्यायसमुदायः । यदाहुः 'अवान्तरप्रकरणविश्रामे शीघ्रपाठतः आह्निकमिति' । हिरण्यमुद्रेति सुवर्णादिमुद्रिका पहलवम् । यदपि साम्प्रतमाहुः रूपकम्' । दार्वीति दारुहरिद्रा । सुगन्धिद्रव्यभेद इति लोके मलयागरी, यदाहुः 'कालीयकं तु जापकमिति । अयमिति कालीयकशब्दः' । तंससमूह इति कुड्मलसमूहः । गजतोत्रं वशमयमिति गजस्य तोत्रं गजतोत्रं गजवशीकरणाय द्विशूलाकार वंशदण्ड इत्यर्थः, लोके गडभो इति प्रसिद्धिः । धातुरिति लोके सोनागेरू । शाकभेद इति लोके वथूआ ॥ १३ ॥ चन्द

धन्याच धनीयकमित्यपि ॥ निःशलाकं रह , अर्थप्राधान्याज्जनान्तिकमित्यपि । गौडस्तु—'निजनो नि शलाकश्च रह छीनम्' इत्याह । अलीकम्—वितथम्, अप्रियम्, ललाट च । 'अलीकम-हित विदुरि'ति तु काल्य । अलिकम्—ललाटम्, अर्थप्राधान्यात्रिपताकम् तदेव रेखात्रयाङ्कितम् । यद्गौड —'रेखात्रयाङ्कित भाल त्रिपताक नपुंसकम्' । शल्कम्—खण्डम् तरुत्वकच । उपसूर्यक परिवेष । अलक अधरोग । कचक भूकन्दविशेष । किंशुक जलोद्भवो द्रव्यविशेष । तोक अपत्यम् । तिन्तिडीक चुक्रम् । एडूकम्—अन्तर्न्यस्तास्थिनी गृहकुड्ये । छत्राक भूकन्दविशेष । त्रिक पृष्ठाऽधोभाग । उल्मुक अलातम् ॥ औपच्छन्दसिकम् ॥ १५ ॥

माद्वीककदम्बके तुक्म्, चिबुक कुतुकमनूकचित्रके ।
कुहुकम् मधुपर्कशीर्षके, शालूकं कुलक प्रकीर्णकम् ॥ १५ ॥

एते शब्दा नपुंसका । माद्वीक मृद्वीकासव , अर्थप्राधान्यान्माध्वीकम् द्वारहूरमित्यपि । सुरानामत्वेन स्त्रीत्वे प्राप्ते वचनम् ॥ कदम्बक समूह , काभावे कदम्बम । यद्गौड —'कदम्ब निकुरुम्बके, नीपसर्षपयो पुंसि' । तुक्म्—तृणविशेष पटोलश्च, तुकान्तत्वात् अह्नेनेतुक—सहभोजनम्, तृणे चोपलक्षणत्वात् क्षेत्रिय क्षेत्रोद्भव तृणम्, यद्गौड —'अन्यदेहचिकित्सार्हे क्षेत्रिय क्षेत्रजे तृणे । परदाररतासाध्यरोगयो क्षेत्रिय पुमान्' । चिबुक अधरस्याध । कुतुक कुतूहलम् , प्रज्ञायणि कौतुक मङ्गलसूत्रादि । 'कौतुक चाभिलापे स्यादुत्सवे नर्महर्षयो । परम्परासमायातमङ्गले च कुतूहले ॥ विवाहसूत्रगीतादिभोगकालेषु च स्मृतम्' । अनूकम्—अन्वय , स्वभावश्च । चित्रकम्—पुण्ड्र , द्रव्यविशेषश्च । कुहुक आश्चर्यम् । मधुपर्क दधिमध्वादीनामर्घ । शीर्षक शिरस्त्राणम् । शालूक उत्पलादिमूलम् । कुलक धूर्तादिसमूहविशेष । प्रकीर्णक 'प्रकीर्णक ग्रन्थभेदे चामरे विस्तरे हये' । गौडस्तु—'प्रकीर्णक स्यात्तुरगे चामरग्रन्थयो'रित्याह ॥ वैतालीयम् ॥ १५ ॥

हल्लीसकपुष्पके खलिङ्गस्फिगमङ्गप्रगचोचबीजपिंजम् ।
रिष्ट फाट ललाटमिष्टयुष्ट करोटकपीटचीनपिष्टम् ॥ १६ ॥

एते शब्दा नपुंसका । हल्लीसक नृत्तभेद , । यद्गौड —'नारीणा मण्डली नृत्त हल्लीसक नपुंसकम्' । पुष्पकम्—नेत्ररोग कासीस लोहकाम्यादि च । यद्गौड —'लोहकास्ये मृद-

---

सर्षपणी शिलेति लोके ओरमियओ । अहुवेति लोके धाणा । रह इति एकान्त इत्यर्थ । तदेवेति ललाटम् । परिवेष इति सूर्यमण्डलम् । अधरोग इति कुक्कुररोग । भूकन्दविशेष इति लोके भूफोड । चुक्रमिति लोके चूक । अन्तर्न्यस्तास्थिनी गृहकुड्ये इति अन्तर्न्यस्तास्थिगृ॰ अन्तर्न्यस्तास्थिभित्तिरित्यर्थ । भूकन्दविशेष इति भुफोड । पृष्ठाऽधोभाग इति पृष्ठवंशस्याऽधस्तात् ऊर्ध्वः सन्धिरित्त । अलातमिति लोके ऊबाडा ॥ १४ ॥ मृद्वीकासव इति द्राक्षा मधु । तृणविशेष इति चूक । पटोल इति पटोलनामी ओषधि । अह्नेनेतुकमिति अह्ने पचदिवसाय नीयते अह्नेनेतुकम् । 'कञ्चुकांशुक॰' (उणा॰ ५७) इत्यादिना साधुः । दाक्षिणात्यानां अनुष्ठानविशेषत्वेन पर्वणि प्रसिद्ध सहभोजनमुच्यते इत्यर्थ । अधरस्याध इति लोके हडपटभो । नर्मेति क्रीडा । अन्वय इति वंश । पुण्ड्र इति तिलकम् । धूर्तादिसमूहविशेष इति पद्यादि श्लोकानां समुच्चयः—५ , यदाह 'पद्यादिभि चतुर्दशान्तै कुलकम् ।

द्वादशकन्या रेत्नकङ्कणे । ऐकपिङ्गविमाने च रीरिराया च पुष्पकम् ॥ कान्ताना पुस्त्वे प्राप्ते वचनम् ॥ अथ खान्त । स 'संवेदनेन्द्रियस्वर्गदेवर्त्मसुरेषु खम्' ॥ अथ गान्ताश्चत्वार । लिङ्गम्-साङ्ख्योक्तविकृति हेतु भेद, चिह्न च । अत्र चार्थप्राधान्याल्लिङ्गमित्यपि । शिङ्ग शिफा ॥ अङ्गम्-प्रतीक, देह, उपाय, समीपम्, अप्रधान च । अङ्ग सम्बोधनेऽव्ययम् । अङ्गान्तत्वादङ्गाङ्गम्-योनि मूर्द्धा हस्ती गुडत्वक्च । रथाङ्ग चक्रम् । रक्ताङ्गम्-विद्रुम कम्पिल्ल कुङ्कुम च । उत्तमाङ्गम्-शिर, पद्माङ्गम्, रक्तचन्दनम्, भूर्जम्, पद्मक च ॥ प्रग प्रभातम् । प्रगे इत्यव्ययमपि ॥ अथ चान्त —चोचम्-उपभुक्तफलावशेष नालिकेरीफल गन्धद्रव्य च ॥ अथ जान्ता —बीजम्-हेतु अङ्कुरकारण आधानम्, तत्त्वम्, रेतश्च । पिञ्जम् वलम् ॥ अथ टान्ता एकादश ॥ रिष्टम्-क्षेमम अशुभम् अभावश्च । यदमर — 'रिष्ट क्षेमाशुभाभावेषु' । पापे तु तन्नामत्वादेव सिद्धम्, खड्गे तु तन्नामत्वात्पुंसि ॥ फाण्ट अनायास । यन्माला—'नीरे फाण्टमनायासम्' । ललाट अलिकम् ॥ इष्ट क्रतुकर्म, यदाह—'ऐकाग्निकमहवन त्रेताया यच्च हूयते । अन्तर्वेद्या च यद्दानमिष्ट तदभिधीयते' ॥ यागश्च, 'संयतन्तौ पुमानिष्ट क्लीब तु क्रतुकर्मणी'ति तु गौड, प्रियसि आशसिते पूज्यतमे चाश्रयलिङ्ग । व्युष्टम्-प्रभातम् दिनम फल च, पर्युषिते त्वाश्रयलिङ्ग । करोटम्-मस्तकम्, कास्यभाजन च । कपीटम्-उदरम्, जले तु तन्नामत्वादेव सिद्धम् । चीनपिष्टमिन्दूरम् ॥ औपच्छन्दसिकम् ॥ १६ ॥

शृङ्गाटमोरटपिटान्यथ पृष्ठगोष्ठमाण्डाण्डतुण्डशरणग्रहणेरिणानि ।
पिङ्गाणतीक्ष्णलवणद्रविण पुराणम्, त्राण व्रण हिरणकारणकार्मणानि ॥ १७ ॥

एते शब्दा नपुसका । शृङ्गाटम्-जलोद्भव कन्द, चतुष्पथ च । स्वार्थिके के शृङ्गाटकम्, पुस्यपीति कश्चित् । मोरटम्-इक्षुमूलम् अङ्कोठप्रसूनम्, सप्तरात्रात्पर च क्षीरम् । मूर्वाया

वृत्तामत अ० ८ ] ॥ १५ ॥ नृत्तभेद इति स्त्रीणो मण्डलेन नृत्यम् । नेनैराय इति लोके फूलभो । घोसी सामिति हारासीन मयवा पाप्धभोसीसभो । छोहेकाले इति लोहेन मिश्र कास्य लोहकांस्य तत्र । द्वादशकन्यामिति षण्मयी अट्ठारसकडी भूवट्टारसकडी तस्याम् । रैत्नकङ्कणे इति रत्नखचित कङ्कण रत्नकङ्कण तत्र । ऐकपिङ्गविमाने इति धनदविमाने । रीरिरायामिति प्रधानपित्तले । सवेदनमिति ज्ञानम् । देवेवर्त्मेति आकाशम् । साङ्ख्योक्तविकृतिरिति साङ्ख्योक्ताया प्रकृते कार्यभूता विकृति, साङ्ख्योक्तविकृति । अत्रेति साङ्ख्योक्तविकृत्यर्थे । शिफेति पुत्र । प्रतीक इति अवयव । मूर्द्धेति मस्तकम् । गुडत्वक् इति गुडत्वक् मधुरत्वक् गुडत्वक् सुगन्धिवल्लीविशेष लोके तज, यदाह 'त्वच वराङ्ग भृङ्गत्वक,' इत्यादीनि । कम्पिल्ल इति लोके कपीला । भूर्जमिति भूर्जनामा वृक्ष । पद्मकमिति पद्मकनामा औषध भेद । उपभुक्तफलावशेष इति गुडादिना भक्षितोद्धरितम् । गन्धद्रव्यमिति लोके तज । आधानमिति पुत्रार्थे अग्न्यादेर्गर्भादिना आरोपणम् । ऐकाग्निकमाहवनमिति विवाहकाले एकाग्नौ कर्मतापत्स्य । त्रेतायामिति अग्नित्रयाम् । अन्तर्वेद्यामिति वेदीमध्ये [ पञ्चरी चउरी माहे इत्यर्थ ] । संयन्तौ इति यज्ञ । प्रेयसीति अतिप्रिये । आशसिते इति अभिलषिते । पर्युषिते इति वासीधान इत्यादिप्रसिद्धे ॥ १६ ॥
१ जलोद्भव पद इति लोके सिंघोडा । अङ्कोठप्रसूनमिति अङ्कोठनाम्नो वृक्षस्य पुष्पम् । मूर्वायामिति

तु क्षीरवन्मुक्तम् । पिटम्—छर्दिः, आरुर्षफलञ्च । भाजनविशेषे तु पुंनपुंसकौ वक्ष्यते । टान्तानां पुंस्त्वे प्राप्ते पाठः ॥ अथ ठान्तौ । पृष्ठम्—प्राण्यङ्गम, पश्चात्, उपरि च । गोष्ठं गोकुलम् । गोष्ठप्रत्ययान्तमपि गोगोष्ठम्, अश्वगोष्ठम् पशुगोष्ठम् 'पशुभ्यः स्थाने गोष्ठ' (७।१।१२३) इति गोष्ठ ॥ अथ डान्तास्त्रयः । भाण्डम्—क्रय्यद्रव्यम्, भाजनम्, भूषणम्, अश्वाभरणम्, वेपथारः, गेहं च । 'प्रकृतेर्लिङ्गवचने बाधन्ते स्वार्थिकाः क्वचि'दिति स्वार्थिके पुंनपुंसकः । भाण्डकः भाण्डकम्, भाण्डमेव नन्दी ॥ अण्ड वृषणः । यन्माला—'अण्डं नपुंसकम्' । पक्ष्यादिप्रसवे पुंनपुंसको वक्ष्यते ॥ तुण्डं मुखम्, अर्थप्राधान्याद्विजालयमित्यपि ॥ अथ णान्ता एकविंशतिः । शरणम्—गृहम्, वधः, त्राणम्, तत्परता, त्राता च ॥ ग्रहणम्—'ग्रहणं स्यादुपलब्धौ चन्द्रसूर्यग्रहे तथा । स्वीकारादरयोर्नन्दीपु प्रत्याये्ऽपि प्रयुज्यते' शब्दश्च यदाह—'ग्रहणसिद्धि' । अत्र चोपलक्षणत्वात्प्रातिपदिकमित्यपि ॥ इरिणम्—यत्रोप्तं न प्ररोहति, अर्थप्राधान्यादूषरमित्यपि । ऊषरानूषरौ द्वावप्यन्यलिङ्गावित्यन्ये । पिङ्गाणं पाचभाजनम् ॥ तीक्ष्णं विषादि । यद्गौड —'सामुद्रलवणे तीक्ष्णं विषलोहाजिसंकुषु । तिग्मेऽऽत्मत्यागिनोर्यान्यलिङ्गं पुंसि जैवात्रजे' ॥ लवणम्—लावण्यम्, रुमोद्भवं च ॥ द्रविणम्—पराक्रम, धनं च । पराक्रमे चार्थप्राधान्यात्पुंस्त्वमित्यपि ॥ पुराणम्—पञ्चलक्षणम् । यदाह—'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुवंशचरितं पुराणं पञ्चलक्षणम्' ॥ षोडशपणे तु णान्तत्वात्पुंसि । पुरातने त्वाश्रयलिङ्गं ॥ त्राणम्—त्रायमाणे, रक्षणं च । रक्षिते त्वाश्रयलिङ्गं ॥ शणं धान्यविशेषः, धान्यनामत्वात्पुंस्त्वे प्राप्ते वचनम् । हिरणम्—'वैराटहेमरेतस्सु हिरणं स्याद्धिरण्यवत्' । कारणम्—हेतुः करणम् वधश्च । कार्मणम्—संवननम्, कर्म च कारकम् ॥ वसन्ततिलकम् ॥ १७ ॥

पर्याणर्णप्राणपारायणानि श्रीपर्णोष्णे धोरणक्षूणभूतम् ।
प्रादेशान्ताश्मन्तशीतं निशान्तं धून्तं तूस्तं वार्त्तगाहित्थमुक्थम् ॥ १८ ॥

एते शब्दा नपुंसकाः । पर्याणं पर्ल्ययनम् । ऋणम्—उत्तमर्णदेयम्, जलदुर्गभूमिश्च ।

ज्याहेतुतृणविशेषे, लोके चीरउली । छर्दिरिति वान्तिः । आरुर्षफलं इति शारिफलकः । भाजनविशेष इति पिडओ इति प्रसिद्धे । क्रय्यद्रव्यमिति लोके कयाणओ । उपलब्धौ इति ज्ञाने । नन्दीति हठगृही सा स्त्री । प्रत्याये इति ग्रहणके लोके गाहणा । अत्र चेति शब्दलक्षणेऽर्थे । ऊषरानूषरौ इति ऊषरानूषरशब्दौ अन्यलिङ्गौ वाच्यलिङ्गौ इत्यर्थः । यथा ऊषरो देशः, ऊषरा भूमिः, ऊषरं क्षेत्रम् । संकुरिति लोके सादू । तिग्ममिति लोके तीखओ । आत्मत्यागीति द्रव्यहेतोरात्मानं यस्त्यजति स आत्मत्यागी, यत्कौटिल्यः 'ये द्रव्यहेतोर्व्यालं हस्तिनं चापि योधयेयुस्ते तीक्ष्णाः' इति । जैवात्रजे इति इश्वरस्य गणविशेषे । रुमो्द्भवमिति रुमा लवणखानिः स्यादिति तदुद्भवम् । सर्ग इति सृष्टिः । प्रतिसर्ग इति संहारः । वंश इति अन्वयवर्णनम् । मन्वन्तराणीति चतुर्दशमन्वन्तराणि । वंशानुवंशचरितमिति वंशस्य सदृशो वंशो वंशानुवंशस्तस्य चरितं वंशानुवंशचरितम् । षोडशपणे इति षोडशपणा अस्येति, यदाह 'षोडशपणः पुराणः पणो भवेत्काकणीचतुष्कणेति, काकणीति कोऽर्थः ? पञ्चाहतैश्चतुर्भिर्वराटकैः काकणी चैकेत्यर्थः' । वैराट इति कपर्दः । करणमिति साधकतमं करणम् । संवननमिति वशक्रिया ॥ १७ ॥ पर्ल्ययनमिति लोके

घ्राणं घोणा, घ्राते त्वाश्रयलिङ्गः । पारायणं शास्त्रविशेषः, 'पारायणं सेमासाङ्के कार्त्स्न्ये पारगतावपि' इति गौडः । श्रीपर्णम् अग्निमन्थः, अम्बुजे तु तन्नामत्वादेव सिद्धम्, शाल्मल्यां तु शिंशपादित्वात्स्त्रीत्वम् ॥ उष्णं शीतविरोधि । कोष्णं कदुष्णम् । कदुष्णं मन्दोष्णमिति तत्पुरुषत्वात्परवल्लिङ्गता । ग्रीष्मातपयोर्गौणत्वाद्वाच्यलिङ्गमिति । दक्षाशीतलयोस्त्वाश्रयलिङ्गता ॥ धोरणं वाहनम् । स्थूणं विरूढता, णान्तानां पुन्ने प्राप्ते वचनम् ॥ अथ तान्ता अष्ट—भूतम्—प्राणी पृथिव्यादि च । प्राण्यग्निवायुषु तन्नामत्वात्पुंस्त्वे पृथिव्यां तु स्त्रीत्वे प्राप्ते वचनम्, प्रेते तु पुन्नपुंसकत्वं वक्ष्यते ॥ मादशान्तम्—प्रमाणविशेषावसानं निगरं च । अन्तान्तत्वात्पुंस्त्वे प्राप्ते पाठः ॥ अदन्तं चुल्लिः ॥ शीतम्—ऋतुविशेषः, उष्णविरोधी च गुणः । यद्गौडः 'वेतसे बहुवारे ना गुणे शीतं हिमे त्रिषु' ॥ निशान्तम्—गृहं अपरोक्ष्यं । निशाया अन्तोऽत्रेति अन्तान्तत्वात्पुंस्त्वे, निशाम्यते अत्रेति आधारक्तान्तत्वाश्रयलिङ्गत्वे वा प्राप्तेऽस्य पाठः । वृतं असत्यबन्धनम्, वृन्तान्तरत्वात्तालवृन्तमित्यपि । वृन्तं बेहानटा, जरत्कपणे तु सिद्धमेव ॥ वार्त्तम्—आरोग्यम्, निस्सारं च । यच्छाश्वतः—'निस्साराऽऽरोग्ययोर्वार्त्तम्', उदन्तादिषु स्त्रीत्वमुक्तम् । नीरुजि वृत्तिमति च गुणवृत्तित्वादाश्रयलिङ्गः ॥ अथ थान्तौ । वाहित्थं गजकुम्भयोरधः । उक्थं साम ॥ शालिनी ॥ १८ ॥ अथ दान्ता नव ॥

अच्छोदगोदकुसिदानि कुसीदतुन्दवृन्दास्पदं दपदनिम्नसशिल्पतल्पम् ।
कूर्पत्रिपिष्टपपरीपपदन्तरीपरूपं च पुष्पनिकुरम्बकुटुम्बशुल्बम् ॥ १९ ॥

एते शब्दा नपुंसकाः । कूर्पत्रिपिष्टपपरीपपदम्, कूर्पत्रिपिष्टपपरीपाणीव एषां प्रसिद्धिं विवक्षितोपमानत्वमुक्तम् । एवमन्यत्रापि यदर्थो व्याख्येयः । अच्छोदं देवसरः, उपलक्षणत्वान्मानसमपि । गोदम् मस्तकस्नेहः । कुसिदं ऋणम् । कुसीदम्—वृद्धिजीवनम्, विधानं च । तुन्दं उदरम् । वृन्दम्, समूहः । आस्पदम्—प्रतिष्ठा, स्थलं च । दं कलत्रम् । पदं 'त्राणाऽङ्कव्यवसायेषु पादतच्चिह्नयोरपि । वस्तुस्थानाऽपदेशेषु पदं स्याद्वाक्यशब्दयोः' ॥ 'पादे तु पुंस्यपि' यदमरः—'पादोऽङ्घ्रिश्चरणोऽस्त्रियाम्' । विभक्त्यन्तम्, श्रमणं च । पदान्तत्वात् गोष्पदं गोस्थानम्, गोखुरं श्वभ्रं वा । प्रपदं पादाग्रम् । गुल्फे तु तन्नामत्वात्पुंस्त्वम् ॥ अथ नान्ता—निम्नं गभीरम् । अयप्राधान्याद्गम्भीरम् गभीरं च । गुणवृत्तित्वे त्वाश्रयलिङ्गतैव । नदी ॥ अथ पान्ता अष्टौ । शिल्पं क्रियाकौशलम् । तल्पम्—रणमण्डपः, अट्टः, दाराश्च । शयनीये तु पुन्नपुंसकत्वं वक्ष्यते । कूर्पम्—भ्रुवोर्मध्यरोम । कूर्प्यमित्यपि भागुरिः ।

पखाण । सेमासाङ्के इति सम्बन्धे । कार्त्स्न्ये इति इह कात्स्न्यशब्देन सारस्यवचनमुच्यते । यदाह 'साकल्यवचनं प्राहुः पारायणमुदाहृतमिति तत्र, यथा धातुपारायणम् । पारगतौ इति पारप्रापणे । अग्निमन्थ इति लोके अरणा । शाल्मल्यामिति सीमलिनाख्ये वृक्षे । शिंशपेति पावती । बहुवारेति लोके गुन्दीति नाम्ना प्रसिद्धो वृक्षस्तत्र । अवरोध इति लोके अन्तेउर । असत्यबन्धनमिति लोके वीट । तालवृन्तमिति लोके वींजणा ॥ १८ ॥ देवसर इति मानससरोवर । प्रतिष्ठेति स्थानम् । अङ्क इति चिह्नम् । व्यवसाय इति निश्चय । पाद इति चरण । तच्चिह्नमिति पादचिह्न चरणमुद्रेत्यर्थ, लोके पोलरी [ पगला ? ] इति ... । अपदेश इति कपटम् । शब्द इति इह शब्दो विभक्त्यन्त । गुल्फे इति लोके गिरिया

त्रिविष्टप स्वर्ग', पस्य यत्वे त्रिविष्टपम् । परीपम्, परिगता आपो यत्र ॥ अन्तरीपम्—मध्येजल देश' । अस्त्रियामयमित्यमरटीका ॥ रूपम् 'ग्रन्थावृत्तौ पशौ शब्दे नाटकादिस्वभावयो । रूपमाकारसौन्दर्ये नाणकश्लोकयोरपि' ॥ चक्षुर्विषयश्च ॥ पुष्पम्—स्त्रीरज , वनदविमानम्, कुसुमम्, नेत्ररोगश्च । पुष्पान्तत्वान्मेघपुष्पम्, वीजपुष्पम्, हेमपुष्प च । यद्गौड —'मेघपुष्प तु नादेये पिण्डाभ्रे सलिलेऽपि च । वीजपुष्प दमनके क्लीव मरुवकेऽपि च ॥ हेमपुष्पमशोके च जपापुष्पे नपुसकम्' ॥ अथ गान्तास्त्रयः—निकुरुम्बम्—समूह । कुटुम्ब पुत्रदारादि । शुल्यम्—रज्जु , ताम्रे तु द्रवनामत्वात् सिद्धम् ॥ वसन्ततिलका ॥ १९ ॥

अथ मान्तौ ॥

प्रसभतलभशुष्माध्यात्मधामेर्मसूक्ष्म किलिमतलिमतोक्म युग्मतिग्म त्रिसन्ध्यम् ।
किसलयशयनीये सायखेयेन्द्रियाणि द्रुवयभयकलत्रद्वापरक्षेत्रसत्रम् ॥ २० ॥

एते शब्दा' नपुसका । प्रसभ बलात्कार । तलभ करिकराघात । भान्तयो पुस्त्वे प्राप्ते वचनम् ॥ अथ मान्ता दश—शुष्म ओज । आत्मानमधिष्ठितमध्यात्मम्—योगशास्त्रम् । बाहुलकात्तत्पुरुषादपि समासान्त , अव्ययीभावस्य तु द्वन्द्वैकत्वाव्ययीभावावित्येव नपुसकत्वम् । धामम्—गृह तेजश्च । नान्तस्य तु मन्नन्तत्वादेव सिद्धम् ॥ ईर्मं व्रण' । सूक्ष्मम् 'अध्यात्मे कतके सूक्ष्ममणौ पुस्यल्पके त्रिपु' । किलिम देवदारु , तदन्तरनात् हकिलिमम् । तलिमम्—कुट्टिमम्, तल्पम्, चन्द्रहास , वितानश्च । तोक्म कर्णमल । यद्गौड —'तोक्म कर्णमले पुसि हरिते च हरियवे' । युग्म युगम् ॥ तिग्म तीक्ष्णम् । अर्थप्राधान्यात्तीक्ष्णम् खर तीव्रमित्याद्यपि । तद्वत्याश्रयलिङ्गता ॥ अथ यान्ता अष्टौ—त्रिसन्ध्यं सन्ध्यात्रयसमाहार' । अन्नावन्तान्तो वेति पक्षे स्त्रीत्वप्राप्तौ वचनम् । यन्माला—'त्रिसन्ध्य तु नपुसकम्' । अर्थप्राधान्यादुपवैणवमपि । यद्गौड —'त्रिसन्ध्यस्तु (मु ?)पवैणवम्' । किसलयं पल्लव । शयनीय शय्या ॥ साय दिनावसानम् । 'वस्तुरश्च विकालश्च सायश्च सवलिश्च स' इति तु गौड' । मकारान्त तु सायमित्यव्ययम् ॥ खेयम् परिखा । इन्द्रियम्—रेत , हृषीके तु तन्नामत्वादेव सिद्धम् । द्रुवय मानम् । अर्थप्रधानत्वात्पाय्यमित्यपि । भय 'कुञ्जकस्य प्रसूनेऽपि घोरे प्रतिभये भयम्' । शुष्मादीना मान्तत्वात्किसलयादीना यान्तत्वाद्भयस्य स्वलन्तरनात्पुस्त्वे प्राप्ते वचनम् । अथ रान्ता एकोनत्रिंशत् । कलत्र । 'दुर्गस्थाने नृपादीना कलत्र श्रोणिभार्ययो' । द्वापर युगविशेष , सशये तु पुनपुसको वक्ष्यते । क्षेत्र 'केदारे

---

वक्षिन् । अट्ट इति दुर्गादिप्राकारोपरि युद्धस्थानम्, लोके फिरणी । दोरा इति वस्त्रम् । मध्येजल देश इति द्वीपमित्यथ । नादेये इति वेतसे । पिण्डाभ्रे इति ओषधिविशेषे । दमनके इति लोके दमणओ ॥ १९ ॥ अध्यात्मे इति आत्मविषय रूप यत्र । कतकमिति कतकवृक्षफलम् । अणौ इति परिमाणे । कुट्टिममिति गृहस्य पाषाणादिभिर्बद्धा भूमि । तल्पमिति शय्या । चन्द्रहास इति खड्ग । वितान इति चन्द्रोदय , लोके चन्दूया । हरिते इति नीलवर्णे । हरियवे इति नीलयवे । दिनावसानमिति लोके सांझि । कुञ्जकस्य प्रसूने इति कुञ्जकनाम्नो वृक्षस्य पुष्पे । दुर्गस्थाने नृपादीनामिति राजादीनां विषम

वेपुषि क्षेत्र सिद्धस्थानफलत्रयो '। कलत्रक्षेत्रयोर्याभिनामत्वात्स्त्रीत्वप्राप्तौ वचनम् । सद्म–गृहम्, आच्छादनम्, संदादानम्, वनम्, दम्भ, साधनम्, यज्ञश्च ॥ मालिनी ॥ २० ॥

शृङ्गवेरमजिराभ्रपुष्कर तीरमुत्तरमगारनागरे ।
स्फारमक्षरछुछुन्दुरोदरप्रान्तराणि शिबिरं कलेवरम् ॥ २१ ॥

एते शब्दा नपुंसका । शृङ्गवेरं आर्द्रकम् । अजिर 'अजिरं प्राङ्गणे धावते[10] निषद्ये दर्दुरे सैनौ' । अभ्रम्–मेघ, नाकश्च । नाभ्रमेघनामत्वात्पुंस्त्वे प्राप्तेऽस्य पाठ । व्योमनि तु तन्नामत्वादेव सिद्धम् । स्वार्थिके के अभ्रकं गिरिजामलम्[13] । अर्थप्राधान्यात् गैराभ्रम् व्योमध्वजम् गौरीबीज व्योमसेनाभिधानकमि'त्यपि ॥ पुष्कर । 'पुष्कर पङ्कजे व्योम्नि पद्म करिक राग्रयो । औषधद्वीपविहगतीर्थरागोरगान्तरे[15] ॥ पुष्कर सूर्यवक्त्रे च काण्डखड्गफलेऽपि च' ॥ तीरं तटम् । नपुंवाचिनस्तु बाहुल्यात्पुंस्त्वम् । यद्गौड –'तटस्तीरं पुमानयम्' । उत्तर प्रतिवचनम् । यथा 'प्रभञ्जो[17]धिया पृच्छा तस्य भञ्जनमुत्तरम्', वाक्य च । यथा 'निरुत्तरीकृतः[18]' उपर्युदीच्यश्रेष्ठेषु त्वाश्रयलिङ्ग । अगार गृहम् । नागरम्–मुस्तक शुण्ठी राजकशेरु च । चन्द्र 'नागर मुस्तके शुण्ठ्या विदग्धे नागरोऽन्यवत् । शसन्ति नागरोद्भूते दैवयन्त्रेऽपि नागरम्' ॥ स्फार विपुलम्, गुणवृत्तेस्त्वाश्रयलिङ्गता । गौडस्तु–'पुमांस्तु निस्वने स्फार स्फरकादेश्च[20] बुद्बुदे' इत्याह ॥ अक्षरम्–वर्ण, मोक्ष, परब्रह्म च । मालाकारस्तु 'ॐ ब्रह्मण्युच्यतेऽक्षर' इत्यर्थविशेषे पुंस्त्वमाह । छुछुन्दुरम्–जैघनकूपक, अर्थप्राधान्यात् छुछुन्दररताछुरे अपि, यद्गौड –'छुछुन्दररताछुरे' । उदरम्–जठरव्याधियुद्धानि, जठरे निलिङ्गोऽयमिति बुद्धिसागर । प्रान्तर 'प्रान्तर विपिने[22] दूरशून्यवर्त्मनि कोटरे[24]' । शिबिरम्–सैन्यम्, संनिवेशश्च । कलेवर शरीरम् ॥ रथोद्धता ॥ २१ ॥

सिन्दूरमण्डूरकटीरचामर–कूराणि दूरारवैरचत्वरम् ।
औशीरपातालमुलूखलार्तवे सत्र च सान्त्व दिवकिण्वपौतवम्' ॥ २२ ॥

स्थाने, यथा 'निर्विक्रमो महीनाथ कलत्रैर्धायते कियत्' । वेपुषीति देहे । सिद्धस्थानमिति सिद्धक्षेत्रम् । फलत्रक्षेत्रयोरिति स्त्रीवाचककलत्रशब्दक्षेत्रशब्दयो । संदादानमिति लोके सत्कार । दम्भ इति कपटम् । साधनमिति उपकरणम् ॥ २० ॥ आर्द्रकमिति लोके आदुओ । प्राङ्गणे इति लोके आगणओ । धावते इति पवने । निषद्ये इति स्पादो । दर्दुरे इति भेक । सैनौ इति काये । गिरिजामलमिति लोके आभूषा भोडल इति या प्रसिद्धि । करिकराग्रमिति शुण्डाग्रम् । औषधद्वीपविहगतीर्थरागोरगान्तरे इति औषधादीनां षण्णा अन्तरशब्द प्रत्येक अभिसम्बध्यते । तत्र औषधान्तरे इति पुष्करमूले । द्वीपान्तरे इति पुष्करवरद्वीपे । विहगान्तरे इति सारसनाम्नि । तीर्थान्तरे इति पुष्करनाम्नि । रागान्तरे इति रागभेदे । उरगान्तरे इति सर्पभेदे । खड्गफले इति मत्स्याकारे । प्रश्नोधियेति पूर्वपक्षबुद्ध्या । निरुत्तरी कृत इति निवचनीकृत । दैवयन्त्रे इति करणविशेषे । स्फरकादेश्च बुद्बुदे इति स्फरकादीनां खेटकादीनां बुद्बुदाकार पित्तलादिमयोऽलङ्कार तत्र । जैघनकूपक इति लोके कटिपृष्ठभागे आखिआ इति प्रसिद्धि । विपिने इति अरण्ये । दूरशून्यवर्त्मनीति दूरशून्ये मार्गे । कोटरे इति वृक्षगर्तायाम् । संनिवेश

एते शब्दा नपुंसका: । सिन्दूरम्—धातुविशेष:, अर्थप्राधान्यात् मसिवर्द्धनम्, गान्धार नागसम्भवमित्यपि । मण्डूर लोहमलम् । कटीर कटी । चामर प्रकीर्णकम्, पुंस्यपीति कश्चित् । 'चामर चामरो वालव्यजन'मिति तु गौड: ॥ क्रूर क्रौर्यम् । दूर विप्रकृष्टम् । अनयोर्गुणवृत्तित्वे स्वाश्रयलिङ्गतैव ॥ अररम्—कपाटम् रण च । वैर विरोध । चत्वर चतुष्पथम, अङ्गणे तु तन्नामत्वादेव सिद्धम् । औशीर शयनासने, चामरम्, यष्टिश्च । उशीरस्येदमित्यणन्तस्त्वाश्रयलिङ्ग ॥ अथ लान्तौ—पाताल वडवानल । वह्निनामत्वेन पुंस्त्वे प्राप्ते पाठ । पाताले तु बिलनामत्वादेव नपुंसकत्वम् ॥ उलूखलम्—गुग्गुलु । निर्यासनामत्वात्पुंस्त्वे प्राप्ते वचनम् । कण्डन्या तु लान्तरत्वादेव नपुंसकत्वम् ॥ अथ वान्ता: सप्त—आर्त्तवम्—पुष्पम्, स्त्रीरजश्च । ऋतुसम्भूते स्वाश्रयलिङ्ग ॥ सत्त्वम् 'सत्त्व विलम्बिते नृत्ते स्वरूपे परमात्मनि । व्यवसाये स्वभावेऽसुपिशाचाद्ये गुणे बले ॥ द्रव्याऽऽत्मभावयोश्चित्ते सत्त्वमस्त्री तु जन्तुषु' ॥ जन्तौ पिशाचादौ गुणे प्राणे च पुंन्नपुंसको वक्ष्यते । पक्षाश्रुकसमुच्चयार्थत्वात्तत्त्वमित्यपि । यद्गौड:—'तत्त्व विलम्बिते नृत्ते स्वरूपे परमात्मनि' । गुन्द्रम्—मुस्त गन्धतृण च । यदाह—'प्लव: कारण्डवे भेके कुलके भेल्के कपौ । शब्दे स्रुतिगतौ ईक्षे चण्डालेऽलकाकयो ॥ प्लव गन्धतृणे प्रोक्त कैवर्त्ता मुस्तकेऽपि च' । अंसे तु पुंस्त्वमऽल्लन्तत्वादिना सिद्धम् । सान्त्वम्—साम, दाक्षिण्य च ॥ दिवम्—दिवस स्वर्गश्च । दीव्यन्त्यनेति घञर्थे क्वादित्वात्क । स्वर्गवाचिनो दिवशब्दस्य वृत्तिविषय एव प्रयोगमिच्छन्त्येके । यथा त्रिदिव', दिवौकस इति ॥ किण्वम्—सुराबीजम्, पापे तु तन्नामत्वादेव सिद्धम् । पौतवम्—मानविशेष , माननामत्वेन पुंस्त्वप्राप्तौ वचनम् ॥ इन्द्रवज्रा ॥ २२ ॥

विश्व वृश पलिशामर्पिशकिल्विपांशुतर्पोपिप मिषमृचीषमृजीषशीर्षे ।
पीयूषसाध्वसमहानससाहसानि कासीसमत्सतरस यवस बिस च ॥ २३ ॥

एते शब्दा नपुंसका: । विश्व जगत् । नागरे तु स्त्रीनपुंसकता वक्ष्यते । कार्त्स्न्यवाचिनस्तु गुणवृत्तित्वादाश्रयलिङ्गता ॥ अथ शान्तास्त्रय: ॥ वृशम्—शृङ्गवेरम्, लशुनम्, मूलक च ।

---

इति सैन्यस्थानम् ॥ २१ ॥ अनयोरिति क्रूरदूरशब्दयो । शयनासने इति शयन च आसन च [illegible] सन तत्र युगपद्वर्त्तते । यष्टिरिति दण्ड । कण्डन्यामिति लोके ऊखल । व्यवसाये इति अतिशयवर्द्धित्व (?) [illegible] अवष्टम्भ इति यावत् तत्र । स्वभावे इति स्वरूपे । असव इति प्राणा । गुणे इति प्रकृतिगुणे । [illegible] द्रव्यम् पारिभाषिक विशेषाख्यम्, यदाहु 'वस्तूपलक्षण यत्र सर्वनाम प्रयुज्यते । द्रव्यमित्युच्यते [illegible] भिधत्वेन विवक्षिते' इति । आत्मभाव इति विद्यमानता । विलम्बिते नृत्ते इति [illegible] इत्यर्थ । यदाहु—'द्रुत १ विलम्बित २ मध्य ३ मोघ १ सत्त्व २ घन ३ क्रमात्' [illegible] । [illegible] इति कैवर्त्तीमुस्तक लोके कीकरहुलु । गन्धतृणमिति गन्धप्रधान तृण गन्धतृणम्, [illegible] प्रसिद्धि । कारण्डवे इति पक्षिविशेषे । भेके इति दर्दुरे । कुलके इति कुलप्रधान । [illegible] ईक्षे इति पिप्पलनाम्नि वृक्षे । अलकाक इति जलवायस । अंसेति स्कन्धा [illegible] अर्थान्तरत्वेन, आदिशब्दात् देहिनामत्वेन । [illegible] समासान्तत्वे [illegible]

पलिशम्—यत्र स्थित्वा मृगा व्यापाद्यन्ते । आर्मिशम्—आर्द्रमासम्, बालवत्साया दुग्ध च ॥ अथ षान्ता अष्ट—किल्बिषम्—रोग , अपराध , विष च, पापे तु तन्नामत्वादेव सिद्धम् । अमुतर्षं भयम्, सुरानामत्वात्क्लीत्वे प्राप्ते वचनम् । आर्मिष आर्द्रमासम् । मिषम्, व्याज । ऋचीषम् ऋजीषं च—पिष्टपचनभाजनम् । शीर्षं शिर , कपिशीर्षम् भित्ति शृङ्गमिति तु शीर्षान्तत्वात् ॥ पीयूष अमृतम् , मैत्यप्रसवगव्यादिक्षीरविकारश्च । अर्थप्राधान्यात्पेयूषमित्यपि । 'पेयूषोऽभिनव पय ' इत्यमर ॥ अथ सान्ता अष्टौ—साध्वस भयम् । महानसम् पाकस्थानम् । साहसम्—दुष्करकर्म्म, वैयात्यम्, अविमृश्यकारिता, दमश्च । कासीसम्—धातुविशेष । अर्थप्राधान्याद्धातुकासीसम् धातुशेखरमित्यपि । मत्स संधिस्थानम् । तरस मासम्, अयप्राधान्यादुत्तप्त शुष्कमासम् । यवस अश्वादिघास । विस पद्मकन्द ॥ वसन्ततिलकम् ॥ २३ ॥ अथ क्षान्तौ ॥

मन्दाक्षवीक्षमथ सक्थि शयातु यातु स्वाद्वाशु तुम्बुरु कशेरु शलालु चाऽऽलु ।
१२ संयत्ककुन्महदहानि पृषत्पुरीतत्पर्वाणि रोम च भमद्य जगच्छलाम ॥ २४ ॥

एते शब्दा नपुसका । मन्दाक्षम्—लज्जा शङ्का च । वीक्षम्—विस्मय , दृश्य च ॥ अथेदन्त —सक्थि ऊरु , यत्तु प्राण्यङ्गयाचि स्यादिति क्लीत्वे प्राप्ते वचनम् ॥ अथोदन्ता अष्टौ—शयातु अजगर" ॥ यातु राक्षस । माला—'क्लीबे द्वे यातुरक्षसी' । अनयोर्देहिनामत्वात्पुंस्त्वे प्राप्ते वचनम् ॥ स्वादु—मृष्टम्, मनोज्ञ च । नदिन गुणवृत्तेस्त्वाश्रयलिङ्गता स्वादुरोदन , स्वाद्वी पेया, स्वादु पय ॥ आशु शीघ्रम् ॥ तुम्बुरु औषधविशेष , उकारान्त स्वात्पुस्त्वप्राप्तौ पाठ । कशेरु—कैन्दविशेष , तृणजाति , पृष्ठास्थि च । अर्थप्राधान्याद्गाङ्गेयमित्यपि । यद्गौड —'कशेरुस्तृणयो क्लीब गाङ्गेयो जाह्नवीसुते' । शलालु गन्धद्रव्यम् । आलु कैन्दविशेष ॥ अथ व्यञ्जनान्ता एकादश—सयत् सङ्ग्राम , वामनस्य लक्ष्य च । 'हेरम्बडम्यरिणि सयती'ति । 'स्त्रिय सयत्समित्याजिसमिद्युध ' इति त्वमर । ककुत् वृषस्कन्ध । यन्माला—'क्लीबकाण्डे नावा च ककुद् ककुद्' । गौडस्तु—'स्त्री ककुद् ककुदोऽप्यस्त्री शृङ्गाग्रे राजध्वजे वरे' । महत्–राज्यम्, बुद्धितत्त्व च । अंत्राऽपि पुस्यपि दृश्यते । प्रकृतेर्महानित्यादि । महती महान्तौ । अह —दिनम् अही । पृषत्–बिन्दु मृगे तु देहिनामत्वात्पुसि । पुरीतत् अंत्रम् । पुरीतती ॥ पर्व 'दर्शप्रतिपदो सन्धौ ग्रन्थिप्रस्तावयोरपि । पर्व क्लीब मेदे

मृगीमदिघमस्थेति ॥ २२ ॥ नगरे इति शुभ्गीनाम्नि । शृङ्गवेरमिति आदुओ । बालवत्साया इति अभिनवप्रसूताया । पिष्टपचनभाजनमिति लोके तवा । भित्तिशृङ्गमिति लोके कांगरा । मैत्यप्रमसवगव्यादिक्षीरविकार इति बल्हिका फेनीत्यादि । पाकस्थानमिति लोके रघाणी । वैयात्यमिति धृष्टता । धातुविशेष इति लोके हीराकसीस । संधिस्थानमिति पाषाणादे सन्धिस्थानम् ॥ २३ ॥ शङ्केति लोके ... । औषधविशेष इति लोके धाणा । कैन्दविशेष इति लोके मोथ । जाह्नवीसुते इति स्कन्दे भीष्मे । कैन्दविशेष इति लोके आलू । शृङ्गाग्रे इति शृङ्गे वृषस्कन्धे च । राजध्वजे इति छत्रादिक । वरे श्रेष्ठे । बुद्धितत्त्वमिति साङ्ख्यप्रणीत धीतत्त्वम् । अत्रेति बुद्धितत्त्वे । अत्रमिति महच्छन्द' । अर्थ

चैव विपुवत्प्रभृतिष्वपि' ॥ पर्वणी ॥ रोम तनूरुहम् । रोमणी, मन्नन्तत्वेनैव सिद्धे फलेऽर्थं वचनम् । पुंस्ययमिति कश्चित् ॥ भसद्-आस्यम्, जघनम्, आमाश्रयस्थानं च । दकारान्तोऽयम् ॥ जगत् विश्वम् । यद्गौड -'स्याज्जगद्विष्टपे क्लीब वायौ ना जङ्गमे त्रिषु । छन्दोविशेषे जगती क्षितौ च भुवने जने' ॥ ललाम 'प्रधानध्वजशृङ्गेषु पुण्ड्रवालधिलक्ष्मसु । ४
भूषावाजिप्रभावेषु ललाम स्याल्ललामवत्' ॥ रम्ये च ललामनी । ललामस्य तु पुन्नपुंसकत्वं वक्ष्यते ॥ वसन्ततिलका ॥ २४ ॥

इति नपुंसकलिङ्गं समाप्तम् ।



## अथ स्त्रीपुंसलिङ्गाः । ८

पुंस्त्रीलिङ्गश्चतुर्दशेऽङ्के शङ्कुर्निरये च दुर्गतिः ।
दोर्मूले कक्ष आकरे गञ्जो भूरुहि बाणपिप्पलौ ॥ १ ॥

'पुंस्त्रीलिङ्गश्चतुर्दशेऽङ्के शङ्कुः-चतुर्दशेऽङ्कस्थाने वर्त्तमानः शङ्कुशब्दः स्त्रीपुंसलिङ्गः । अयं शङ्कुः इयं शङ्कुः-चतुर्दशमकस्थानम् । यदाह-'एकं दश शतमस्मात्सहस्रमयुतं ततः परं १२
लक्षम् । प्रयुतं कोटिमथार्बुदमब्जं खर्वं निखर्वं च । तस्मान्महासरोजं शङ्कुं सरितां पतिं ततस्त्वन्त्यम् । मध्यं परार्द्धमाहुर्यथोत्तरं दशगुणं तज्ज्ञाः' ॥१॥ पुंसि व्याडिः, स्त्रियां वामनः, पुन्नपुंसकोऽयमिति बुद्धिसागरः । कालादौ तूदन्तत्वात्पुंस्त्वमेव ॥ निरये च दुर्गतिः-निरये वाच्ये दुर्गतिशब्दः स्त्रीपुंल्लिङ्गः । अयं दुर्गतिः इयं दुर्गतिः-निरयः, पुंसि माला-पुरुशाण्डे १६
पाठात् । 'दुर्गतिः स्त्रियामि'त्यमरः । दारिद्र्ये तु क्यन्तत्वात् स्त्रीत्वम् ॥ दोर्मूले कक्षः-भुजमूलेऽभिधेये कक्षशब्दः स्त्रीपुंसलिङ्गः । कक्षः कक्षा-दोर्मूलम् । यद्गौड -'कक्षः पुंसि [illegible] दोर्मूले कच्छवीरुत्तृणेषु च । सैरिभे शुष्कवने च' । माला तु-'भवेद्दसादथ कक्षा' ॥ आकरे गञ्जः-आकरे वाच्ये गञ्जशब्दः स्त्रीपुंसलिङ्गः । गञ्जः गञ्जा-आकरः । यदन्यः-'गञ्ज २०
खनौ' । गञ्जा खनावित्यन्यः । भाण्डागारे पुन्नपुंसको वक्ष्यते, सुरालये तु स्त्रीत्वं प्रतिपद-

---

मिति शेषे आह । मेहे इति उत्सवे । विषुवत्प्रभृतिष्वपीति समरात्रिदिवे काले इत्यर्थः । जघनमिति स्त्रीकट्या अग्रभागः । आमाश्रयस्थानं इति आमस्य आमवाख्यो रोगस्य आश्रयो वाय्वादिकस्य स्थानम् । भुवने इति लोके । जने इति प्रजासु । ध्वज इति पताका । पुण्ड्र इति इह पुण्ड्रशब्देन अश्वस्य स्वाभा २५
विकः श्वेतमुखपट्ट उच्यते । वालधिरिति लोके पुछ । लक्ष्मेति चिह्नम् । वाजीत्यश्वः ॥ २४ ॥

इति श्रीज्ञानविमलोपाध्यायशिष्यवाचनाचार्यश्रीवल्लभगणिविरचिते श्रीहेमचन्द्राचार्यप्रणीतलिङ्गानुशासनवृत्ति-
दुर्गपदप्रबोधे नपुंसकलिङ्गं समाप्तम् ।

पाठेनोक्तम् ॥ भूरुहि वाणपिप्पलौ—भूरुहि वृक्षे वाच्ये वाणपिप्पलशब्दौ स्त्रीपुंसलिङ्गौ। वाण वाणा—झिण्टी। यद्गौड—'झिण्टा स्त्रीपुंसयोर्वाणा वाणिर्मूल्ये पयोधरे। काण्डस्यावयवे पुंसि पूंपत्कनलिपुत्रयो' ॥ पिप्पल पिप्पली—अश्वत्थ । यद्दुर्ग —वृक्षवाचित्वात् स्त्रीत्वमपि। वस्त्रच्छेदनोपकरणे प्रतिपदपाठात्पुंनपुंसकत्वम्। जले तु तन्नामत्वान्नपुंसकत्वम् ॥ १ ॥

नाभि॰ प्राण्यङ्गके प्रधिर्नेमौ कचन वलिर्गृहे कुटः।
श्रोण्योपध्यो॰ कटो भ्रमो, मोहे पिण्डो धुन्टगोलयोः ॥ २ ॥

नाभि प्राण्यङ्गके—प्राण्यङ्गे वाच्ये नाभिशब्द स्त्रीपुंसलिङ्ग । अय नाभि, इय नाभि —प्राण्यङ्गविशेष, यद्गौड —'मुख्यराट्क्षत्रियोर्नाभि पुंसि प्राण्यङ्गके द्वयो। चक्रमध्ये प्रधाने च स्त्रिया कस्तूरिकामदे' ॥ प्रधिर्नेमौ—नेमौ चक्रधाराया वाच्याया प्रधिशब्द स्त्रीपुंसलिङ्ग । अय प्रधि इय प्रधि —नेमि । यदमर —'प्रधि पुमान्' । अरुण स्त्रियामाह। रोगविशेषे तु प्रतिपदपाठात् स्त्रीत्वमेव ॥ कचन वलि—कचनार्थविशेषे वलिशब्द स्त्रीपुंसलिङ्ग । वचनार्थस्यैव निर्देश —अय वलि, इय वलि —उपहार, त्वङ्मांससङ्कोच, जठरावयवश्च । यदरुण —'वलिस्त्वक्सङ्कोचकृता देवताबल च। द्वयमप्युभयलिङ्गम्'। जठरावयवे तु पुंस्यजय । स्त्रिया वामन । गौडस्तु—'पुंसि चामरदण्डे स्यादुपहारे करे क्षुरे। स्त्रिया जराश्लथे चर्मण्युदरावयवे वलि' ॥ 'गृहदारुविशेषे चे'ति विशेष्याह। सन्ध्यावलेस्तु देहिनामत्वात्पुंस्त्वम्। यद्गौड —'शङ्करायतनोत्सृष्टवृषे सन्ध्यावलि पुमान्' ॥ गृहे कुटः—गृहे वाच्ये कुटशब्द स्त्रीपुंसलिङ्ग । कुट कुटी—गृहविशेष । यदमर —'कुटो द्वयो'। घटे हलाङ्गे च पुंनपुंसको वक्ष्यते ॥ श्रोण्योपध्यो॰ कटः—श्रोणौ ओपधौ च वाच्याया कटशब्द स्त्रीपुंसलिङ्ग । कट कटी—श्रोणि । 'कटो ना श्रोणिफलक'मित्यमर । कट कटा—ओपधिविशेष इति दुर्ग । श्रोणावेव ङीप्प्रत्ययविधानादोपधौ कट कटेति

---

त्र्यमिति शङ्कुशब्द। कच्छ इति सजलप्रदेश। वीरुदिति लता। सैरिभे इति महिषे ॥१॥ झिण्टीति लोके कण्टसेलो। वाणिरिति वाक्, तत्र स्त्रियां यथा 'वाणीयवाणी यदि कण्ठगोचरा' (?)। मूल्ये इति लोके मोल तत्र। पयोधरे इति मेघे। काण्डस्यावयवे इति पुरो। पृषत्क इति शरः। अश्वत्थ इति लोके पीपल। वस्त्रच्छेदनोपकरणे इति छिद्यतेऽनेन छेदन वस्त्रस्य छेदन वस्त्रछेदन तस्योपकरण वस्त्रछेदनोपकरण कर्तरीप्रमुख तत्र ॥ १ ॥ प्राण्यङ्गविशेष इति लोके सुंटी। मुख्यराट् इति द्वादशराजमण्डलमध्यवर्ती विजिगीषु, द्वादशराजमण्डली चैवं यदाह 'अरिर्मित्रमरेर्मित्र मित्रमित्रमत परम्। तथारिमित्रमित्र च विजिगीषो पुर स्मृत ॥ १ ॥ पार्ष्णिग्राह स्मृत पश्चादाक्रन्दस्तदन तर। आसारावनयोश्चैव विजिगीषोश्च पृष्ठत ॥ २ ॥ अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तर । अनुग्रहे संहतयोर्व्यस्तयोश्च वधे प्रभु ॥ ३ ॥ मण्डलाद्बहिरेतेषामुदासीनो बलाधिक । अनुग्रहे संहतानां व्यस्ताना च वधे प्रभु ॥४॥ इति ॥ इति नाभिनामा क्षत्रियविशेष । चक्रमध्ये इति चक्रपिण्डिकायां लोके नाहिरिति । प्रधाने इति श्रेष्ठ। उपहार इति बकुलकादि पूजोपकरणम्। त्वङ्मांससङ्कोच इति शरीरे, ढीली इति लोक। जठरावयव इति रेखात्रयम्। गृहदारुविशेषे इति लोके वला इति

भवति । आसनविशेषे त्रिलिङ्गो वक्ष्यते । गवाश्वादिकपोले श्मशाने शवेऽतिशयार्थे च टान्तत्वात्पुंस्त्वमेव । **भ्रमो मोहे**—मोहे अज्ञानविशेषे वाच्ये भ्रमशब्दः स्त्रीपुंसलिङ्गः । भ्रमः भ्रमी–मोहः । 'मोहे भ्रमः' इत्यरुणः । 'भ्रमी निमीलज्ज्वलनानलम्बिते' । अन्यत्र तु घञन्तत्वात्पुंस्त्वमेव । भ्रमः–सन्देहः, भ्रमणं च ॥ **पिण्डो वृन्दगोलयोः**—वृन्दे सत्तनादीनां गोले च वाच्ये पिण्डशब्दः स्त्रीपुंसलिङ्गः । पिण्डः पिण्डी–वृन्दम्, गोलकश्च । यदरुणः—'अशरीरे पिण्डः सङ्घातग्रासयोः' । 'पिण्डी द्वयोः'रित्यमरः । देहे पुन्नपुंसको वक्ष्यते । लोहे तु द्रव्यनामत्वान्नपुंसकत्वमेव । द्वे १–२ अपि वैतालीये ॥ २ ॥

भकनीनिकयोस्तारो भेऽश्लेषहस्तश्रवणाः ।
कणः स्फुलिङ्गे लेशे च वराटो रज्जुशस्त्रयोः ॥ ३ ॥

**भकनीनिकयोस्तारो**—भे नक्षत्रे कनीनिकायां च वाच्यायां तारशब्दः स्त्रीपुंसलिङ्गः । तारः तारा–भम्, कनीनिका च । यदजयः—'तारः इव तारोडुनेत्रमध्ययोः' । 'मुक्ताशुद्धौ पुमांस्तारः' । 'न ना ऋक्षाक्षिमध्ययो'रिति तु गौडः । अन्यत्र तु उच्चै स्वरे मुक्ताशुद्धौ शुद्धमौक्तिके च रान्तत्वात्पुंस्त्वम्, रूप्ये तु द्रव्यनामत्वान्नपुंसकत्वम् । सुग्रीवभार्याबुद्धदेव्योस्तु योनिमन्नामत्वात्स्त्रीत्वम् ॥ **भेऽश्लेषहस्तश्रवणाः**—भे नक्षत्रविशेषे अश्लेषहस्तश्रवणशब्दाः स्त्रीपुंसलिङ्गाः । अश्लेषः अश्लेषा । पुंसि गौडः । अश्लेषस्तु फणिदैवतं स्त्रियां रूढः । हस्तः हस्ता, श्रवणः श्रवणा, नक्षत्रभेदौ । करश्रोत्रयोस्तु पुन्नपुंसकत्वं वक्ष्यते । गौडः—'प्रकोष्ठे विस्तृतकरे हस्तः, करिकरे करे । ऋक्षभेदे द्वयोः पुंसि कलापार्थे कचात्परः' । तथा 'स्त्रीपुंसयोर्ऋक्षभेदे श्रवणः श्रुतिकर्णयोः' ॥ **कणः स्फुलिङ्गे लेशे च**—स्फुलिङ्गे लेशे च वाच्ये कणशब्दः स्त्रीपुंसलिङ्गः । कणः कणा, कणः–स्फुलिङ्गः लेशश्च, यदरुणः—'उभयत्राप्युभयलिङ्गः' । एवं वराटकुम्भयोरपि । अन्यत्र धान्यांशे णान्तत्वात्पुंस्त्वमेव । कृष्णजीरके पिप्पल्यां च तन्नामत्वात्स्त्रीत्वमेव ॥ **वराटो रज्जुशस्त्रयोः**—रज्जौ शस्त्रे च वाच्ये वराटशब्दः स्त्रीपुंसलिङ्गः । वराटः वराटा–रज्जुशस्त्रविशेषौ, अन्यत्र तु कपर्दे श्वेतनामत्वात्पुंस्त्वमेव ॥ भविपुला ॥ ३ ॥

कुम्भः कलशे तरणिः समुद्रार्कांशुयष्टिषु ।
भागधेयो राजदेये मेरुजम्ब्वा सुदर्शनः ॥ ४ ॥

**कुम्भः कलशे**—कलशभाजनविशेषे कुम्भशब्दः स्त्रीपुंसलिङ्गः । कुम्भः कुम्भी–कलशः । अन्यत्र तु गुग्गुलौ बाहुलकान्नपुंसकमेव । कुम्भकर्णसुते देहिनामत्वाद्राशिभेदद्विपाङ्गयोस्तु भान्तत्वात्पुंस्त्वमेव ॥ **तरणिः समुद्रार्कांशुयष्टिषु**—एष्वर्थेषु तरणिशब्दः स्त्रीपुंसलिङ्गः । अयं तरणिः इयं तरणिः–समुद्रः, अर्कः, अंशुः, पतितगोरूपोत्थापनी च यष्टिः । समुद्रा-

प्रसिद्धिः । गृहविशेष इति लोके कुटि । ओषधिविशेष इति वीरण । अतिशयार्थे इति मृतादौ । गोलक इति लोके कवलो । मुक्ताशुद्धौ इति मौक्तिकनैर्मल्ये । फणिदैवत इति अश्लेषानक्षत्रम् । प्रकोष्ठे विस्तृतकरे इति विस्तृतहस्तमाने प्रकोष्ठे । कलापार्थ इति समुदाये । स्फुलिङ्ग इति अग्निकण । एवं वराटकुम्भयोरपीति वराटकुम्भयोर्वक्ष्यमाणयोः । अत एव वराटकुम्भयोर्व्याख्यान-

कयोर्द्वयं । अंगारका । नष्टौ तु वामन । अन्यत्र तु नावि 'गिरि मन्दारि०' इति क्लीबत्वमेव ॥ भागधेयो राजदये—राजदेयेऽर्थे पात्र भागधेयशब्दः स्त्रीपुंसलिङ्गः । भागधेय भागधेयी—राजदेयो करः । पुंस्त्वम् । स्त्रिया मान्या । भागधेयी स्त्रिया पलि । अन्यत्र तु भाग्ये तद्भागत्वात्नपुंसकत्वमेव । भागदायादयोस्तु वाच्यत्वात्पुंसि ॥ मेरुनाम्न्या सुदर्शनः—मेरुनाम्न्या वाच्याया सुदर्शनशब्दः स्त्रीपुंसलिङ्गः । सुदर्शन सुदर्शना—मेरुनाम्न्या । यदाह—'सुदर्शनो मेरुनाम्न्या शक्रपुर्यां विष्णुचक्रयोः । मेरुजम्ब्वां सुदर्शनेत्यन्ये' । अन्यत्र तु विष्णुचक्रे शक्रपुरे च प्रतिपदपाठात्पुंस्त्वमेव । शक्रपुरं सुदर्शनीति कश्चित् ॥ सर्द्धानाविपुत्रा ॥ ४ ॥

करेणुर्गजहस्तिन्योरल्पाख्यापत्यतद्धितः ।
लाजवस्त्रदशा भूम्नीहाद्या प्रत्ययभेदतः ॥ ५ ॥

करेणुर्गजहस्तिन्योः—करेणुशब्दो गजे हस्तिन्यां च प्रत्येकं स्त्रीपुंसलिङ्गः । अयमियं वा करेणुः—गजः हस्तिनी च । रत्नमाला—'करेणुर्गजहस्तिन्योः पुंसि योषिति चेष्यते' । नन्दी च । अमरस्तु—'करेणुरिभ्यां स्त्री नेभे' इत्याह ॥ अल्पाख्या—अल्पेऽर्थेऽमरस्य आख्या नाम स्त्रीपुंसलिङ्गा । अयमलिः इयमली । एवमग्निः अग्निनी, भृङ्गः भृङ्गी इत्यादि ॥ देहिनामत्वात्पुंस्त्वे प्राप्ते योनिमत्त्वाभावाच्च स्त्रीत्वाभावे स्त्रीपुमर्थं वचनम् ॥ आपत्यतद्धितः—अपत्येऽर्थे जातस्तद्धितस्तदन्तः शब्दः स्त्रीपुंसलिङ्गः । अयं औपगवः । इयमौपगवी । एवं वात्स्यः वात्सी, वैदः वैदी, गार्ग्यः गार्गी, चौञ्जायन्यः चौञ्जायनी इत्यादि नन्दिनः । आपत्ये इति किम् ? पौसुम्भं वस्त्रम् । आश्रयलिङ्गत्वमपीच्छन्त्यन्ये । औपगवो ना । औपगवी स्त्री । औपगवं कुलमित्यादि ॥ लाजवस्त्रदशा भूम्नि—लाजशब्दो वस्त्रसम्बन्धिदशावाची च दशाशब्दः स्त्रीपुंसलिङ्गः । तौ च बहुत्व एव प्रयोक्तव्यौ । इमे लाजाः, लाजान् पश्य । इमा लाजा, लाजा पश्य । 'लाजाः पुंभूम्नि' इत्यमरः, स्त्रीलिङ्गोऽपि दृश्यते इति तट्टीका । इमे वस्त्रस्य दशाः, दशान्पश्य । इमा वस्त्रस्य दशाः । दशाः पश्य । यद्गौडः—'दशा वर्त्यामवस्थायां वस्त्राङ्के भूम्नि पुंस्त्रियोः' । वस्त्रेति किम् ? दशा, अवस्था, वर्तिश्च । 'प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थया' प्रतिपदपाठात् स्त्रीत्वम् ॥ ईहाद्या प्रत्ययभेदतः—अघञ्प्रत्ययभेदेन ईहाद्याः शब्दाः स्त्रीपुंसलिङ्गाः । ईह ईहा—वाञ्छा, उद्यमः, चेष्टा च । ऊह ऊहा—तर्कः । स्पर्द्ध स्पर्द्धा—सङ्घर्षः । बाध बाधा—दुःखं निषेधश्च । वल्ग वल्गा—रश्मि । गर्व गर्वा—गर्वितम् । उत्कण्ठ उत्कण्ठा—रणरणकः । व्रीड व्रीडा—त्रपा । जागर जागरा—जागरणम् । चर्च चर्चा—विचारः । भिक्ष भिक्षा—ग्रासप्रमाणम् इत्यादि ॥ पथ्यावक्त्रम् ॥ ५ ॥ अथ कान्ता द्वादश ॥

शुण्डरुचमप्रसेवकौ मल्लकमल्लरशृङ्खलका अपि ।
शल्यकघुटिका पिपीलकशुल्करहुडुक्कतुरुष्कतिन्दुकाः ॥ ६ ॥

---

...सवादक न दर्शयि यात ॥ ३ ॥ मातनगोरूपोत्थापनीति लोकोक्त्या सखिनाम्नी ॥ ४ ॥ ईयमौप... स्त्वमते नपुंसकेऽपि वाच्ये नपुंसकं न भवतीति सूत्रफलम् । प्रदीप इत्यादि एतस्य पूर्वार्द्ध यथा

एते शब्दा स्त्रीपुंसलिङ्गा. । शुण्डिक शुण्डिका–सुरापण । यद्भोज'–शुण्डिकात् शुण्डिकाया वा आगत शौण्डिक' ॥ चर्मप्रसेवकः चर्मप्रसेविका–दृतिः । यदमर'–'भस्त्रा चर्मप्रसेविका' । प्रसेवकोऽपि ॥ सल्लक सल्लकी–गजप्रियतरु, निर्यासविशेषश्चेति अरुण । मल्लक मल्लिका–दीपवर्त्त्याधार', दुर्ग । वृश्चिक वृश्चिकी–सविष कीट, दुर्ग । शल्यक शल्यकी–श्वावित् पुंसि प्रसिद्ध, स्त्रिया तु शल्यकी श्वाविदिति माला । घुटिक' घुटिका–गुल्फ । 'तद्ग्रन्थी घुटिके गुल्फा'वित्यमर । 'घुटिको गुल्फे' इत्यरुण । अर्थप्राधान्या-द्घुण्टक घुण्टिका, घुट घुटी, गुल्फ गुल्फा इत्यपि । यदमर –'द्वयोर्गुल्फा द्वयोर्घुटा' । पिपीलिक' पिपीलिका–वल्मीककृमि स्त्रिया रूढ । पुंसि लक्ष्यम्–'शनैर्याति पिपीलिक' । चुलुक चुलुका–आस्यपूरण वारि, पुंसि रूढ, स्त्रिया तु 'आस्यपूरणी चुलुके'ति दर्प । हुडुक्क हुडुक्का–आतोद्यम्, स्त्रिया लक्ष्यम्–'मुक्तहिक्का हुडुक्का', वाद्यभेदे चेति गौड । तुरुष्क, तुरुष्का–सिह्लक पुंसि रूढ । स्त्रिया तु 'तुरुष्कान्दृ'रिति माला । देशे तु कान्तत्वात्पुंसि । तिन्दुक तिन्दुकी–वृक्षविशेष. । पुंसि रूढ । स्त्रिया त्वमरशेष । तिन्दुकी झणकेत्यादि । फले तु क्लीनपुंसकत्व वक्ष्यते ॥ वैतालीयम् ॥ ६ ॥ अथ गान्तः ॥

शुङ्गोऽथ लञ्चभुजशाटसटाः स्तृपाटः कीटः किटस्फटघटा वरटः किलाटः ।
चोटश्चपेटफटशुण्डगुडाः सशाणाः स्युर्वारिपर्णफणगर्तरथाजमोदाः ॥ ७ ॥

एते शब्दा स्त्रीपुंसलिङ्गा ॥ शुङ्ग शुङ्गा–कन्दल । यद्वाग्भट 'वटप्ररोहै शुङ्गैर्वे'ति । तथा 'पिष्ट्वा मन शिला तद्वदार्द्रया वटशुङ्गया' ॥ अथ चान्तः ॥ लञ्च लञ्चा–उपचार पुंसि लक्ष्यम् 'लञ्चेन कार्यकारिण' । स्त्रिया रूढ ॥ अथ जान्तः । भुज भुजा बाहु । यद-मर –'द्वयोर्भुजबाहू' ॥ अथ टान्ता द्वादश ॥ शाट शाटी–परिधानम्, उष्णीष च दुर्गा-रुणयो । सट सटा–सिंहस्कन्धकेशा । लक्ष्यम् । 'सटच्छटाभिन्नघनेन' 'सिंहकेसरसटासु भूभृताम्' ॥ स्तृपाट स्तृपाटी–परिमाणविशेष, दुर्ग । कीट कीटी–क्रिमिविशेष[11] । कश्चित् । किट किटी–वंशादिपत्तलिका[12], दुर्ग । स्फट स्फटा–फण । यदमर –'स्फटाया तु फणा द्वयो' । घट घटी–कलश दुर्गस्य । वरट वरटा–क्षुद्रजन्तुविशेष[13] । यदमर –'वरटा द्वयो' । किलाट किलाटी–क्षीरविकार[14] । पुंसि रूढ । किलाटिरित्यमरटीका । चोट चोटी–चोटिका[15] । स्त्रीपुंसयोर्मालायाम् । चपेट चपेटा–विस्तृताङ्गुलिपाणितलम् । 'पाणौ चपेटप्रतले' इत्यमर । स्त्रिया रूढ । फट फटा–फण । 'फटाया तु फणा द्वयो' इत्यम-

'मृदुत्यवहित तेजो भोक्तुमर्थान् प्रकल्पते । प्रदीप स्नेहमादत्ते दशया ह्य तरस्थये'ति ॥ ५ ॥ दृतिरिति लोके दीवडी । श्वावित् इति सेहलओ । गुल्फ इति लोके गिरियओ । वल्मीककृमिरिति लोके उदेही । आस्यपूरण वारीति लोके चलु । सिह्लक इति लोके सीह्ला । वृक्षविशेष इति लोके टींट इति नाम्ना प्रसिद्ध ॥ ६ ॥ कन्दल इति वृक्षादीनां नवाङ्कुर । उपचार इति लोके लांच । उष्णीषमिति मोलि । क्रिमि विशेष इति लोके कीडी । वंशादिपत्तलिकेति लोके किडा । क्षुद्रजन्तुविशेष इति लोके पीलीभमरी ।

रटीका ॥ अथ डान्तौ ॥ शुण्ड शुण्डा-सुरा । स्त्रियां रूढः । 'पुंसि शुण्डो मद्य'मिति शाकटायनः । करिहस्ते तु भातिपन्नपाठात्स्त्रीत्वमेव । गुडः गुडा-हस्तिसन्नाहः । पुंसि क्वचित् । स्त्रियाममरटीका ॥ अथ णान्तास्त्रयः ॥ शाण शाणा-निकषः । पुम्यरुणः । स्त्रियां 'यस्त्वत्(तत् ?)रण्ठकठोरास्थिशाणाया तेनयत्यसिम्'। वारिपर्ण वारिपर्णी-कुम्भीनाम शाकम्। यदमरः -'वारिपर्णी तु कुम्भिका' । 'कुम्भीको वारिपर्णे स्या'दित्येके । फण फणा-स्फटा । यदमरः -'फणा द्वयोः' । फणं नपुंसकं मस्करुश्चान्द्रः ॥ अथ तान्तः ॥ गर्त गर्ता-श्वभ्रम् । पुंसि रूढः । स्त्रियां तु गर्ताऽपीत्यमरटीका ॥ अथ थान्तः ॥ रथ रथी-स्यन्दनः । पुंसि रूढः । स्त्रियां तु माघस्य 'रथी युयोजादिधुरा वधूमिव' । अदूरविप्रकर्षेणार्थैक्यम् ॥ अथ दान्तः ॥ अजमोद अजमोदा-ब्रह्मकुशः । पुंसि वाग्भटः । स्त्रियाममरः ॥ वसन्ततिलकम् ॥ ७ ॥ अथ धान्तः ॥

विधकूपकलम्बजित्यवर्ध्रा , सहचरमुद्गरनालिकेरहाराः ।
बहुकरकुसरौ कुठारशारौ वल्लरशफरमसूरकीलरालाः ॥ ८ ॥

एते शब्दाः स्त्रीपुंसलिङ्गाः । विध विधा-प्रकारः । यदमरः -'विधा विधौ प्रकारे च' ॥ अथ पान्तः-कूप कूपी-अन्धुः । अरुणस्य ॥ अथ वान्तः-कलम्ब कलम्बा कलम्बी वा-शाकविशेषः दुर्गस्य । शरे तु तन्नामत्वात्पुंस्त्वमेव ॥ अथ यान्तः-जित्य जित्या हलिः, स्त्रियां रूढः । पुंसि माला 'जित्यश्च हलिसञ्ज्ञकः' ॥ अथ रान्ता द्वादश ॥ वर्ध्र वर्ध्री-चर्मरज्जुः । पुंसि रूढः । स्त्रियां तु 'नध्री वर्ध्री'ति माला। सहचर सहचरी-लतासमूहविशेषः । यदमरः -'तस्मिन्सहचरी द्वयोः' । मुद्गर मुद्गरी-लोष्टादिभेदनोपकरणम् । पुंसि गौडः -'मुद्गरः मल्लिकाभेदे पुंसि लेष्ट्वादिभेदने'। दाने (?) स्त्रियां तु रूढिः । नालिकेर नालिकेरी-तरुविशेषः । पुम्यमरः -'नालिकेरस्तु लाङ्गली' । स्त्रियां लक्ष्यम्-नालिकेरीफलाम्भः' । फले तु तन्नामत्वान्नपुंसकत्वमेव । हार हारा-मुक्तादाम । गौडशेषः । बहुकर बहुकरी-सम्मार्जनी । स्त्रियां रूढः । पुंसि माला 'खलपूः स्याद्बहुकरः' । कृसर कृसरा-'तिलौदन' इति हर्षाम्णौ । कुठार कुठारी-परशुः । यदमरः -'द्वयोः कुठारः' ॥ शार शारी-अयानयीनं वैराटकश्चेति हर्षः । शार शारा-शसकः इत्यरुणः । वायौ वर्णे च तन्नामत्वात्पुंस्त्वमेव । शबले तु वस्तुनि गुणवृत्तित्वादाश्रयलिङ्गः । वल्लर वल्लरी-मञ्जरी । अर्थप्राधान्या-

क्षीरविकार इति वल्ही । शाटिकेति लोके साडी । सुरेति मद्यम् । निकष इति लोके सराण । श्वभ्रमिति लोके खाडि । स्यन्दन इति रथः । अदूरविप्रकर्षणार्थैक्यमिति न दूरे विप्रकर्षः अपि तु आसन्नमित्यर्थः । अनिरायेन रथस्य रथ्याश्च विदूरको नास्ति अतोऽर्थैक्यम् । ब्रह्मकुश इति लोके अजमोद इत्येव प्रसिद्धिः ॥ ७ ॥ लतासमूहविशेष इति सन्चगस्या झिंटी, लोके कटासेल्अो । लोष्टादिभेदनोपकरण इति अत्रा दिशब्दात् कर्करादिग्रहणेन कर्करादिभेदनोपकरणमपि । मल्लिकाभेद इति मोगरी । तरुविशेष इति लोके नालेर । सम्मार्जनीति लोके बुहारी । तिलौदन इति तिलतण्डुलमाषत्रयलक्षणं, लोके खीसरीति प्रसिद्धिः । यदाह तिलतण्डुलमाषैस्तु कृसरा त्रिसरा त्रयी इति । अयानयीन इति लोके सोगठा ।

न्मञ्जर' मञ्जरीत्यपि । यद्गौड –'अष्टीथावुभौ वल्लरमञ्जरौ' । शफर' शफरी–मत्स्यविशेष । यदमर –'शफरी द्वयो' । मसूर मसूरा–व्रीहिभेद, वेश्या च । अर्थप्राधान्यान्मसुर मसुरेत्यपि । यदाह–'मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति । मसूरमसुरौ च द्वावेताचप्येतयोर्मतौ' ॥ व्रीहौ मसूर, क्लीबेऽपि । यद्गौड –'मसुरोऽस्त्रियाम्' ॥ अथ लान्ताः पञ्च ॥ कील कीला–कफण्यादि' । यद्गौड –'कीला स्यात्कफणौ स्तम्भशङ्कुज्वालेषु कीलवत् । ज्वालायामर्थप्राधान्यात् ज्वालेत्यपि । यदमर –'द्वयोर्ज्वालकीलौ' । राल राला–सर्जरस । यदमरटीका रालापि ॥ औपच्छन्दसिकम् ॥ ८ ॥

पटोलः कम्बलो भल्लो दंशो गण्डूपवेतसौ ।
लालसो रभसो वर्चिवितस्तिकुटयस्त्रुटिः ॥ ९ ॥

एते शब्दा स्त्रीपुंसलिङ्गा । पटोल पटोला–ओषधिभेद । पुंसि दुर्ग' । स्त्रिया रूढ' । कम्बल कम्बली–ऊर्णं वास, गोगलचर्म च दुर्गबुद्धिसागरयो । भल्ल भल्ली–शस्त्रभेद । यद्गौड –'भल्लातक्या स्त्रिया भल्ली शस्त्रमिथनपुंसकम्' । अथ शान्तः । दंश दंशी–क्षुद्रजन्तुविशेष । यदमर –'दंशस्तु वनमक्षिका । दंशी तज्जातिरल्पा स्यात्' । अन्यत्र तु धन्वन्तत्वात्पुंसि ॥ अथ पान्तः ॥ गण्डूप गण्डूपा–कैरजलादिमुखपूरणम् । यदमर'–'गण्डूपो द्वयोश्च मुखपूरणम्' । गण्डूष क्लीबमित्यपि । इत्यमरटीका ॥ अथ सान्तास्त्रयः ॥ वेतस वेतसी–वानीर । हर्षे । लालस लालसा–'तृष्णातिरेके याच्ञायामौत्सुक्ये लालसा द्वयो' । तद्वत्याश्रयलिङ्ग । रभस रभसा–पौर्वापर्याविचार । पुंसि गौड –'रभसो हर्षवेगयो' । स्त्रिया तु माघस्य 'क्रमते नभसो रभसयेव' ॥ अथेदन्तास्त्रिचत्वारिंशत् । अथ वर्चि इय वर्चि –वस्त्रदशा । यदमरटीका–'पाठभेदेन वर्त्तयो द्वयो' । दीपवस्त्रदशयोस्तु स्त्रीलिङ्ग उक्त ॥ अय वितस्ति इय वितस्ति –विततांगुष्ठकनिष्ठ कर । पुंस्यमर –'वितस्तिर्द्वादशाङ्गुल' । 'वितस्ति स्त्री कनिष्ठये'ति तु माला । अथ कुटि इय कुटि –स्वल्पवास । दुर्ग । अथ त्रुटि इय त्रुटि –अवस्था । क्षणद्वय चेत्यरुण ॥ पथ्यावक्त्रम् ॥ ९ ॥

ऊर्मीशम्यौ रत्यरत्नी अर्चीचिर्लव्यण्याणिश्रेणयः श्रोण्यरण्यौ ।
पार्ष्णीशल्यौ शाल्मलिर्यष्टिमुष्टी योनीमुन्यौ स्वातिगव्यूतिरस्त्यः ॥ १० ॥

एते शब्दा स्त्रीपुंसलिङ्गा । अयमूर्मि इयमूर्मि –वीच्यादि । यद्गौड –'ऊर्मि स्त्रीपुंसयोर्वीच्या प्रकाशे वेगभङ्गयो । वस्त्रसङ्कोचलेखाया[10] वेदनापीडयोरपि[11]' ॥ अय शमि इय शमि,–वृक्षविशेष । हर्षस्य । अय रत्नि इयं रत्नि –बद्धमुष्टि कर । अयमरत्नि इयमरत्नि'–

---

धेरोटक इति कपर्दक । मौसक इति कुत । कफणौ इति लोके कूहणी ॥ ८ ॥ क्षुद्रज तुविशेष इति लोके डांस । कैरजलादि मुखपूरणमिति लोके चल्लू । पाठभेदेनेति 'स्त्रियां बहुत्वे वस्त्रस्य दशा स्युर्वर्त्तयो द्वयो' इत्यत्र वर्त्तयो द्वयोरित्ययमेव पाठ । अन्ये तु दशास्तु वस्तयो द्वयोरिति सूत्रपाठे पाठान्तर तेन । विततांगुष्ठकनिष्ठ कर इति लोके वहिधि ॥ ९ ॥ वीच्यामिति कल्लोले । प्रकाशे इति आलोके । वेगभङ्गयोरिति जवे विच्छित्तौ च । वस्त्रसङ्कोचलेखायामिति लोके सल इति प्रसिद्धिस्तत्र । वेदनेति ज्ञातम ।

याहुः ॥ अथ गवेधु इव गवेधु –तृणधान्यविशेषः । गवेधुर्ना गवेधुकेति माला । 'स्त्री गवेधुर्गवेधुके'त्यमरः ॥ अथैकारान्तः । अथ रा इव रा –द्रव्यम् । रायो राय , अराल ॥ अथौदन्तः । अथ गौ इव गौ –गोशब्दश्च 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले' इत्यर्थे दृष्ट्वा स्त्रिया पुंसि गौरिति वचनात् स्वर्गे पुल्लिङ्गः । दिशि भूमौ च स्त्रीलिङ्गः । शेषेष्वर्थेषु स्त्रीपुंसलिङ्ग इत्येके । स्वर्गान्ते पुंसि वागादौ स्त्रियां पशौ तूभयम् । यथेयं गौरेषु । अयं गौः दान्तः । जलाक्ष्णोस्तु क्लीब इत्यन्ये । अपरे तु पशौ धेनुवृषभभेदेन स्त्रीपुंसलिङ्गोऽन्यत्र स्त्रीलिङ्ग एवेत्याचक्षते । 'स्वर्गे रश्मौ च वज्रे च बलीवर्दे च गौः पुमान्' । 'स्त्री सौरभेयीदिग्बाणदृग्वाग्भूजलेषु भूमि च' इति गौडः । व्याडिस्त्वविशेषेण स्त्रीपुंसलिङ्गोऽयमित्याह, तथैव चास्माभिरप्यभिहितः ॥ अथ व्यञ्जनान्तः–अथ भा इव भा –कान्तिः । स्त्रियां गौडः –'प्रभावे किरणे भा स्त्री' । अन्यस्तु 'प्रभायामपि भा शब्दः सन्तः पुल्लिङ्ग एव चे'त्याह ॥ वितानम् ॥ १२ ॥

॥१२॥ ❁❁❁❁❁❁ स्त्रीपुंसलिङ्गं समाप्तम् । ❁❁❁❁❁❁

## अथ पुंनपुंसकलिङ्गम् ।

पुंनपुंसकलिङ्गोऽब्जः शङ्खे पद्मोऽब्जसङ्ख्ययोः ।
कंसोऽपुंसि कुशो बर्हिर्वालो ह्रीबेरकेशयोः ॥ १ ॥

पुंनपुंसकलिङ्गोऽब्जः शङ्खे–अब्जशब्दः शङ्खे वाच्ये पुल्लिङ्गो नपुंसकलिङ्गश्च । अब्जः अब्जम्–शङ्खः अन्यत्र तु यथाप्राप्तम् । यद्गौडः –'अब्जो धन्वन्तरौ चन्द्रे शङ्खे क्लीबेऽम्बुजे' ॥ पद्मोऽब्जसङ्ख्ययोः–अब्जे सङ्ख्याविशेषे च वाच्ये पद्मशब्दः पुंनपुंसकः । पद्मः पद्मम्, अब्जसङ्ख्याविशेषश्च । पद्मकादावपीत्यन्ये । यद्गौडः –'पद्मोऽस्त्री पद्मके व्यूहे निधिसङ्ख्यान्तरेऽम्बुजे । स्त्री पद्मा कुञ्जिकायां लक्ष्म्यां नागान्तरे नरि' ॥ अन्यत्र तु यथाप्राप्तमेव । कंसोऽपुंसि–अपुंसि नरादन्यत्रार्थे कंसशब्दः पुंनपुंसकः । कंसः कंसम्–मानविशेषः, पानपात्रम्, कांस्यं च दुर्गारुणयोः । पुंसि तु कंसः पुरुषविशेषः ॥ कुशो

---

[१३] चिर्भिटीति लोके काकडी । खदनिकेति पाटस्थानम् । तृणधान्यविशेष इति लोके वरटी । अयमिति गोशब्दः ॥ १२ ॥

इति श्रीज्ञानविमलोपाध्यायशिष्यवाचनाचार्यश्रीवल्लभगणिविरचिते श्रीहेमचन्द्राचार्यकृतलिङ्गानुशासनवृत्ति दुर्गपदप्रबोधे स्त्रीपुंसलिङ्गं समाप्तम् ।

पद्मके इति पद्मकाख्ये गन्धद्रव्ये । कुञ्जिकायामिति ओषधिविशेषे । मानविशेषे इति हिरण्यमा-

बर्हिः—कुशशब्दः पुन्नपुंसको बर्हिर्दर्भश्चेदाख्या भवति । कुशः कुशम्—दर्भः । रामसुते देहिनामत्यायोक्तृद्वीपान्तरयोस्तु प्रतिपदपाठात्पुंसि । यद्गौडः—'रज्ज्वा कुशा कुशो योक्त्रे न स्त्री दर्भे पुनर्द्वयोः । कुशे लोहविकारे स्यात्त्रिषु पापिष्ठमत्तयोः' ॥ अपरोऽर्थः—बर्हिःशब्दः पुन्नपुंसकः, कुशो दर्भश्चेद्वाच्यो भवति । अयं बर्हिः इदं बर्हिः—कुशः । पुंसि गौडः—'बर्हिर्ना कुशशुष्मणोः' । षण्ढेऽरुणः ॥ बालो ह्रीबेरकेशयोः—ह्रीबेरे केशे च वाच्ये बालशब्दः पुन्नपुंसकः । बालः बालम्—ह्रीबेरम्, केशश्च । ह्रीबेरे पुंसि शाश्वतः । षण्ढेऽमरः । केशे पुन्नपुंसको दुर्गस्य । अन्यत्र तु यथाप्राप्तम् । बालः करिबालधिः । प्रतिपदपाठात्पुंस्त्वम् । डिम्भमूढवाचिनस्तु गुणवृत्तित्वादाश्रयलिङ्गतैव । डिम्भेऽपि पुन्नपुंसकोऽमाविति दुर्गनन्दिनौ । बालः बालम्—शिशुः । पथ्यावक्त्रम् ॥ १ ॥

द्वापरः संशये छेदे पिप्पलो विष्टरोऽतरौ ।
अब्दो वर्षे दरस्त्रासे कुकूलस्तुषपावके ॥ २ ॥

द्वापरः संशये—संशये सन्देहे द्वापरशब्दः पुन्नपुंसकः । द्वापरः द्वापरम्—संशयः । पुंस्यमरः । 'षण्ढे तु द्वापरं संशये युगे' इति माला । अन्यत्र तु यथाप्राप्तम् । द्वापरः युगविशेषः । प्रतिपदपाठान्नपुंसकत्वम् ॥ छेदे पिप्पलः—छिद्यतेऽनेनेति छेदो वस्त्रच्छेदनोपकरणम् । तस्मिन्वाच्ये पिप्पलशब्दः पुन्नपुंसकः । पिप्पलः पिप्पलम्—वस्त्रच्छेदनोपकरणम् । पुंसि रुद्रः । षण्ढे गौडः—'पिप्पलं सलिले वस्त्रच्छेदभेदे च ना तरौ । निरंशुले पक्षिभेदे षणायामपि पिप्पली' । स्वार्थिके के पिप्पलकम्—स्तनवृन्तम्, सीवनसूत्रं च ॥ विष्टरोऽतरौ—तरोरन्यत्रार्थे विष्टरशब्दः पुन्नपुंसकः । विष्टरः विष्टरम्—आसनम्, बर्हिर्मुष्टिश्च । 'विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्' इत्यमरः । 'षण्ढे विष्टरं करीरमतरौ' इत्यरुणः । तरौ तु तन्नामत्वात्पुंस्त्वमेव ॥ अब्दो वर्षे—अब्दशब्दो वर्षे संवत्सरे वाच्ये पुन्नपुंसकः । अब्दः अब्दम्—वर्षम् । यदरुणः—'अब्दमपयोदम्' । मेघे तु तन्नामत्वात्पुंस्त्वमेव ॥ दरस्त्रासे—दरशब्दस्त्रासे भये वाच्ये पुन्नपुंसकः । दरः दरम्—भयम् । 'दरोऽस्त्रियां भये' इत्यमरः । श्वभ्रे त्रिलिङ्गो वक्ष्यते । ईषदर्थे त्वव्ययं देश्यपदं च । यथा 'दरदलितहरिद्रापिञ्जराण्यङ्गकानि' ॥ कुकूलस्तुषपावके—तुषपावके तुषाग्नौ वाच्ये कुकूलशब्दः पुन्नपुंसकः । कुकूलः कुकूलम्—तुषपावकः । 'ना तु तुषानलः' इत्यमरः । षण्ढेऽरुणः, लक्ष्यं च—'केलीकुकूलं बलात्' । अन्यत्र तु लान्तत्वान्नपुंसकत्वम् । कुकूलं शङ्कुमान् गर्तः । पथ्यावक्त्रम् ॥ २ ॥

परीवादपर्यङ्कयोर्जन्यतल्पौ तपोघर्मवत्सानि माघोष्णहृत्सु ।
वटस्तुल्यतागोलभक्ष्येषु वर्णः सितादिस्वराद्यो रणे संपरायः ॥ ३ ॥

नम् । पानपात्रमिति लोके कांसीयभो । कांस्यमिति लोके कासा थालीप्रमुखम् । तुष्मेति अग्निः । डिम्भे इति शिशौ । असौ इति बालशब्दः ॥ १ ॥ वस्त्रच्छेदनोपकरणमिति लोके कातरणीप्रमुखम् । निरंशुले इति थापत्रविशेषे । स्तनवृन्तमिति चूचुकम् । सीवनसूत्रमिति लोके सींवणडोरा । श्वभ्रे इति

**परीवादपर्यङ्कयोर्जन्यतल्पौ**—जन्यशब्द॰ परीवादे कौलीने वाच्ये तल्पशब्दश्च पर्यङ्के पुनपुसक । जन्य जन्यम्—परीवाद । 'जन्य स्याज्जनवादेऽपी'त्यमरः । पण्ढे यथा— 'जन्य हट्टे परीवादे सयुगे जैनके पुन । जन्य स्याज्जननीये च जन्या मातृसखीमुदो ॥ जन्यो वैरवधूज्ञातिप्रियभृत्यहितेऽपि च' । तल्प तल्पम्—पर्यङ्क । पुसि भट्टि —'तांस्तया तर्जिता सर्वा मुरैर्भीमा यथागतम् । ययु सुपुप्सवस्तल्पान् भीमैर्वचनकर्मभि ' ॥ 'तल्प शय्याट्टदारेषु' इत्यमर । रणमण्डपेऽट्टे दारेषु च प्रतिपदपाठान्नपुसकत्वमेव । **तपोघर्मवत्सानि माघोष्णहृत्सु**—तप शब्दो माघमासे, घर्मशब्द उष्णे शीतविरोधिनि, वत्सशब्दश्च हृदि वक्षसि वाच्ये पुनपुसक । अय तपा इद तप —माघ । 'तपो माघ' इत्यमर । तप 'कृच्छ्राचरणमाघा'वित्यरुण, । शिशिरर्तौ ऋतुनामत्वात्पुसि । अन्यत्र द्विस्वरसन्तत्वात्क्लीनम् । यद्गौड —'व्रते धर्मे तप क्लीव ना शिशिरर्तुमाघयोः' । घर्म्म घर्म्मम्—उष्णम् । पुसि रूढ । पण्ढे त्वमरलिङ्गशेषे—'उष्ण घर्म्म'मिति । स्वेदे ग्रीष्मे च मान्तत्वात्पुस्त्वम् । वत्स वत्सम्—हृद् । पुस्यरुण । क्लीबे गौड —'पुत्रादौ तर्णके वर्षे वत्स क्लीव तु वक्षसि' । तर्णकवत्सरयोस्तु देहिवर्षनामत्वात्पुस्त्वम् ॥ **वटस्तुल्यतागोलभक्ष्येषु** । वटशब्दस्तुल्यतायां गोलके भक्ष्ये च वाच्ये पुनपुसक । वट वटम्—तुल्यता गोलक भक्ष्यविशेषश्च हर्पोरुणयो । भक्ष्ये स्वार्थिके के वटक वटकम् । न्यग्रोधरक्षो च त्रिलिङ्गो वक्ष्यते, न्यग्रोधफले तु फलनामत्वान्नपुसकत्वमेव । **वर्णः सितादिस्वराद्यो** वर्णशब्द सितादौ स्वरादौ च वाच्ये पुनपुसक । वर्ण वर्णम्—सितकृष्णादिरूपम्, स्वराद्यक्षर च दुर्गहर्षयो । विलेपनेऽपीत्येके । कुङ्कुमे तु तन्नामत्वान्नपुसकत्वमन्यत्र तु णान्तत्वात् पुसि, यद्गौड —'स्तुतौ द्विजातौ शुक्लादौ भेदरूपयशोगुणे । ना चित्रकम्बले वर्णो न स्त्री विलेपनेऽक्षरे' ॥ **रणे सम्परायः**—रणे युद्धे वाच्ये सम्परायशब्द पुनपुसक । सम्पराय सम्परायम्—रणम् । पुसि माला । रणनामत्वात्पण्ढ इति देवनन्दी । अन्यत्र तु घञन्तत्वात्पुस्त्वमेव । सम्पराय —आपत्ति , आयतिश्च ॥ भुजङ्गप्रयातम् ॥ ३ ॥

सैन्धवो लवणे भूत' प्रेते तमो विधुन्तुदे ।
खदायौ कसरे कृच्छ्र व्रते शुक्रोऽग्निमासयोः ॥ ४ ॥

---

इह षष्ठशब्देन गुरु त्रय ॥ २ ॥ परीवाद इति लोकापवाद । हट्टे इति लोके हाट । सयुगे इति रणे । जैनके इति पितरि । मातृसखीति मातुर्वयस्या । मुदिति हर्ष । वैरवधूज्ञातिप्रियभृत्यहिते इति वरवधू इति पद ज्ञात्यादिषु योज्यते, तदा वरवधूज्ञाति वरवधूप्रिय वरवधूभृत्या इति तेषां हिते, कोऽर्थ ? जामातृवधुवर्गे नवोढानुचरादिके इत्यर्थ । यदाहु । 'जन्यो जामातृवत्सले । जनके जननीये च नवोढानुचरादिके इति । 'तांस्तया तर्जिता सर्वा मुरैर्भीमा यथागतम् । ययु सुपुप्सवस्तल्पान् भीमैर्वचनकर्मभि ' ॥ १ ॥ एतद्व्याख्या—ता सर्वा सुपुप्सव स्वप्तुमिच्छव स्त्रिय यथागत आगमनमनतिक्रम्य यथा स्यात्तथा वचनकर्मभि कृत्वा तल्पान् शय्या ययु प्रापु । किंविशिष्टा ता ? तया त्रिजटया राक्षस्या तर्जिता । अत एव भीमर स्त्रा ॥ तर्णक इति वाछके । तुल्यतेति सादृश्यम् । गोलक इति लोके गोळओ । भक्ष्यविशेष इति लोके केवडा । भेदे इति प्रकार । रूपमिति आकार । गुणे इति दोपेतर । चित्रमिति

**सैन्धवो लवणे**–लवणे वाच्ये सैन्धवशब्दः पुन्नपुंसकः । सैन्धवः सैन्धवम्–लवणम् ॥ **भूतः प्रेते**–प्रेतेऽभिधेये भूतशब्दः पुन्नपुंसकः । भूतः भूतम्–प्रेतः द्वावपि हर्षवामनयोः । गौडश्च–'सैन्धवोऽस्त्री माणिमन्थे नाऽश्वसिन्धुभवे त्रिषु' । अन्यत्र तु भूतं पृथिव्यादि । भूतानि प्राणिनः । प्रतिपदपाठान्नपुंसकत्वे अतीत-सत्य-युक्त-समानवाचिनस्तु गुणवृत्तित्वादा-श्रयलिङ्गतैव ॥ **तमो विधुन्तुदे**–विधुन्तुदे वाच्ये तमःशब्दः पुन्नपुंसकः । अयं तमा इव तमः–राहुः 'तमा राहाविं'त्यजयः । क्लीबे तु गौडः । 'क्लीबं तमोगुणे शोके सैंहिके-याऽन्धकारयोः' ॥ **स्वदायौ कस्वरे**–एतौ कस्वरे धने वाच्ये पुन्नपुंसकौ । स्वः स्वम्–कैस्वरम् । अन्यत्र स्वः आत्मा स्वभावो ज्ञातिश्च । प्रतिपदपाठात्पुंस्त्वमेव । यद्गौडः–'स्वो ज्ञातावात्मनि क्लीबे त्रिष्वात्मीये स्त्रियां धने' । दायः दायम्–धनम् । पुंस्यजयः । पण्डेऽ-रुणः । अन्यत्र तु घबन्तत्वात्पुंसि । यद्गौडः–'पुमान्विभज्य पित्रर्थे यौतकाद्यर्थदानयोः । सोल्लुण्ठभाषणे दायः' ॥ **कृच्छ्रं व्रते**–कृच्छ्रशब्दो व्रते वाच्ये पुन्नपुंसकः । कृच्छ्रः कृच्छ्रम्–सान्तपनादिव्रतम् । यत्स्मृतिः–'त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम् । त्र्यहं परं च नाभीयात्कृच्छ्रं सान्तपनं स्मृतम्' ॥ हर्षटीका–'कृच्छ्रं तपसि' । दुःखपापयोस्तु नामत्वान्नपुंस-कत्वमेव ॥ **शुक्रोऽग्निमासयोः**–अग्नौ मासे च वाच्ये शुक्रशब्दः पुन्नपुंसकः । शुक्रः शुक्रम्–अग्निः ज्येष्ठमासश्च । पुंसि गौडः–'ज्येष्ठाग्निकाव्यशुभ्रे ना शुक्रं रेतोऽक्षिरोगयोः' । क्लीबे तु दुर्गः । पञ्चात्मकम् ॥ ४ ॥

कर्पूरस्वर्णयोश्चन्द्र उडावृक्षं छदे दलः ।
धर्मः स्वभावे रुचको भूपाभिन्मातुलुङ्गयोः ॥ ५ ॥

**कर्पूरस्वर्णयोश्चन्द्रः**–कर्पूरे स्वर्णे च वाच्ये चन्द्रशब्दः पुन्नपुंसकः । चन्द्रः चन्द्रम्–कर्पूरम् स्वर्णं च । पुंसि गौडः–'चन्द्रः कर्पूरकम्पिल्लसुधांशुस्वर्णवारिषु' । 'क्लीबे चन्द्रं स्वर्णे च कर्पूरे' इत्यजयः ॥ **उडावृक्षम्**–उडौ नक्षत्रे वाच्ये ऋक्षशब्दः पुन्नपुंसकः । ऋक्षः ऋक्षम्–भम् । यद्बोटः–भल्लूके शोणके नक्षोऽनक्षत्रे पुन्नपुंसकः । **छदे दलः**–छदे पर्णे वाच्ये दलशब्दः पुन्नपुंसकः । दलः दलम्–छदः 'दलं पत्रे' इत्यजयः । पण्डे रूढः । अन्यत्र तु शस्त्रीच्छदे खण्डे च टान्तत्वान्नपुंसकत्वमेव ॥ **धर्मः स्वभावे**–स्वभावे स्वरूपे वाच्ये धर्मशब्दः पुन्नपुंसकः । धर्म्मः धर्म्मम्–स्वभावः । यन्माला–'धर्म्मस्तु नरपण्ढयोः' । अन्यत्र तु पुण्योपाये नपुंसकत्वमुक्तम् । आचारे यमे न्याये ऋतौ चापे उपमायामहिंसायामुपनिषदि च मान्तत्वात्पुंस्त्वमेव ॥ **रुचको भूपाभिन्मातुलुङ्गयोः**–भूपाभिदि ग्रैवेयके मातुलुङ्गे

मालेख्यम् । कम्बल इति गजाद्यास्तरणम् ॥ ३ ॥ माणिमन्थ इति नदीभवे लवणे । कैस्वरमिति धनम् । यौतकाद्यर्थ इति यौतकशब्देन लोके दाइजो तदादिरर्थो यौतकाद्यर्थः । सोल्लुण्ठभाषणे इति अहङ्कारवचने । काव्य इति उशना ॥ ४ ॥ कम्पिल्ल इति लोके कपीलो । शोणके इति अरलुवृक्षे । पर्णे इति पत्रे । शस्त्रीच्छदे इति असाकारे । पुण्योपाये इति पुण्यस्य उपायो दानयागादि- तपः । यमे इति इयान्ते । उपमायामिति साम्ये । उपनिषदीति तत्त्वे । ग्रैवेयकमिति बालानामुरःकण्ठभूषा ।

च वाच्ये रुचकशब्दः पुन्नपुंसकः । रुचकः रुचकम्–ग्रैवेयकं बीजपूरं च । आद्ये पुंस्य-रुण । क्लीबे तु 'सौवर्चलं मातुलुङ्गं शिला चन्दनपेषणी। ग्रीवाभरणकं चेषु चतुर्षु रुचकं स्मृतम्' । अन्ये (?) । 'ना निष्कमातुलिङ्गयो'रिति गौडः । अन्यत्र तु सौवर्चले लवणना-मत्वाच्छिलाया तु चन्दनपेषण्या प्रतिपदपाठान्नपुंसकत्वमेव ॥ मविपुला ॥ ५ ॥

पाताले वाडवो वर्ध्रः सीसे आमलकः फले ।
पिटजङ्गलसत्त्वानि पिटकामासजन्तुषु ॥ ६ ॥

पाताले वाडवः–पाताले वाच्ये वाडवशब्दः पुन्नपुंसकः । यदाह–'वाडवं करणे स्त्रीणामौर्वे विप्रेऽपि वाडवः' । पाताले पुन्नपुंसकः ॥ वर्ध्रः सीसे–सीसे सीसके वाच्ये वर्ध्रशब्दः पुन्नपुंसकः । वर्ध्रः वर्ध्रम्–सीसम् । 'वर्ध्रो ने'ति माला । षण्ढेऽरुणः । अन्यत्र तु चर्मरज्जौ स्त्रीपुंसत्वमुक्तम् ॥ आमलकः फले–फले वाच्ये आमलकशब्दः पुन्नपुंसकः । आमलकः आमलकम्–फलम् । अमरलिङ्गशेषः । पिटजङ्गलसत्त्वानि पिटकामासजन्तुषु । पिटका भाजनविशेषस्तस्यां मांसे जन्तौ च वाच्ये यथासङ्ख्यं पिटजङ्गलसत्त्वशब्दाः पुन्नपुंसकाः । पिटः पिटम्–पिटका । अन्यत्र तु छर्दौ ओकर्पफले च प्रतिपदपाठान्नपुंसकत्वमेव । जङ्गलः जङ्गलम्–मांसम् । यद्गौडः–'जङ्गलो निर्जले देशे त्रिलिङ्गः पिशिते स्त्रियाम्' । सत्त्वः सत्त्वम्–जन्तुः । यदमरः–'सत्त्वमस्त्री तु जन्तुषु' । जन्तुविशेषोऽपि जन्तुः, तेन पिशाचादावपि पुन्नपुंसकः । यत्पुंसि माला–'सत्त्वः प्राणिपिशाचाद्यो' । क्लीबेऽजयः । उपलक्षणत्वाद्गुणप्राणयोरपि । सत्त्वः सत्त्वम्–गुणः प्राणश्च । बुद्धिसागरः । अन्यत्र तु गुणविशेषादौ प्रतिपदपाठान्नपुंसकत्वमेव ॥ पथ्यावक्त्रम् ॥ ६ ॥

मधुपिण्डौ सुरातन्वोर्नाम शेवालमध्ययोः ।
एकाद्रात्रः समाहारे तथा घृतकूलकौ ॥ ७ ॥

मधुपिण्डौ सुरातन्वोः–सुरायां मृद्वीकामद्ये, तनौ च वाच्यायां यथासङ्ख्यं मधुपिण्डशब्दौ पुन्नपुंसकौ । अयं मधुः इदं मधु–सुरा दुर्गस्य । अन्यत्र तु क्षौद्रे पुष्परसे च नपुंसकत्वमुक्तम् । दैत्ये चैत्रे मधूके चोदन्वत्त्वात्पुंस्त्वमेव । अयं पिण्डः इदं पिण्डम्–तनुः, बुद्धिसागरः । अन्यत्र तु लोहे द्रव्यनामत्वान्नपुंसकत्वम् । वृन्दगोलयोस्तु स्त्रीपुंसत्व-मुक्तम् । नाम शेवालमध्ययोः–शेवालमध्ययोर्नाम पुन्नपुंसकम् । शेवालनाम–शेवालः शेवालम् । कश्चित् । शेवलः शेवलम् शैवलः शैवलमित्यादि । पुंसि दुर्गः । षण्ढे माला ॥ मध्यनाम–मध्यः मध्यम्, मध्यमः मध्यमम् । 'मध्योऽस्त्री'त्यमरः । 'वा ना च मध्यमं'

शिला चन्दनपेषणीति यस्यां चन्दनपेषणं क्रियते सा शिला लोके ओरसियओ । निष्क इति वक्षोभूषणम् ॥५॥ करणे स्त्रीणामिति स्त्रीणां करणे वात्स्यायनप्रसिद्धे । और्वे इति दावानले । चर्मरज्जौ इति लोके वाधरी सत्र । पिटका इति लोके पेटी पिढी चंगेरी इति वा प्रसिद्धे । ओकर्पफले इति शारिफलके, चतुरङ्ग फलादिके इत्यर्थः ॥ ६ ॥ सुरेति–सुराशब्देनात्र द्राक्षामद्यं उच्यते । मधूके इति महुडानाम्नि वृक्षे ।

इति माला । गौडस्तु—'मध्यदेशे स्वरे मध्ये मध्यमो मध्यजे त्रिषु । कर्णिकाऽङ्गुलिराकासु दृष्टरज स्त्रिया स्त्रियाम् ॥ त्र्यक्षरश्छन्दसि स्त्री स्यात्' । अवलग्न अवलग्नम्, विलग्न विलग्नमित्यादि । एतयो पुंस्त्वे माला । क्लीबे रूढि । गौडश्च—'विलग्न न स्त्रिया मध्ये त्रिषु स्याल्लग्नमात्रके' ॥ एकाद्रात्रः—रात्र इति कृतसमासान्तो रात्रिशब्द परिगृह्यते, स एकशब्दात्पर पुन्नपुंसक । असमाहारार्थं वचनम् । एका चासौ रात्रिश्च एकरात्र एकरात्रम् । शाकटायनः । रात्रान्तत्वात्पुंस्त्वे प्राप्ते वचनम् ॥ समाहारे—समाहार इति द्विगुसमाहारो द्वन्द्वसमाहारश्च गृह्यते । तस्मिन्वर्तमानो रात्रिशब्द पुन्नपुंसक । द्वे रात्री समाहृते द्विरात्र द्विरात्रम् । एव त्रिरात्र त्रिरात्रम्, चतूरात्र चतूरात्रम्, पञ्चरात्र पञ्चरात्रम्, षड्रात्र षड्रात्रम्, सप्तरात्र सप्तरात्रम् । पुंस्त्वे रात्राह्नाविति सूत्रम् । षण्ढे वामन । गणा रात्रय समाहृता गणरात्र गणरात्रम् । पुंसि हर्ष । क्लीबे गणरात्रम् नपुंसकमिति माला ॥ द्वन्द्वसमाहारे । अहश्च रात्रिश्च अहोरात्र अहोरात्रम् । पुंसि हर्ष । क्लीबे वामन ॥ समाहार इति किम् ? पूर्वो रात्रेरश पूर्वरात्र । अहश्च रात्रिश्चेतीतरेतरयोगे अहोरात्राविमौ 'रात्रसूत्रा' इति पुंस्त्वमेव ॥ अथ कान्ताः एकोनसप्ततिः ॥ तथा सूतककूलकौ ॥ एतौ शब्दौ पुन्नपुंसकौ । सूतक सूतकम्—पारद । यद्गौड —'सूतक जन्मनि क्लीबे न स्त्रिया पारदेऽपि च' । जन्मनि तु 'कृत्या क्ताना' इति नपुंसकत्वम् । कूलक कूलकम्—स्तूप । यद्गौड —'कूलक न स्त्रिया स्तूपे' । पथ्यायकम् ॥ ७ ॥

> वैनीतकभ्रमरकौ मरकौ वलीकवल्मीकवल्कपुलकाः फरकव्यलीकौ ।
> किञ्जल्ककल्कमणिकस्तनका वितङ्कवर्चस्कचूचुकतडाकतटाकतङ्काः ॥ ८ ॥

एते शब्दा पुन्नपुंसका । वैनीतक वैनीतकम्—परम्परावाह्य याप्ययानादि ॥ यदमर —'वैनीतकमस्त्रियाम्' । भ्रमरक भ्रमरकम्—ललाटस्थोऽलक । पुंस्यमर । क्लीबे तु 'भ्रमरकमुक्त तु वहलाटस्थम्' । मरक मरकम्—बहुप्राणिमरणम् । यद्गौड —'मरकोऽस्त्रियाम्' । वलीक वलीकम्—नीव्रम्[10] । पुंसि माला । क्लीबे त्वरुण । वल्मीक वल्मीकम्—पिपीलिकादिकृतो[11] मृत्सञ्चयविशेष । यदमर —'वल्मीक पुन्नपुंसकम्' । वल्क वल्कम्—तरुत्वक् । पुंस्यपीति कश्चित् । क्लीबे हर्षारुणौ । पुलक पुलकम्—रोमाञ्च गौडशेष । क्रिमिभेदे[12] गन्धर्वे[13] मणिदोषे गजान्नपिण्डे हरिताले शिलान्तरे[14] च कान्तत्वात्पुंस्त्वम् । फरक फरकम्—खेटकम् । रलयोरैक्या-

---

मध्यदेशे इति हिमाचलविन्ध्याचलयोर्मध्य सरस्वत्या अन्तर्धानदेशात्प्राक् गङ्गायमुनयो सङ्गमात्प्रत्यक् स मध्यदेश उच्यते । यदाहु 'हिमवद्विन्ध्ययोर्मध्य यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेश स मध्यमः' इति । स्वरे इति षड्जादिनिषादान्ताना स्वराणां मध्ये य चतुर्थ स्वरस्तत्र । कर्णिकेति पद्म कर्णिका । अङ्गुलिरिति मध्याङ्गुलि । राकेति पूर्णिमा । एतयोरिति अवलग्नविलग्नशब्दयो । सूत्रमिति पाणिनीयसूत्रम् । स्तूप इति लोके थूभ ॥ ७ ॥ परम्परावाह्य याप्ययानादीति नराणां अनुक्रमेण वाह्य वोढव्य याप्ययानादि शिबिकादि । नीव्रमिति[10] लोके नेवा । पिपीलिकादिकृतो[11] मृत्सञ्चयविशेष इति कीटिकोपदेहिकादीना गृहमित्यर्थ । क्रिमिभेदे[12] इति कीटभेदे । गन्धर्व[13] इति चपरे । शिलान्तरे[14] इति

फलकेन तुल्य । व्यलीक व्यलीकम्–अप्रियम्, अकार्यं च । पुंसि माला । क्लीबेऽजय । कामजेऽपराधे वैलक्ष्यविपर्यये पीडने चालीकान्तरनाम्नपुंसक । किञ्जल्क किञ्जल्कम्–केसरम् । पुंसि माला । षण्ढेऽरुण । कल्क कल्कम्–कषाय तिलादेरुद्धृततैलादिकठिनविशेष पाप विष्ठा दम्भश्च । यदमर –'कल्कोऽस्त्री शमलैनसो । दम्भेऽपि' । पापवति त्वाश्रयलिङ्ग । मणिक मणिकम्–अलिञ्जर । पुस्यमर । क्लीबे माला । स्तबक स्तबकम्–गुच्छक । गौडशेष । वितङ्क वितङ्कम्–आरोग्यम् । बुद्धिसागर । द्रव्यवृत्तेस्त्वाश्रयलिङ्गता । वर्धस्क वर्धस्कम्–अवस्कर । यदमर –'वर्धस्कमस्त्री' । चूचुक चूचुकम्–कुचाग्रम् । पुंसि माला । क्लीबेऽमर । तडाक तडाकम्–सर । नन्दी । तटाक तटाकम्–तदेव । अर्थप्राधान्यात्तडाग तडागमित्यपि । यदमर –'तडागोऽस्त्री' । तङ्क तङ्कम्–आतङ्क । गौडशेष । वसन्ततिलकम् ॥ ८ ॥

वालकः फलकमालकालकमूलकास्तिलकपङ्कपातकाः ।
कोरकः करककन्दुकान्दुकानीकनिष्कचषका विशेषक ॥ ९ ॥

एते शब्दा पुनपुंसका । वालक वालकम्–पारिहार्यं अङ्गुलीय च । यद्गौड –'पारिहार्येऽङ्गुरीये च वालक स्यान्न योषिति' । फलक फलकम्–खेटकम् । यन्माला–'पुंसि वा फलकम्' । फलकान्तरत्वात् शारिफलक शारिफलकम्–अष्टापद । यन्माला–'नरेऽपि शारिफलकम्' । मालक मालकम्–ग्रामान्तरालाटवी । दुर्ग । अलक अलकम्–चूर्णकुन्तल । गौडशेष । मूलक मूलकम्–शाकविशेष । यदमर –'अस्त्री मूलकम्' । तिलक तिलकम्–पुण्ड्रम् । यद्गौड –'अस्त्री तु चित्रके' । पङ्क पङ्कम्–कर्दम पाप च । यद्गौड –'पुनपुंसकयो पङ्क कर्दमे किल्बिषेऽपि च' । पातक पातकम्–पापम् । दुर्गस्य । कोरक कोरकम्–कुड्मलम् । यद्गौड –'कोरकोऽस्त्रियाम्' । अर्थप्राधान्यात् क्षारक क्षारकमित्यपि । पुस्यमर । क्लीबेऽरुण । करक करकम्–कमण्डलु करङ्कश्च । यद्गौड –'कमण्डलौ करकोऽस्त्री वारिवाहोपले स्त्रियाम् । कुसुम्भे दाडिमे पक्षिविशेषे करक पुमान्' ॥ कन्दुक कन्दुकम्–गिरि[13] । पुंसि माला । षण्ढे अरुण । अन्दुक अन्दुकम्–गजपादबन्धनम् । पुंसि माला । षण्ढे हर्षकीर्ती । अनीक अनीकम्–युद्ध सेना च । नन्दिन । निष्क निष्क हेम्नोऽष्टोत्तर शतम्[14], पल कर्ष हेमः उरोभूषणम्, दीनारश्च । यदमर –'साष्टे शते सुवर्णाना हेम्न्युरोभूषणे पले ।

---

क्षणपाषाणे । कामजेऽपराधे इति कामोत्पन्ने दोषे । तिलादेरुद्धृततैलादिकठिनविशेष इति कोकोणया खलि इत्युच्यते । शमलैनसोरिति गूथपापयो । अवस्कर इति गूथम् । तदेवेति सर । आतङ्क इति रोग ॥ ८ ॥ पारिहार्यमिति कङ्कणम् । अङ्गुलीयमिति लोके मुन्दडी । अष्टापद इति चतुरङ्गफलकादि । करङ्क इति जलादीना स्थानम्, भोज्योक्तम्–'स्वगीताम्बुकरङ्क' इति । वारिवाहोपले इति लोके गडा इति प्रसिद्ध । गिरिरिति इद गिरिगन्दुन दडओ इत्युच्यते । गजपादबन्धनमिति लोके सांकळि । हेम्नोऽष्टोत्तर शतमिति हेम्न सुवर्णस्य अष्टोत्तर शत गद्याणकानाम् । पलमिति सुवर्णपलम् । कर्ष इति पलचतुर्थांश । उरोभूषणमिति वक्षोभूषणम् । साष्टे शते सुवर्णानामिति सह अष्टभिर्वर्तते इति

दीतारेऽपि च निष्कोऽस्त्री' । चषकः चषकम्—मद्यभाजनम् । यदमरः—'चषकोऽस्त्री सरकश्च' । 'सरके चषक वने वा ना' इति माला । विशेषकः विशेषकम्—तिलकम् । अमरस्य ॥ रथोद्धता ॥ ९ ॥

शाटककण्टकटङ्कविटङ्का मञ्चकमेचकनाकपिनाकाः ।
पुस्तकमस्तकमुस्तकशाका वर्णकमोदकमूषिकमुष्काः ॥ १० ॥

एते शब्दाः पुंनपुंसकाः । शाटकः शाटकम्—वस्त्रविशेषः । दुर्गस्य । कण्टकः कण्टकम्—वृक्षभेदी । रोमाञ्चश्च नन्दी । क्षुद्रसत्त्वश्चेति गौडः । टङ्कः टङ्कम्—पाषाणादिच्छेदोपकरणम् गिरिशृङ्गं च हर्षारुणयोः । गौडस्तु—'जङ्घाया स्त्री पुमान् खड्गकोशे पाषाणदारणे । खनित्रे टङ्कणे नीलकपित्थे टङ्कमस्त्रियाम्' ॥ विटङ्कः विटङ्कम्—कपोतपाली । गृहेषु पक्षिविश्रामार्थं बहिर्निर्गतं दारु चक्राद्याधारः । तत्र हि कपोतपङ्क्तिरवतिष्ठते । यन्माला—'विटङ्को वा नपुंसकम्' । मञ्चकः मञ्चकम्—पल्यङ्कः । मेचकः मेचकम्—वर्णविशेषः । द्वयोर्दुर्गः । नाकः नाकम्—आकाशम् स्वर्गश्च । 'पुंसि नाकः स्वर्गान्तरिक्षयो'रिति माला । क्लीबे हर्षः । पिनाकः पिनाकम्—रुद्रस्य धनुः तच्छूलं च । यदमरः—'पिनाकोऽस्त्री शूलशङ्करधन्वनोः' । पुस्तकः पुस्तकम्—लिखितपत्रसञ्चयविशेषः । नन्दी । णकप्रत्ययान्तोऽयमिति पुंस्त्वात्स्वार्थिकेन सिध्यति । मस्तकः मस्तकम्—शिरः । यदमरः—'मस्तकोऽस्त्रियाम्' । उणादौ वक्प्रत्ययान्तोऽयम् । प्रत्ययान्वद्वा स्वार्थिकः । मुस्तकः मुस्तकम्—मुस्ता । यदमरः—'मुस्तकमस्त्रियाम्' । शाकः शाकम्—मूलकादि । यदमरः—अस्त्री (?) 'शाकं मूलपत्रकरीराग्रफलकाण्डविरूढकम् । त्वक्पुष्पं कवकं चैव शाकं दशविधं स्मृतम्' । विरूढकं ताटास्थिसञ्ज्ञा । क्षेत्रोद्धृतस्य फलमूलादेः स्वेदानयोद्भिन्ना अङ्कुरा वा । पुंस्त्वे तु शाकस्य तन्नामत्वात्पुंस्त्वम् । वर्णकः वर्णकम्—विलेपनम् चन्दनं च । यद्गौडः—'विलेपने चन्दने च वर्णकः पुंनपुंसकम्' । मोदकः मोदकम्—लड्डुकः । यद्गौडः—'मोदकं न स्त्रियां खाद्यविशेषे हर्षुले त्रिषु' । मूषिकः मूषिकम्—आखुः दुर्गः । मुष्कः मुष्कम्—अश्वादिपरिमाणविशेषः, वृषणश्च दुर्गस्य ॥ दोधकवृत्तम् ॥ १० ॥

चण्डातकश्वरकरोचककञ्चुकानि मस्तिष्कयावककरण्डकतण्डकानि ।
आतङ्कशूकमरकाः कटकः सशुल्कः पिण्याकझर्झरकहंसकशङ्खपुङ्खाः ॥ ११ ॥

एते शब्दाः पुंनपुंसकाः । चण्डातकः चण्डातकम्—अर्द्धोरुकवस्त्रम् । पुंसि माला । क्लीबेऽमरः । चरकः चरकम्—शास्त्रविशेषः । दुर्गः । रोचकः रोचकम्—क्षुत् । यदमरलिङ्गशेषः—'रोचकोऽस्त्री' । कञ्चुकः कञ्चुकम्—कूर्पासः वर्म निर्मोकश्च । निर्मोककूर्पासयोर्मालाया पुमान् ।

साद 'प्रमाणीसङ्ख्याड्डः' (७।३।१२८) इति ड तत्र देश पोडशमासकाः । सुवर्णं कथ्यते तेषाम् ॥ ९ ॥ वृक्षभेदीति लोके काटओ । क्षुद्रसत्त्व इति वैरी । पाषाणादिच्छेदोपकरणमिति लोके टाची । जङ्घायामिति लोके टाग । खड्गकोशे इति लोके पडिआर । खनित्रे इति कुद्दालादिके । नीलकपित्थे इति कपित्थविशेषे, लोके कउठि । वर्णविशेष इति लोके श्यामवर्ण । तच्छूलमिति रुद्रस्य शूलम् । पुंस्त्वे इति शाकनाम्नि पुंस्त्वे ॥ १० ॥ लोके चरणा । कूर्पास इति लोके कांचली । वर्मेति

पण्ढेऽरुणस्य । चर्मणि पण्ढोऽरुणस्य । पुंसि उद्व्यम्—'मुद्रोऽन्तरा वपुषि वहिश्च कञ्चुका । मस्तिष्क मस्तिष्कम्—मस्तकस्नेह । पुंसि माला । क्लीबेऽमर । यावक यावकम्—अलक्तक । पुंसि माला । पण्ढेऽरुण । करण्डक करण्डकम्—पुष्पाद्याधार । दुर्ग । तण्डक तण्डकम्—ग्रन्थविशेष , पैरिष्कारः, शाल्यादिसारश्च दुर्गामरबुद्धिसागरा । आतङ्क आतङ्कम्—इष्टवियोगताप । दुर्ग । रक्शङ्काशयेषु तु घवन्तत्वात्पुंसि । शूक शूकम्—धान्यादे शृङ्ग । यदमर —'शूकोऽस्त्री' । सरक सरकम्—मद्यभाजनम् । ऐक्षवशीधु च । 'शीधौ च शीधुपाने च चषके सरकोऽस्त्रियाम्' । अनुतर्षे तु त्रिलिङ्गो वक्ष्यते । कटक कटकम्—सैन्यम् सानु वलय अद्रिशृङ्ग च । यदमर —'भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम्' । 'राजधानी चे'ति गौड । शुल्क शुल्कम्—भागादौ राजदेय , स्त्रीविवाहपरिग्राह्यधन च । यदमर —'शुल्कोऽस्त्री स्त्रीधनेऽपि च' । पिण्याक पिण्याकम्—अयुततैलकल्कविशेष सिल्हकम् कुङ्कुमम् हिङ्गु च । यद्गौड —'पिण्याकोऽस्त्री तिलकल्के हिङ्गुवाह्लीकसिल्हके' । झर्झरकः झर्झरकम्—कलियुगम् । यद्गौड —'कलौ झर्झरकोऽस्त्रियाम्' । हंसक हंसकम्—नूपुरम् पुंस्यमर । पण्ढे माला ॥ अथ खान्ताश्चत्वारः । शङ्ख शङ्खम्—कम्बु वलयम् भालास्थि च । यन्माला—'ललाटे वलये कम्बौ पण्ढे वा शङ्ख इष्यते' । निधौ तु तन्नामत्वात्पुंस्त्वमेव । पुङ्ख पुङ्खम्—शरपृष्ठम् । शाकटायन ॥ वसन्ततिलकम् ॥ ११ ॥

नखमुखमधिकाङ्गः सयुगः पद्मरागो भगयुगमथ टङ्कोद्योगशृङ्गा निदाघः ।
क्रकचकवचकूर्चार्धर्चपुच्छोञ्छकुञ्चा गजमुटजनिकुञ्जौ कुञ्जभूर्जाम्बुजाश्च ॥ १२ ॥

एते शब्दा पुनपुंसका । नख नखम्—कररुह । यदमर —'नखोऽस्त्री' । मुख मुखम्—वदनम् । दुर्ग ॥ अथ गान्ता अष्टौ । अधिकाङ्ग अधिकाङ्गम्—सारसनम् । यदमर —'यत्तु मध्ये सकञ्चुका बध्नन्ति तत्सारसनमधिकाङ्ग' । 'क्लीबे त्वधिकाङ्ग सारसन इति यद्बध्यते बुधी'ति माला । सयुग सयुगम्—सङ्ग्राम । पुंसि हर्षारुणौ । पण्ढे नन्दी । पद्मराग पद्मरागम्—शोणमणि । पुंस्यमर । क्लीबे माला । भग भगम्—उपस्थ । अरुण । युग युगम्—यूप । पुंसि नन्दी । क्लीबे हर्षारुणौ । अन्यत्र त्वयूपे युगमिति वचनान्नपुंसकत्वमेव । टङ्क टङ्कम—खनित्रादि । यद्गौड —'खनित्रखङ्गजङ्घासु टङ्क स्यात्पुनपुंसकम्' । उद्योग उद्योगम्—पराक्रम । दुर्ग । शृङ्ग शृङ्गम्—विषाण शिखर च दुर्गबुद्धिसागरौ ॥ अथ घान्तः ॥ निदाघ निदाघम्—ग्रीष्म । नन्दी ॥ अथ चान्ताश्चत्वारः । क्रकचः क्रकचम्—करपत्रम् । यन्मर —'क्रकचोऽस्त्री' । कवच कवचम्—चर्म । यदमर —'कवचोऽस्त्रियाम्' । कूर्च कूर्चम्—भ्रुवोर्मध्यम् । दीर्घश्मश्रु कैतव च । यद्गौड —'कूर्चमस्त्री

सन्नाह । निर्मोक इति सर्पकञ्चुलिका । पुष्पाद्याधार इति लोके करंडिया । पैरिष्कार इति भूषणम् । धान्यादे शृङ्गमिति लोके सिरा । अनुतर्षे इति मद्यपाने । भागादौ राजदेय इति लोकोक्त्या सुकि । स्त्रीविवाहपरिग्राह्यधनमिति स्त्रीविवाहार्थ वराद्ग्राह्य धनम् । यदजय 'शुल्को घट्टे विवाहाय वराद्ग्राह्ये धनेऽपि च इति । अयुततैलकल्कविशेष इति लोके खरि । भालास्थीति लोके खवणा इति प्रसिद्धि । ललाटे इति

भ्रुवोर्मध्ये श्मश्रुकैतवयोरपि' । अर्द्धर्च अर्द्धर्चम्–ऋचोऽर्द्धम् । 'परलिङ्गो द्वन्द्वोऽशी'ति क्लीबत्वापवाद । बहुव्रीहौ तु वाच्यलिङ्गतैव ॥ अथ छान्तास्त्रयः–पुच्छ पुच्छम्–लाङ्गूलम् । यदमर –'पुच्छोऽस्त्री' । उञ्छ उञ्छम्–जीविकाविशेष । पुंसि माला । क्लीबे शिलपुच्छ शिलोञ्छ चेति कश्चित् । कच्छ कच्छम्–बहुजलो देश । 'पुंसि कच्छ' इत्यमर' । नपुंसके तु माला ॥ अथ जान्ता अष्टौ । व्रज व्रजम्–गोकुलम्, पन्था, समूहश्च दुर्गस्य । उटज उटजम्–तापसपर्णकुटी । यदमर –'उटजोऽस्त्रियाम्' । निकुञ्ज निकुञ्जम्–गह्वरम् । कुञ्ज कुञ्जम्–गह्वर । गजकुम्भाधो गर्त्त दन्तिदन्त हनुश्च । यदमर –'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे । हनौ दन्ते निकुञ्जे च कुञ्ज स्यात्पुंनपुंसकम्' इति च । भूर्ज भूर्जम्–वृक्षविशेषत्वक् । द्वयोरप्ययो । अम्बुज अम्बुजम्–कमलम् । दुर्ग । चकारोऽनुक्तसमुच्चये । तेन चान्तेष्वर्ध्यर्च अध्यर्चमित्यपि । यद्गौड –'नमस्याऽध्यर्चमस्त्रियाम्' ॥ मालिनी ॥१२॥

ध्वजमलयजकूटाः कालकूटारकूटौ कपटकपटखेटाः कर्पटः पिष्टलोष्टौ ।
नटनिकटकिरीटाः कर्वटः कुक्कुटाट्टौ कुटजकुटविटानि न्यक्कटः कोट्टकुष्टौ ॥ १३ ॥

एते शब्दा पुंनपुंसका । ध्वज ध्वजम्–चिह्नादि । यद्गौड –'चिह्नशेफपताकासु पुंनपुंसकयोर्ध्वज' । मलयज मलयजम्–श्रीखण्डम् । पुंस्यमर । क्लीबे तु 'चन्दन स्यान्मलयजम्' ॥ अथ टान्ता विंशतिः–कूट कूटम्–मायादि । यदमर –'मायानिश्चल-यन्त्रेषु कैतवाऽनृतराशिषु । अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्' ॥ 'पुरद्वारतुच्छयोर-पी'ति गौड । कालकूट कालकूटम्–विषम् । यदमर –'पुंसि क्लीबे च काकोलकालकूट-हलाहला' । आरकूट आरकूटम्–रीति । यदमर –'आरकूटो न स्त्रियाम्' । कवट, कवटम्–उच्छिष्टम् । शाकटायन । कपट कपटम्–दम्भ । यदमर –'कपटोऽस्त्री' । खेट खेटम्–ग्रामभेद कफ फलक च । यद्गौड –'ग्रामभेदे कफे चर्मण्यस्त्री खेटोऽधमे[25]ति त्रिषु' । कर्पट कर्पटम् वास । बुद्धिसागरस्य । पिष्ट पिष्टम्–अपूप । दुर्गबुद्धिसागरौ । लोष्ट लोष्टम्–मृच्छकलम् । रत्नमाला–'लोष्टो नृपण्डयो' । नट नटम्–नर्त्तकविशेष । दुर्गन-न्दिनौ । निकट निकटम्–समीपम् । नन्दी । गुणवृत्तेर्वाश्रयलिङ्गता । किरीट किरीटम्–मुकुटम् । रत्नमाला–'ना वा किरीटम्' । कर्वट कर्वटम्–पर्वतावृतग्रामविशेष । दुर्गस्य । कुक्कुट कुक्कुटम्–ताम्रचूड । दुर्ग । 'ताम्रचूडे स्त्रिया सिध्याचर्यायामपि योषिति[18]ति । निपादशूद्रयो

---

कलारप्रान्तास्यनि लवणा इति नाम्नीत्यथ ॥ ११ ॥ शोणमणिरिति रक्तमणि । ऋचोऽर्द्धमिति घेदे ऋक् । अध्यर्थ इति अभ्यर्चन अध्यर्थ पूजा, भावे घञ् ॥ १२ ॥ मायेति रूपपरावर्त्तनादिका । निश्चलमिति निश्चलशब्देन व्यामेति (व्योम ?) गौड । यन्त्रमिति मृगादिबन्धनार्थं छद्मम् । कैतवमिति दम्भ । अनृतमिति असत्यम् । राशिरिति धान्यादिपुञ्ज । अयोघने इति अयोमयो घनो अयोघन आघातार्थं लोहकारभाण्ड ... लोहरो घण, अथवा हथउडवा । कुट्टनाधारो हि लोके अयहरणकूटशाल्मलिरित्यपरे । ... र इति प्रसिद्धे । सीराङ्गे इति दारुमये लोहाधारे लोके घउं इति प्रसिद्धिः । ... इति गह्वरप्रायो ग्राम । चर्मणीति खेटके, लोके ५

पुंसे कुक्कुटश्चरणायुधः' इति गौडः । अट्ट अट्टम्–क्षौमम् गृहभेदश्च । पुंसि क्षौमेऽमर । गृहभेदेऽरुण । उभयो षण्ढे कश्चित् । कुट कुटम्–घट, हलाङ्गविशेषश्च । दुर्ग । जकुट जकुटम्–वार्त्ताककुसुमम् । पुंसि–'जकुटो यमले श्वाने वार्त्ताककुसुमे पुंसि' । क्लीबे गौड –'वार्त्ताककुसुमे क्लीब जकुटो यमले पुंसि' । चिट चिटम्–पिङ्ग । गौडशेष. । स्यङ्कट स्यङ्कटम्–शिक्यभेद धौताङ्गनी च । पुंस्यमर । क्लीबे गौड । कोट्ट कोट्टम्–दुर्ग । पुंस्यमरलिङ्गशेष । क्लीबेऽरुण ॥ अथ ठान्तौ ॥ कुष्ठ कुष्ठम्–त्वग्दोष गन्धद्रव्यविशेषश्च । अमरलिङ्गशेष ॥ मालिनी ॥ १३ ॥

कमठो वारुण्डरण्डषण्डौ निगडाक्रीडनडप्रकाण्डकाण्डाः ।
कोदण्डतरण्डमण्डमुण्डा दण्डाण्डौ हडवारबाणवाणाः ॥ १४ ॥

एते शब्दा पुन्नपुंसका । कमठ कमठम्–असुरविशेष तापसभाजन च । आद्ये बुद्धिसागर । अन्त्ये पुंसि दुर्ग, क्लीबे माला । कूर्मे तु देहिनामत्वात्पुंस्त्वम् । वैद्याया तु योनिमन्नामत्वात्स्त्रीत्वम् ॥ अथ डान्ताश्चतुर्दश–वारुण्ड वारुण्डम्–दर्वीमल, गणिस्वराजश्च । यद्गौड –'गणिस्वराजे वारुण्डोऽस्त्रिया दर्वीश्रुतिमले' । रण्ड रण्डम्–भित्तम् इक्षुविकारविशेषश्च । यदमर –'इक्षुभेदेऽपि रण्डोऽस्त्री' । गुणवृत्त्यात्वाभयलिङ्गता रण्ड रण्डा रण्डम् । षण्ड षण्डम्–वृक्षादिसमूह । यदमर –'षण्डमस्त्रियाम्' । निगड निगडम्–पादबन्धनम् । यदमर –'निगडोऽस्त्री' । आक्रीड आक्रीडम्–उद्यानविशेष । पुंस्यमर । क्लीबे तु माला । नड नडम्–मङ्गलनस्तृण । दुर्ग । प्रकाण्ड प्रकाण्डम्–स्तम्ब स्तम्बम्, शस्तम्, तरोश्च मूलम्, शाखान्तरम् । यद्गौड –'स्तम्बे शस्ते प्रकाण्डोऽस्त्री मूलस्कन्धान्तरे तरो' । काण्ड काण्डम्–शर समय प्रकरणम् समूह जलम् नालम् कुत्सितम् वृक्षस्कन्धश्च लता च । यदमर –'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' । कोदण्ड कोदण्डम्–चापम् । पुंसि लक्ष्यम् 'स्फुटिष्यति न कोदण्ड' । षण्ढे रूढम् । तरण्ड तरण्डम्–उडुप । अरुणस्य । मण्ड मण्डम्–द्रवद्रव्याणामुपर्यच्छो भाग, भक्तादिनिर्यास, एरण्ड, मस्तु च । यद्गौड –'आमलक्या स्त्रिया मण्ड एरण्डे सारपिच्छयो । अस्त्री मस्तुन्यपि क्लीबे' । मरुणि पुंसि माला । मुण्ड मुण्डम्–शिर । यद्गौड –'राहुदैत्यभिदोर्मुण्डो मूर्धन्यस्त्री मुण्डिते त्रिषु' ।

---

खेडओ । अर्वेतीति कुत्सिते । निषादशूद्रयो पुत्र इति निषादात् शूद्रायां यो जायते । चरणायुध इति कूकडओ । क्षौममिति षतस्य लोके गुरा इति प्रसिद्धि । गृहभेद इति हट्ट । शिक्यभेद इति लोके त्रिगडि । धौताङ्गनीति श्वेतगृहगोधा । त्वग्दोष इति लोके कोढ । गन्धद्रव्यविशेष इति लोके उपलोट ॥ १३ ॥ वैद्यायामिति धूम्रस्त्रियाम् । गणिस्वराजे इति वृक्षविशेषे । वृक्षादिसमूह इति वनमित्यर्थ । पादबन्धनमिति लोके साकलि । उद्यानविशेष इति राज्ञां लोकै सह साधारण वनम् । मङ्गलजस्तृण इति लोके नलु । स्तम्ब इति च धनस्तम्भः । मूलस्कन्धान्तरे तरोरिति तरोर्वृक्षमूलस्कन्धयोरन्तरं मध्य भाग जङ्घेत्यर्थ । समय इति अवसर । प्रकरणमिति शास्त्राधिकार । यथा देवाधिदेवकाण्डो देवकाण्ड इत्यादि । अर्वेति कुत्सितम् । उडुप इति लोके त्रापओ । भक्तादिनिर्यास इति राद्धधान्यरस । मस्तु इति दधिशरीति प्रसिद्धि । सार इति भक्तादिनिर्यास । पिच्छेति अद्रवद्रव्याणामुपर्यच्छो भाग,

दण्ड दण्डम्—दमनम् यष्टि चतुर्थोपायः मन्था सैन्यं च । यदमरः—'दण्डोऽस्त्री' । अण्ड अण्डम्—पक्ष्यादिप्रसव । पुंसि—'पेशीकोशः[1] स्मृतोऽण्डश्च' इति । षण्ढे त्वमर । वृषणे तु नपुंसक उक्तः ॥ अथ ढान्ताः—दृढ दृढम्—स्थूलम्, बलवांश्च । नन्दी । अविनष्टश्चेति दुर्ग । निश्चलश्चेति बुद्धिसागर ॥ अथ णान्ता द्वाविंशतिः—वारबाण वारबाणम्—वर्म[2] । यन्माला—'क्लीबे च वारबाणश्च' । बाण बाणम्—शर पुष्पविशेषश्च । दुर्गस्य । वृक्षे तु स्त्रीपुंसलिङ्ग उक्त । औपच्छन्दसिकम् ॥ १४ ॥

कर्षापणः श्रवणपक्वणकङ्कणानि द्रोणापराह्णचरणानि तृण सुवर्णम् ।
स्वर्णव्रणौ वृषणभूषणदूषणानि भाणस्तथा किणरणप्रवणानि चूर्णः ॥ १५ ॥

एते शब्दा पुन्नपुंसका । कर्षापणः कर्षापणम्—मानविशेष, पणषोडशकम् । शाकटायनस्य । प्रज्ञाद्यणि कार्षापणः कार्षापणमित्यपि । यद्गौडः—'कार्षापणोऽस्त्री कार्षिके[3] पणेषु[4] षोडशस्वपि' । श्रवण श्रवणम्—कर्ण । पुंसि रुद्रयम्—'आलोचनान्ताच्छ्रवणौ विनत्य' । षण्ढे रूढ । भभेदे तु स्त्रीपुंसयोरुक्त । पक्वण पक्वणम्—शबरालय[5] । पुंस्यमर । क्लीबेऽरुण । कङ्कण कङ्कणम्—हस्तरक्षासूत्रम्, आभरणविशेषश्च । पुंस्यरुण । षण्ढेऽरुण (ऽमर)। द्रोणः द्रोणम्—परिमाणविशेष[6] । यन्माला—'क्लीबे वा स्वाढकद्रोणौ' । अपराह्ण अपराह्णम्—दिवसपरार्धभाग । दुर्गस्य । चरण चरणम्—गोत्रादि[7] 'चरणोऽस्त्रियाम्' । तृणः तृणम्—उलपादि । दुर्गः । सुवर्ण सुवर्णम्—हेम तत्कर्षश्च[8] । दुर्गनन्दिनौ । यागभेदादिश्च । यद्गौड —'यागभेदे सुवर्णालौ[9] कृष्णागुरुणि न स्त्रियाम्' । स्वर्ण स्वर्णम्—हेम । नन्दी । व्रण व्रणम्—अरु । यन्माला—'व्रण वा ना' । वृषण वृषणम्—मुष्क । अरुण । भूषण भूषणम्—अलङ्कार । दुर्ग । अर्थप्राधान्यान्मण्डन मण्डनमित्यपि बुद्धिसागर । दूषण दूषणम्—उपालम्भ[10] । गौडशेष । भाण भाणम्—प्रेक्षभेद[11] । कस्यचित् । किण किणम्—त्वग्ग्रन्थि[12] । गौडशेष । रण रणम्—सम्पराय अन्यत्रालन्तत्वात् पुंसि । यद्गौड —'कैणे[13] क्वणे रणे पुंसि समरे पुन्नपुंसक' । प्रवण प्रवणम्—चतुष्पथम् । पुंसि गौड । क्लीबे माला । चूर्ण चूर्णम्—क्षोद । अरुणस्य ॥ वसन्ततिलका ॥ १५ ॥

तोरणपूर्त्तनिकेतनिपाताः पारतमन्तयुतप्रयुतानि ।
क्ष्वेडितमक्षतदैवतवृत्तैरावतलोहितहस्तशतानि ॥ १६ ॥

---

गोफोवस्या धानरी मांड इति प्रसिद्धि । [1] पेशीकोश इति पेशीना मांसखण्डानां कोश पेशीकोश । [2] वर्मेति सन्नाह ॥ १४ ॥ [3] कार्षिके इति विंशत्यधिकैकपञ्चाशच्छतसङ्ख्यो वराटकमानविशेषस्तत्र । [4] पणेषु षोडशस्वपीति पणषोडशके । [5] शबरालय इति भीलपालि । [6] परिमाणविशेष इति चतुराढक । [7] गोत्रादीति गोत्रम् वंश, आदिशब्दात् मूल बह्वृचादिपादश्च । बह्वृचादयो वेदशाखाध्ययननिमित्तकव्यपदेशभाजो द्विजन्मान । [8] तत्कर्ष इति तस्य हेम्न कर्ष [illegible] तत्कर्ष । [9] सुवर्णालौ इति सुवर्णस्य आलु करकपत्रिका सुवर्णालु सुवर्णगगरिकेत्यर्थ [illegible] इति लोके ओलखाओ । [11] प्रेक्षभेद इति 'स्वाभ्रा- [illegible] रूक १ प्रकरण २ भाण' ३ [illegible] । [12] त्वग्ग्रन्थिरिति [illegible]

एते शब्दाः पुन्नपुंसकाः । तोरण तोरणम्-वन्दनमाला बहिर्द्वारम् निर्यूहश्च । यदमरः-'तोरणोऽस्त्री' । निर्यूहे दुर्गः ॥ अथ तान्ता अष्टाविंशतिः-पूर्त पूर्तम्-खातादिकर्म । यदाह-'वापीकूपतडागानि देवतायतनानि च । अन्नप्रदानमारामाः पूर्तमर्थ्याः प्रचक्षते' ॥ पूर्तं ना चेति माला । पूरिते त्वाश्रयलिङ्ग । निवेश निवेशम्-आवासः । पुंसि बुद्धिसागरः । षण्ढेऽरुण । निवात निवातम्-गृहम्, दुर्भेद्यं च वर्म । यदमरः-'निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत्' । अरुणस्तु 'निवातं गृहं दुर्भेद्यं च वर्मे'त्याह । वातरहितप्रदेशे त्वाश्रयलिङ्गता । पारत पारतम्-रसेन्द्रः । पुंसि रुद्रः । क्लीबेऽरुण । अर्थप्राधान्यात्पारद पारदमित्यपि कश्चित् । अन्त अन्तम्-प्रान्तम् समीपम् स्वरूपं च । पुंस्यजय । क्लीबे शाश्वतः । 'स्वरूपप्रान्तयोरन्तमन्तिकेऽपि प्रयुज्यते' । गौडस्तु-'स्वरूपेऽन्तं विनाशे ना न स्त्री शेषेऽन्तवत् त्रिषु' इत्याह । उपलक्षणत्वात् प्रान्त प्रान्तमित्यपि । पुंस्यमरः । प्रान्तावधोऽप्रस्य सृक्कणी । क्लीबे माला । धुत धुतम्-अपानम् । पुंसि रुद्रः । क्लीबेऽरुण । प्रयुत प्रयुतम्-दशलक्षाणि । लक्षे चेत्यन्ये दुर्गस्य । क्ष्वेडित क्ष्वेडितम्-सिंहनादविशेषः । लत्वे क्ष्वेलित क्ष्वेलितम्-नन्दी । अक्षत अक्षतम्-मङ्गल्यतण्डुलाः । पुंसि बहुत्वं च्याप्यम् । पुंस्यमरः । क्लीबे गौडः । 'तृतीयाप्रकृतौ लाजेष्वक्षतं निष्वहिंसिते' । देवत दैवतम्-देवता । यन्माला-'षण्ढे वा दैवतानि च' । वृत्त वृत्तम्-शीलम्, निस्तलं च दुर्गः । गौडस्तु-'दृढे भीतेऽप्यतीतेऽपि वर्तुलेऽपि मृते धृते । वृत्तोऽन्यलिङ्गयात्[12] क्लीब छन्दश्चारित्रवृत्तिषु' इत्याह । ऐरावत ऐरावतम्-[13]सुरेन्द्रदन्ती । नन्दी । गौडस्तु-'ऋजु दीर्घं महेन्द्रस्य चापमैरावतं पुमान् । [14]नागरङ्गैरावणयोर्विद्युत्तेन्द्रद्वयोः स्त्रिया'मित्याह । लोहित लोहितम्-शोणितम् । गुणवृत्तेस्त्वाश्रयलिङ्गता । नदे तु तन्नामत्वात्पुंसि । हस्त हस्तम्-करः । अभेदं तु स्त्रीपुंसयोरक शत शतम्-पञ्च विंशतयः । निघ्नपि दुर्गः ॥ दोधकवृत्तम् ॥ १६ ॥

व्रतोपवीतौ पलितौ वसन्तध्वान्तायुतद्यूतघृतानि पुंस्तः ।
शुद्धान्तबुस्तौ रजतौ मुहूर्तद्विपृथयूथानि वरूथगूथौ ॥ १७ ॥

एते शब्दाः पुन्नपुंसकाः । व्रत व्रतम्-शास्त्रितो नियमः । यदमरः-'व्रतमस्त्री' । उपवीत उपवीतम्-यज्ञोपवीतम् । प्रोद्धृते दक्षिणकरे कश्चित् । पलितः पलितम्-पक्वकेशः । दुर्गः । केशपाके कर्दमे च तात्त्वान्नपुंसकत्वमेव । वसन्त वसन्तम्-सुरभिः, देवपुत्रविशेषश्च । दुर्गः । ध्वान्त ध्वान्तम्-तमः । वाचकवार्त्तिकम् । अयुत अयुतम्-दशसहस्राणि ।

[12] कणे इति शब्दे । [14] कोणे इति वादनकाष्ठे ॥ १५ ॥ वन्दनमालेति तोरणस्योपरि मङ्गलाय सहकारादिपल्लवनिर्मिता । बहिर्द्वारमिति द्वाराग्रे स्तम्भोपरि बद्धं बहिर्द्वारं मङ्गलाश्रम्, लोके तोरण इत्येव प्रसिद्धिः । निर्यूह इति इह निर्यूहशब्देन भित्तिनिर्गतकाष्ठक, लोके घोडलओ खूंटा इति वा प्रसिद्धिः । रसेन्द्र इति लोके पारओ । शेषे इति प्रान्ते । मङ्गल्यतण्डुला इति लोके चोखा । तृतीयाप्रकृतौ इति नपुंसके । निस्तलमिति वर्तुलम् । धृते इति आवृते । वृत्तिरिति वर्तनम् । सुरेन्द्रदन्तीति ऐरावणहस्ती । नागरङ्ग

दुर्गः । द्यूत द्यूतम्—दुरोदरम् । यद्गौडः—'द्यूतोऽस्त्रियाम्' । कितवश्चेति बुद्धिसागरः । घृत घृतम्—आज्यम् । दुर्गः । पुस्त पुस्तम्—लेप्यपत्रसङ्घात, लेप्यादिकर्म च । यन्माला—'पुस्तो नृपण्डयोः' । शुद्धान्त शुद्धान्तम्—अन्तःपुरम् । पुंसि माला । क्लीबे शुद्धान्तमवरोधश्चेति । बुस्तः बुस्तम्—पक्वमासविशेषः । नन्दी । रजत रजतम्—रूप्यम्, श्वेतं च दुर्गः । गिरौ तु समासत्वात्पुंस्त्वम् । गौडस्तु—'त्रिलिङ्गं रजतं शुभ्रे क्लीबं दुर्वर्णहारयो'रित्याह । मुहूर्त मुहूर्तम्—घटिकाद्वयम् । यदमरः—'मुहूर्तो द्वादशाऽस्त्रियाम्' ॥ अथ थान्ताः सप्त ॥ द्वयोर्यूथयोः समाहारो द्वियूथ द्वियूथम् । शाकटायनः । यूथ यूथम्—सजातीयपश्वादिसङ्घातः । यन्माला—'यूथं क्लीबे तु वा' । वरूथ वरूथम्—रथगोपनम् । 'रथगुप्तिर्वरूथो ना' इत्यमरः । षण्ढे रूढिः । गूथ गूथम्—विष्ठा । यन्माला—'गूथं वा न तु' ॥ उपजातिः ॥ १७ ॥

प्रस्थं तीर्थं प्रोथमलिन्दः ककुदः कुकुदाष्टापदकुन्दाः ।
गुददोहदकुमुदच्छदकन्दार्बुदसौधमथोत्सेधकबन्धौ ॥ १८ ॥

एते शब्दाः पुन्नपुंसकाः । प्रस्थ प्रस्थम्—मानम्, तन्मितं वस्तु सानु च । यद्गौडः—'सानौ मानेऽस्त्रियां प्रस्थस्तन्मितेऽपि च वस्तुनि' । तीर्थ तीर्थम्—पुण्यस्थानम्, जलावतारश्च । नन्दी । प्रोथ प्रोथम्—अश्वादेर्घोणान्तरम् । यद्गौडः—'ना कट्यामश्वनासायामस्त्री प्रोथोऽध्वगे त्रिषु' ॥ अथ दान्ता एकादश—अलिन्द अलिन्दम्—गृहद्वारामस्था स्थली, शाला । पुंस्यमरः । षण्ढेऽरुणः । ककुद ककुदम्—श्रेष्ठम् वृषस्कन्धः राजचिह्नं च । यदमरः—'प्राधान्ये राजलिङ्गेऽपि वृषाङ्गे ककुदोऽस्त्रियाम्' । कुकुद कुकुदम्—तदेव । अष्टापद अष्टापदम्—चतुरङ्गादिद्यूतफलकम् सुवर्णं च । दुर्गस्य । द्यूतफलकेऽर्थप्राधान्यात् शारिफल शारिफलमित्यपि । यद्गौडः—'अस्त्रियो अष्टापदशारिफलौ' । गिरौ शरभे कर्णनाभे चाद्रिदेहिनामत्वात्पुंसि । कुन्द कुन्दम्—पुष्पविशेषः । पुंसि माला । क्लीबे त्वमरः । निधिभेदसुरद्विपोस्तु पुंस्त्वमुक्तमेव । चक्रभ्रमौ तु बाहुल्कात्पुंसि । गुद गुदम्—अपानम् । पुंसि कश्चित् । षण्ढे रूढः । दोहदः दोहदम्—श्रद्धा । पुंसि माला । क्लीबे त्वमरः । दौहृदस्य तु बाहुल्कान्नपुंसकत्वमेव । कुमुदः कुमुदम्—कैरवम् । दुर्गः । छद छदम्—दलम् पिच्छं च । पुंस्यमरः । क्लीबे तु माला । कन्द कन्दम्—'पयोधरे सस्यमूले सूरणे कन्दमस्त्रियाम्' । अर्बुदः अर्बुदम्—दशकोटयः । कोटिरित्यन्ये । स्थानविशेषः, अक्षिरोगविशेषश्च । उभयत्रारुणः । पर्वतविशेषे तु पुंस्त्वमेव ॥ अथ धान्ताः सप्त । सौधः सौधम्—राजसदनम् । यदमरः—'सौधोऽस्त्री' । उत्सेध उत्सेधम्—उन्नतिः कायश्च । यद्गौडः—'उत्सेधस्तूच्छ्रयेऽस्त्री स्यात् क्लीबं संहननेऽपि च' । काये पुंस्यरुणः ।

इति नारगनामा वृक्षः । वेद्भेद इति विधुद्भेदः ॥ १६ ॥ कण्ठसूत्रमिति लोके जनोइ । दुरोदरमिति लोके जूआ । कितव इति यो द्यूते रमते स कितव उच्यते, लोके जूआरी । श्वेतमिति शुक्लम् । गिरौ इति कैलासनाद्रि । रथगोपनमिति रथस्याच्छादनं लोके रथपासरि, अथवा रथरीखोली ॥ १७ ॥ मानमिति चतुःकुडवमितं मानम् । यदाहु ।तन्मितं चस्त्विति प्रस्थमितं वस्तु । सानु इति गिरितटम् । जलावतार इति तीर्थो गृहद्वारामस्था स्थलीति लोके बारणे रा

कबन्ध कबन्धम्-शिरोरहित काय । यद्गौड -'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् । क्लीबमप्सूदरे पुंसि राहुरक्षोविशेषयो ' ॥ आपातलिकापरान्तिका ॥ १८ ॥

श्राद्धायुधान्धौषधगन्धमादनप्रस्फोटना लग्नपिधानचन्दनाः ।
वितानराजादनशिश्नयौवनापीनोदपानासनकेतनाशनम् ॥ १९ ॥

एते शब्दा पुंनपुंसका । श्राद्धः श्राद्धम्-पितृकर्म । पुंस्यजय । क्लीबेऽरुण । यत्तु श्रद्धाशब्दान्मत्वर्थीयेन श्राद्धशब्द स आश्रयलिङ्ग । आयुध आयुधम्-प्रहरणम् । नन्दी । अन्ध अन्धम्-तम । पुंसि गौड -'स्यादन्धस्तिमिराऽदृशो ' । 'क्लीबे त्वन्ध स्यात्तिमिरे दृष्टिहीनेऽन्ध' इति कश्चित् । लोचनहीन त्वाश्रयलिङ्ग । ओषध ओषधम्-भेषजम् । नन्दी ॥ अथ नान्ता षट्चत्वारिंशत्-गन्धमादन गन्धमादनम्-पर्वतविशेष । भोज । गौडस्तु-'कप्यद्रिसिद्धगन्धधूपे ना सुराया गन्धमादनी' इत्याह । प्रस्फोटन प्रस्फोटनम्-सूर्पम् । पुंसि माला । क्लीबेऽमर । लग्न लग्नम्-मेषादि । पुंसि माला । क्लीबे गौड । 'राशीना समुदयो लग्न सक्तलज्जितयोस्त्रिषु' । पिधान पिधानम्-संवरणम् । यन्माला-'पिधान पुंसि वा' । अपे प्यादेशाभावपक्षे अपिधान अपिधानमित्यपि शाकटायन । चन्दन चन्दनम्-मलयजतरु । यद्गौड -'नदीभेदे स्त्रियामस्त्री चन्दन मलयोद्भवम्'-चन्दनान्तत्वाद्धरिचन्दन हरिचन्दनम्-देवतरु चन्दनविशेषश्च । यदमर -'पुंसि वा हरिचन्दनम्' । तथा 'हरिचन्दनमस्त्रियाम्' । वितान वितानम्-विस्तार उल्लोच शून्यम् यज्ञश्च । यद्गौड -'वितान क्रतुविस्तारोल्लोचेऽस्त्री तुच्छमन्दयो । त्रिषु क्लीबे वृत्तभेदे' । शून्ये त्वमर । राजादन राजादनम्-पियाल[10], क्षीरिका[11] च । पुंसि यथा-'राजादनो दढरकन्ध ' । क्लीबे यथा-'राजादन क्षीरिकाया प्रियाले किंशुकेऽपि च' । शिश्न शिश्नम्-मेढ । पुंसि माला । क्लीबे हर्ष । यौवन यौवनम्-द्वितीय वय । दुर्ग । आपीन आपीनम्-ऊध । पुंस्यरुण । षण्ढे रुद्र । उदपान उदपानम्-कूप । यदमर 'उदपान तु पुंसि वा' । असन असनम्-वृक्षविशेष । दुर्ग । प्रक्षेपनिर्देशादाऽऽसन आसनम्-उपावेशनम् । नन्दी । केतन केतनम्-ध्वज । पुंसि लक्ष्यम्-'धामियाय दहनस्य केतन कीर्तयन्निव दिवौकसा प्रियम्' । षण्ढे रुद्र । अशन अशनम्-ओदन[15] । बुद्धिसागर ॥ उपजाति ॥ १९ ॥

नलिनपुलिनमौना वर्धमानः समानौदनदिनशतमाना हायनस्थानमाना ।
धननिधनविमानास्ताडनस्तेनवस्ता भवनभुवनयानोद्यानवातायनानि ॥ २० ॥

---

सुरद्विट् इति विष्णु । धडेति लोके दोहला । कैरवमिति लोके श्वेतकमलम् । क्रियायुक्त अपमूर्धकलेवरमिति धावत् सत् शिरोरहित शरीरम् ॥ १८ ॥ अन्ध इति अक्षिहीन । कप्यद्रिभिदिति कपिभेदोऽद्रिभेदश्च । गन्धके इति लोके गन्धक इति प्रसिद्धे । सूर्पमिति लोके छाजभो । सक्त इति आसक्त । संवरणमिति आच्छादनम् । चन्दनविशेष इति रक्ताञ्जणी । उल्लोच इति लोके चन्दूयभो । पियाल इति लोके रायण । क्षीरिकेति[11] क्षीरिणी । किंशुके इति लोके पलास । ऊध इति लोके उहाडा । वृक्षविशेष

एते शब्दा पुन्नपुंसका॰ । नलिनः नलिनम्—पद्मम् । नन्दी । गौडस्तु 'नलिनी पद्मिनी व्योमनिम्नगा कमलाकरे । नपुंसक नलिकाया न पुंसि सरसीरुहे' इत्याह । पुलिन पुलिनम्—सैकतम् । नन्दी । मौन मौनम्—वाग्यम । बुद्धिसागर । वर्द्धमान वर्द्धमानम्—शरावम् । पुम्यमर । क्लीबे माला । समान समानम्—तुल्य । शरीरस्थवायुविशेषश्च । नन्दिन । ओदन ओदनम्—कूरम् । यदमर॰ । 'ओदनोऽस्त्री' । दिन दिनम्—दिवस॰ । दुर्ग । शतमानान्यस्य शतमान शतमानम्—भूभागविशेष रूप्यमान च । दुर्गामरलिङ्ग-शेषयो॰ । यत्स्मृति 'द्वे कृष्णले रूप्यमाषो धरण षोडशैव ते । शतमान तु दशभिर्धरणै पलमेव च' ॥ हायन हायनम्—सवत्सर रश्मिश्च । पुम्त्यजय । वर्षेऽर्चिषि च क्लीबे आहुरित्यमरटीका । श्रीहैौ तु पुस्त्वमेवोक्तम् । स्थान स्थानम्—आश्रय । नन्दी । स्थित्यादौ च पण्ढ उक्त । मान मानम्—दर्प । नन्दी । धन धनम्—द्रव्यम् । निधन निधनम्—विनाश कुल च । द्वयोर्दुर्ग । विमान विमानम्—व्योमयानादि । यद्गौड 'विमानेऽस्त्री व्योमयाने सप्तभूमे च वेश्मनि । घोटके यानमात्रे च' । ताडन ताडनम्—व्यथनम् । बुद्धिसागर । स्तेन स्तेनम्—चौर । चौर्यं च । दुर्गबुद्धिसागरौ । वस्न वस्नम्—अवक्रय । 'क्लीबे वस्नमवक्रय॰' इति माला । 'अवक्रये पुंसि वस्नो वेतने स्यान्नपुंसकम्' इति गौड । धनवस्नयोस्तु तन्नामत्वान्नपुंसकत्वमेवोक्तम् । भवन भवनम्—गृहम् । नन्दी । भुवन॰ भुवनम्—जगत् । बुद्धिसागर । यान यानम्—वाहनम् । उद्यान उद्यानम्—राजादिक्रीडा-स्थानम् । पुष्पवाटी च । द्वयोर्नन्दी । वातस्यायन मार्ग वातायन वातायनम्—गवाक्ष॰ । पुंसि वामन, क्लीबे माला ॥ मालिनी ॥ २० ॥

अभिधानद्वीपिनौ निपानं शयनं लशुनरसोनगृञ्जनानि ।
खलिनखलीनानुमानदीपाः कुणपः कुतपावापचापशूर्पाः ॥ २१ ॥

एते शब्दा पुन्नपुंसका । अभिधान अभिधानम्—सज्ञा शब्दश्च [ यथा 'भवतोऽभिधान-प्रत्ययावस्मादिति भाव' इति वृत्तिकार —अत्राभिधानेन वाचक शब्दोऽभिधीयते इत्यर्थ ] दुर्ग । द्वीपिन द्वीपिनम्—व्याघ्र । दुर्गनन्दिनौ । निपान निपानम्—आहाव । नन्दी । शयन शयनम्—शय्या । यन्माला 'शयन वा ना' । लशुन लशुनम्—रसोन रसोनम्, गृञ्जन गृञ्जन च—महाकन्द । पुंसि निघण्टु । 'रसोनो लशुनो रिष्टो गृञ्जनो दीर्घपत्रक' । 'लशुनगृञ्जनयो क्लीबे' हर्ष । गौडस्तु 'विषदिग्धपशोर्मांसे गृञ्जन ना रसोनक' इत्याह ।

इति लोके वीअओ । उपवेशनमिति लोके वइसणओ । ओदन इति राद्धमन्नम् ॥ १९ ॥ व्योमनिम्नगेति गगानदी । कमलाकर इति तटाक । नलिकायामिति तन्तुवायोपकरणे नलीति प्रसिद्धे । सैकतमिति जलरहित तटम् । शरावमिति लोके सिरावलु । शरीरस्थवायुविशेष इति सन्धिहृदयनाभिसमुत्थ । द्वे कृष्णले रूप्यमाषो धरण षोडशैव ते । शतमान तु दशभिर्धरणै पलमेव च' इत्यस्य व्याख्या—द्वे कृष्णले द्वे गुञ्जे रूप्यमाषो माषविशेष उच्यते । ते माषा षोडश द्वात्रिंशद्गुञ्जा । धरण दशभिर्धरणै विंशत्यधिकशतत्रयेण शतमान पल [illegible] श्लोकार्थ । अवक्रय इति मूल्यम् ॥ २

खलिन खलिनम्-कवियम् । नन्दी । खलीन खलीनम्-तदेव । यदमर । 'खलीनोऽस्त्री' । अनुमान अनुमानम्-हेतु । पुंसि महाभाष्यम् । कोऽत्राऽनुमान' को हेतुरित्यर्थः । क्लीबे तु पंक्षिलस्वामी । हेतुरनुमानम्-अकर्तनडन्तोऽयम्, भावे तु क्त्वा त्वाना इति नपुंसकत्वमेव । अथ पान्ताः पञ्चदश-दीप॰ दीपम्-प्रदीप । दुर्ग । कुणप कुणपम्-शवम् । नन्दी । कुतप कुतपम्-छागरोम, वैत्कृत कम्बल दर्भे अपराह्णकालश्च । नन्दी । अमरश्च 'कुतपोऽस्त्रियाम्' । गौडस्तु 'धान्यकुंशेऽष्टमांशेऽह्न कुतपो भगिनीसुते । सहस्रदीधितौ पुंसि' इत्याह । आवाप आवापम्-वलय । पुंस्यमर । क्लीबे माला । चाप चापम्-धनु । यदमर॰ 'अस्त्रियौ धनुश्चापौ' । शूर्प शूर्पम्-मानविशेष । धान्यादिपवनभाण्ड च । आद्ये दुर्गे । अन्त्ये तु 'शूर्पमस्त्रियाम्' इत्यमर ॥ औपच्छन्दसिकम् ॥ २१ ॥

स्तूपोडुपौ विटपमण्डपशष्पबाष्पद्वीपानि विष्टपनिपौ शफडिम्बबिम्बाः ।
जम्भः कुसुम्भककुभौ कलभो निभार्मसकामसक्रमललामहिमानि हेमः ॥ २२ ॥

एते शब्दा पुनपुंसका । स्तूप स्तूपम्-मृदादिकूटः बोधिसत्त्वभवनम्, उपायतन च क्वचित् । उडुप उडुपम्-प्लव । यद्गौड 'चन्द्रे ना स्युडुप प्लवे' । विटप विटपम्-स्कन्धादूर्ध्वं तारा शाखाकटम पल्लव गुल्म विस्तारश्च । यद्गौड 'शाखाया पल्लवे स्कन्धे विस्तारे विटपोऽस्त्रियाम् । विटानामधिपे पुंसि वन चे'ति बुद्धिसागर । मण्डप मण्डपम्-जनाश्रयः । यदमर 'मण्डपोऽस्त्री' । शष्प शष्पम्-बालतृणम् । गौडशेष । बाष्प बाष्पम्-नेत्रवारि । क्लीबे बुद्धिसागर । ऊष्मा च । पुंस्यरुण । 'क्लीबे बाष्पमूष्मणि चाश्रुणी'त्यजय । द्वीप॰ द्वीपम्-द्विधा गता आपो यत्र । यत्त्वमर 'द्वीपोऽस्त्रियाम् । विष्टप विष्टपम्-भुवन 'विष्टप पुमानि'ति माला । षण्ढेऽमर । निप निपम्-घट । 'निपोऽस्त्रियाम्' इति गौड ॥ अथ फान्तः-शफ शफम्-खुर । अरुण ॥ अथ बान्तौ-डिम्ब डिम्बम्, उदरान्तरावयव । पुंसि गौडः । भयध्वनौ पुप्फुसे च डिम्ब । प्लीहनि विरवे । षण्ढेऽरुण । बिम्ब बिम्बम्-प्रतिबिम्ब मण्डल च । यद्गौड 'मण्डले प्रतिबिम्बे स्त्री बिम्ब स्यात्' ॥ अथ भान्ताः पञ्च-जम्भ जम्भम्-जम्बीर । गौडशेष । कुसुम्भ कुसुम्भम्-कमण्डलु महारजन च । पुंस्यजय । क्लीबेऽरुण । गौडस्तु 'स्यान्महारजने क्लीब कुसुम्भो ना कमण्डलौ' इत्याह । ककुभ ककुभम्-वीणाप्रसेव । अरुणस्य गन्धभेदेऽर्जुनद्रुमे च भान्तत्वात्पुंसि । कलभः

---

आहाय इति मराठे । कोरिवमिति लोके चउकडभो । वैद्यति कश्चिद चडकडओ इत्यप । पंक्षिलस्वामिनि पाणरव । वैत्कृत इति छागरोमकृत । अपराह्णकाल इति दिवसस्य अष्टमोंऽशः मध्याह्नात्प्रभृति धावत्काल ; यत्स्मृति 'दिवसस्याष्टमे भागे मन्दीभवति भास्करे । स काल कुतपो यत्र पितृभ्यो दत्तमक्षयम्' इति ॥ १ ॥ दर्भे इति दर्भे । भगिनीसुते इति भागिनेय लोके भाणेजा । सहस्रदीधितौ इति सूर्ये । वलय इति कङ्कणम् । धान्यादिपवनभाण्डमिति लोके छाजा ॥ २१ ॥ मृदादिकूट इति लोके थूभ । बोधिसत्त्वभवनमिति बुद्धगृहम् । उपायतनमिति आयतनसमीप देवकुलिकेत्यर्थः । प्लव इति प्रायो । शाखाकटम इति शाखामूलः । ऊष्मेति लोके बाफ । भयध्वनौ इति भयहेतुशब्दे । विरवे इति रमरे । वीणाप्रसेव इति वीणाया दण्डाध नादगाम्भीर्यार्थं दारुमय खण्डम् । गन्धभेदे इति राग

फलभम्-करिपोत । पुंसि रूढ । क्लीबे दुर्ग । निभ॰ निभम्-व्याज॰ । पुंसि गौड - 'सदृशव्याजयोर्निभ' । क्लीबेऽरुण । सदृशे त्वाश्रयलिङ्ग॰ ॥ अथ मान्ताः षोडश-अर्म अर्मम्-चक्षुरोगविशेष । दुर्गारुणयो । सङ्क्राम सङ्क्रामम्-जलतरणविशेष, दुर्गसञ्चरश्च, बाहुलकाद् घञि वृद्धि । सङ्क्रम सङ्क्रमम्-सङ्क्राम एव । दुर्ग । ललाम ललामम्-शृङ्गम् पुच्छम्, हयमुखेऽन्यवर्ण पुण्ड्र, केतुश्च । पुंस्यरुण । स्त्रीने अमरराजयो । प्रधाने त्वाश्रयलिङ्ग । हिम हिमम्-तुषार । दुर्ग । हेम हेमम्-स्वर्णम् । नन्दी । नन्तस्य तु मनन्तत्वान्नपुंसकत्वम् ॥ वसन्ततिलकम् ॥ २२ ॥

उद्यमकामोद्यामाश्रमकुट्टिमकुसुमसङ्गमा गुल्मः ।
क्षेमक्षौमौ कम्बलिवाह्यो मैरेयतूर्यौ च ॥ २३ ॥

एते शब्दाः पुन्नपुंसका॰ । उद्यम उद्यमम्-उत्साह । शाकटायन । काम॰ कामम्-अभिलाष । गौडशेष॰ । उद्याम उद्यामम्-उद्यम । उद्यमो परमानिति निपातनाद्वृद्धिनिषेधेऽप्यत एव निपातनादाद्यमपि । शाकटायन । आश्रम आश्रमम्-मुनिस्थानम्, ब्रह्मचर्यादिश्च । यद्गौड-'मठादौ ब्रह्मचर्यादिचतुष्के चाश्रमोऽस्त्रियाम्' । कुट्टिम कुट्टिमम्-सस्कृतभूमिविशेष । यन्माला 'कुट्टिम वा ना' । कुसुम कुसुमम्-पुष्पम् । यद्गौड 'अस्त्रिया कुसुमम्' । सङ्गम सङ्गमम्-सङ्गति । यन्माला 'सङ्गमो वा ना' । गुल्म॰ गुल्मम्-प्रकाण्डसैन्यपरक्षण चेति दुर्ग॰ । प्लीहा[9] विटपश्च[10] । अनयो पुंस्यजय । क्लीबे नन्दी । गौडस्तु '[11]सैन्यघट्टभिदो प्लीहस्तम्बयो सैन्यरक्षणे । गुल्मो गुल्मी त्वामलक्यैलावेनीवस्त्रवेश्मसु' इत्याह । क्षेम क्षेमम्-कुशल लब्धरक्षण च । यद्गौड 'क्षेमा धनहरी न स्त्री कल्याणे लब्धरक्षणे' । क्षौम क्षौमम्-दुकूलम् अट्टालक अभ्यन्तरे प्राकारधरणार्थं स्थोमीरयश्च । यदमर 'क्षौममस्त्रियाम्' ॥ अथ यान्ता एकविंशतिः । कम्बलिवाह्य कम्बलिवाह्यम्-गन्त्री । पुंसि माला । क्लीबेऽमर । मैरेय मैरेयम्-शीधु । पुंसि माला । षण्ढेऽमर । तूर्य तूर्यम्-वाद्यम् । कश्चित् ॥ आर्या ॥ २३ ॥

पूयाजन्यप्रमयममया राजसूयो हिरण्या-
रण्ये सह्य मलयवलयौ वाजपेयः कषायः ।

---

भेदे । व्याज इति कपटम् । चक्षुरोगविशेष इति लोके चक्षुर्मध्ये ऊर्मि इति नामा रोग । हयमुखे अन्यवर्ण पुण्ड्र इति अश्वमुखे स्वाभाविक सुवर्णवर्णादन्यवर्णतिलको मुखपट्ट इत्यर्थ । केतुरिति चिह्नम् ॥ २२ ॥ ब्रह्मचर्यादिरिति ब्रह्मचारी गृहस्थो वानप्रस्थो यतिरिति चत्वार । सस्कृतभूमिविशेष इति गृहस्य पाषाणादिभिर्बद्धा भूमिरित्यर्थ । प्रकाण्डमिति स्तम्ब । उपरक्षणमिति सैन्योपरक्षण दुर्गरक्षणाय यत् किञ्चित् गोलादिक कपिशीर्षादिषु मुच्यते । प्लीहेति उदर्या व्याधि । विटप इति लतासमूह । सैन्यघट्टभिदोरिति सैन्यभेदघट्टभेदयो । घट्टभेद शुल्कस्थानभेद । आमलकीति धात्री, लोके आमल्की । एलेति लोके पलची । वेनीति हस्व धनम् । वस्त्रवेश्मेति तंबोटी प्रमुखवस्त्रगृहम् । धनहरीति ओषधी विशेष । दुकूलमिति लोके खीरोदक अथवा पटकूल । अट्टालक इति लोके बुरज । सोमास्य इति

शल्य कुल्याव्ययकवियवद्गोमय पारिहार्यः
पारावारातिसरशिखराः क्षत्रकरोपचाराः ॥ २४ ॥

एते शब्दा पुन्नपुंसका । पूय पूयम्–क्लिन्नास्रम् । अमरलिङ्गशेषः । अजन्य अजन्यम्–उत्पातः । पुंसि माला । क्लीबेऽमर । प्रमय प्रमयम्–मरणम् । यदमर 'प्रमयोऽस्त्री' । समय समयम्–काल । दुर्ग । अन्यत्राल्न्तत्वात्पुंसि । यदाह 'समय शपथाचारसिद्धान्तेषु च संपदि । क्रियाकारेऽथ निर्देशे सङ्केते कालभाजयो' । राजसूय राजसूयम्–क्रतु । भोज । हिरण्य हिरण्यम्–सुवर्णम् । शाकटायन । गौडस्तु 'अभय्ये रेतसि द्रव्ये शातकौम्भवराटयो । अकुप्ये मानभेदे च हिरण्य स्यान्नपुंसकम्' इत्याह । अरण्य अरण्यम्–अटवी । नन्दी । सङ्गः सङ्गम्–रणम् । पुंसि हर्षारुणौ । षण्डे गौड । 'विचारोच्चारणेऽन्यादिषु स्त्री मल्लमाहवे' । मलय मलयम्–गिरिविशेष । नन्दी । वलय वलयम्–कटक । यदमर 'वलयोऽस्त्रियाम्' । 'तनुत्वरमणीयस्य मध्यस्य च भुजस्य च । अमयगितरा सख्या वलय शान्तिवृद्धये' । समूहश्च अरण्यस्य । वाजपेय वाजपेयम्–क्रतुविशेष । भोज । कषायः कषायम्–'रसभेदेऽङ्गरागे च निर्यासेऽपि विलेपने । क्रोधादौ च कषायोऽस्त्री सुरभौ लोहिते त्रिषु' । शल्य शल्यम्–शरीरगत शस्त्रादि । यदमर 'वा पुंसि शल्यम्' । मीमा छिद्र–यशादीनां शंकलविशेषश्च । दुर्ग । कुल्य कुल्यम्–अस्थि जलपथश्च । दुर्ग । गौडस्तु 'अष्टद्रोण्या कीकसे च कुल्यमामिषसूर्पयो । नद्या पये प्रणाल्या स्त्री वाच्यलिङ्ग कुलोद्भवे' इत्याह । अव्यय अव्ययम्–स्वराद्य । नन्दी । कविय कवियम्–खलीनम् । दुर्ग । गोमय गोमयम्–गोशकृत् । यदमर 'गोमयमस्त्रियाम्' । पारिहार्य पारिहार्यम्–आवाप । पुंस्यमर । क्लीबे माला ॥ अथ रान्ता द्विसप्तति । पार पारम्–परतीर समाप्तिश्च । अवार अवारम्–अर्वाक्तीरम् । उभयमरलिङ्गशेषे । पारावारेति समस्तमिति गौड । अतिसर अतिसरम्–औषधिविशेष । शाकटायन । शिखर शिखरम्–शैलाग्रादि । यद्गौड 'शिखर शैलवृक्षाग्रपुलकेषु न योषिति । पक्वदाडिमबीजाभमाणिक्यशकलेऽपि च' ।

लोके अवाड । गर्भीनि लोके महिला ॥ २३ ॥ क्लिन्नास्रम् इति पक्व रुधिर लोके राधिपीरू इति वा । संपदीति लक्ष्म्याम् । यथा 'उपकारो हि कर्तव्य कृतिभि समये सति' । क्रियाकारे इति व्यवस्था स्थापने । निर्देशे इति आज्ञायाम् । क्रतुरिति यज्ञ । अभव्ये इति अविलचारे । शातकौम्भवराटयोरिति सुवर्णकपर्दयो । अकुप्ये इति घटिताघटितस्वर्णरूप्यलक्षणे । मानभेदे उदाहरण यथा । 'हिरण्यमेक गाभेक्त भूमेरप्येकमङ्गुलम्' । रसभेदे इति तुवराख्ये लोके कसायलो । अङ्गरागे इति कुङ्कुमादौ । निर्यासे इति क्वाथरसे । विलेपने इति अवलेहने । क्रोधादा इति क्रोधमानमायालोभेषु । लोहिते इति रक्तवर्णे । शरीरगत शस्त्रादीति लोके सालवशादीनाम् । शंकलविशेष इति शलाका, लोके मिली । जलपथ इति लोके नीक । अष्टद्रोण्यामिति द्रोणाष्टके । कीकसे इति हड्डे । सूर्पमिति इह सूर्पशब्दो निष्पवनभाण्डवाचक, लोके सूपडा अथवा छाज इति प्रसिद्धि । पये प्रणाल्यामिति लोके परनालि । खलीनमिति चउकडओ । गोशकृत् इति लोके गोबर । आवाप इति लोके कांकण । औषधिविशेष इति लोके अहिखरओ । शैलवृक्षाग्रमिति शैलाग्रे वृक्षाग्रे च । पुलक इति रोमाञ्च । पक्वदाडिमबीजाभमाणिक्य

क्षत्र क्षत्रम्—क्षत्रिय । 'क्षत्रोऽपि क्षत्रिये भवेत्' इति माला । क्लीवे तु रूढम् । वस्त्र वस्त्रम्—वास । दुर्ग । उपवस्त्र उपवस्त्रम्—उपवास । पुम्यरुण । क्लीबे माला । यत्तूपवस्ता प्राप्तोऽस्येति ऋत्वादिणि औपवस्त्र उपवास, तत्सयुक्तरान्ततयानपुसकम् । उपवस्तुरिदमित्यत्राऽपि । यत्स्मृति 'मापान्मधुमसूराश्च वर्जयेदौपवस्त्रके' ॥ मन्दाक्रान्ता ॥ २४ ॥

अलिञ्जरः कूनरकूरवेरनीहारहिञ्जीरसहस्रमेढ्राः ।
ससारसीरौ तुवरश्च सूत्रशृङ्गारपद्रान्तरकर्णपूराः ॥ २५ ॥

एते शब्दा पुन्नपुसका । अलिञ्जर अलिञ्जरम्—मणिक । पुस्यमर । क्लीबे माला । धूनर धूनरम्—युगन्धर । पुसि माला । क्लीबे नन्दी । कूर कूरम्—ओदन । पुसि माला । क्लीबेऽपि कश्चित् । वेर वेरम्—देह । पुसि गौड —'कलेवरे पुमान्वेर'। अन्यस्तु क्लीबे—'वेर शरीरे काश्मीरे वेरं वार्तिंगणेऽपि च'। नीहार नीहारम्—हिमम् । पण्ढे वामन । हिञ्जीर हिञ्जीरम्—अदुक । कश्चित् । सहस्र सहस्रम्—दशशतानि । दुर्ग । मेढ्र मेढ्रम्—शेफ । अरुण । ससार ससारम्—जगत् । अरुण । सीर सीरम्—हलम् । पुसि माला । क्लीबेऽपि कश्चित् । रवौ तु देहिनामत्वात् पुसि । तुवर तुवरम्—कपाय । पुस्यमर । क्लीबे माला । सूत्र सूत्रम्—तन्तु सूत्रणा च । शृङ्गार शृङ्गारम्—रसविशेष । उभयोर्नन्दी । गौडस्तु 'रसे नाट्यस्य शृङ्गार पुमान्मातङ्गमण्डने । नपुसक लवङ्गेऽपि नागसम्भवचूर्णयो' इत्याह । पद्र पद्रम्—ग्रामस्थानविशेष । पुस्यरुण । क्लीबे रूढ । अन्तर अन्तरम्—मध्यम् छिद्रम् अवकाश विनार्थ अवधि विशेषश्च । अरुण । गौडस्तु 'अन्तरमऽवकाशाऽवधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनावहिरवसरमध्येऽन्तरात्मनि च' इत्याह । कर्णपूर कर्णपूरम्—यदाह 'कर्णपूरोऽवतसे स्यान्नीलोत्पलशिरीषयो' । गौडस्तु 'नीलोत्पलेऽवतसे च कर्णपूर नपुसकम्' । एव च नीलोत्पलाऽवतंसयो पुन्नपुसकता ॥ उपजाति ॥ २५ ॥

नेत्र वक्त्रपवित्रपत्रसमरोशीरान्धकारा वरः
केदारप्रदरौ कुलीरशिशिरावाडम्बरो गह्वरः ।
क्षीर कोटरचक्रचुक्रतिमिराङ्गारास्तुपार शर-
श्चाष्ट्रोपह्वरराष्ट्रतक्रजठरार्द्राः कुञ्जरः पञ्जरः ॥ २६ ॥

एते शब्दा पुन्नपुसका । नेत्र नेत्रम्—नयनम्, परिधानविशेष । वक्त्र वक्त्रम्—मुखम् । द्वयोर्दुर्ग । पवित्र पवित्रम्—पावनम् । दुर्ग । वाच्यलिङ्गोऽयमित्यन्ये । यदाह 'पवित्र वर्षणे कुशे' 'पवित्र ताम्रपयसोर्मध्ये चापि तदन्यवत्' । पत्र पत्रम्—पर्णम् वाहन च । दुर्ग । समर समरम्—रणम् । यन्माला 'समर तु नृपण्ढयो' । उशीर उशीरम्—वीरणीमूलम् ।

शकले इति लोके घूनी ॥ २४ ॥ मणिक इति लोके मूणि । युगन्धर इति लोके कोगूया इति प्रसिद्धि । काश्मीरे इति केसरे । वार्तिङ्गणे इति लोके वहङ्गण । मातङ्गमण्डने इति गजमण्डने । नागसम्भवमिति सिन्दूरम् । शिरीष इति लोके सिरीषनामा वृक्ष ॥ २५ ... इति पटोलाग्रगुरवस्त्रभेदः ।

कुश्या' प्रसवयोगिता' । विहार' विहारम्–भिक्षुस्थानम् यतिचर्या च । बुद्धिसागर । वार वारम्–पारिपाटि अवसर समूहश्च । दुर्गारुणयो । कान्तार' कान्तारम्–महारण्यम् दुर्गपथ वन च । यद्गौड 'महारण्ये वने दुर्गे कान्तार पुन्नपुंसक' । तोमर तोमरम्–शस्त्रविशेष । यन्माला 'नृपण्ढे तोमरम्' । दुरोदर दुरोदरम्–पण । यदमर 'पणे द्यूते दुरोदरम्' । 'पणे द्यूतकारे नर' इति तु माला । द्यूतकारे तु प्राणिनामत्वात्पुल्लिङ्ग । वासर वासरम्–दिनम् । यदमर 'वा तु क्लीबे दिवसवासरौ' । कासार कासारम्–पल्वलम् । पुंसि माला । क्लीबेऽरुण । केसर केसरम्–किञ्जल्क । यद्गौड 'सिंहच्छटासु पुन्नागे बकुले नागकेसरे । केसर पुंसि किञ्जल्के न स्त्री हिङ्गुनि न द्वयो' । अरुणस्तु 'सिंहच्छटाकुङ्कुमयोरपि क्लीबमाह । एव च सटायामपि पुन्नपुंसकत्वम् । करीर करीरम्–वंशाद्यङ्कुर वृक्षविशेष घटश्च । 'वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना' इत्यमर । निष्नपि षण्ढ इति दुर्ग । शरीर शरीरम्–काय । गौडशेष । जीर जीरम्–अजाजी । पुंसि माला । क्लीबे हर्ष । के जीरक जीरकमित्यपि । मञ्जीर मञ्जीरम्–नूपुर । अरुणस्य । शेखर शेखरम्–शिरोभूषणम् । दुर्गस्य । युगन्धर युगन्धरम्–कूबर । हर्षारुणयो । वज्र वज्रम्–अशनि मणिवेध रत्न च । यन्माला 'मणिवेधे पवौ रत्ने वज्र क्लीबे च पुंसि च' । वप्र वप्रम्–क्षेत्रादि । यद्गौड 'वप्रस्ताते[10]ऽस्त्रियां क्षेत्रे चये रेणौ[11] च रोधसि' ॥ वसन्ततिलका ॥ २७ ॥ अथ लान्तास्त्रिपञ्चाशत् ॥

आलनालपलभालपलालाः पल्वलः खलचपालविशालाः ।
शूलमूलमुकुलास्तलतैलौ तूलकुड्मलतमालकपाला. ॥ २८ ॥

एते शब्दा पुन्नपुंसका । आलवाल आलवालम्–पुंसि माला । षण्ढे त्वमर । पल पलम्–मांसम् । मानविशेषश्च । बुद्धिसागर । भाल भालम्–ललाटम् । कश्चित् । पलाल पलालम्–धान्यादे शुष्कनालम् । यदमर 'पलालोऽस्त्री' । पल्वल पल्वलम्–कासार । अरुण । खल खलम्–पिण्याक दुर्जनश्च । दुर्गबुद्धिसागरौ । दुर्जने आश्रयलिङ्गोऽयमित्येके । रणाजिर च नन्दिपारायणे । चपाल चपालम्–यज्ञपात्रम् दुर्ग । विशाल विशालम्–विस्तीर्णता । शाकटायन । गुणवृत्तेस्त्वाश्रयलिङ्गता । शूल शूलम्–'आयुधे रुजि शूलोऽस्त्री शूला स्यात्पण्ययोषिति' । वधार्थशङ्कौ च । मूल मूलम्–आदि । प्रतिष्ठा शिफा

---

योगिता' ॥ १ ॥ इत्येवस्य व्याख्या । हिमारण्ये इति हिमारण्ययो शब्दयोः । महत्त्वेन युक्ते इति महत्त्वेन युक्तयो स्त्रीत्वमवस्थितम् । यथा । महत् हिम हिमानी । महत् अरण्य अरण्यानी । ह्रस्वोपाधिविशिष्टाया कुश्या कुटीशब्दस्य प्रसवयोगिता पुल्लिङ्गवत्त्वमित्यर्थ । 'प्रसवयोगिता पुस्त्व सत्त्वानयोगिता स्त्रीत्व स्थिता योगिता नपुंसकत्व इति शाब्दिकानां स्थिति' इति महाभाष्यवचनात् । पणे इति द्यूते ओड्ड इति प्रसिद्धि । द्यूतकारे इति लोके जुआरी । वृक्षविशेष इति लोके करूर । अजाजीति लोके जीरओ । कूबर इति लोके कांबूजी । मणिवेध इति हीरओ । ताते इति पितरि । क्षेत्रे इति केदारे । चये इति प्राकारपीठभुवि । रोधसीति तटे ॥ २७ ॥

च । नन्दी । अभेदश्च पुंसि गौड । नैर्ऋतो मूल । क्लीबे रूढम् । मुकुल मुकुलम्–कुड्मल । यदमर 'कुड्मलो मुकुलोऽस्त्रियाम्' । तल तलम्–अध स्वभावश्च । यथा 'तनुतलोदरी कन्या' । यद्गौड 'स्वभावाऽधरयोरस्त्री क्लीब व्याघातचारणे । चपेटे गन्ध्रमुष्टौ च तलस्ताऽडुमे पुमान्' । पृष्ठे तु लान्तत्वात्पुंस्त्व । तैल. तैलम्–तिलादिस्नेह । यन्माला 'तैल नृपण्डे' । तूल तूलम्–पिचु । अरणस्य । कुड्मल कुड्मलम्–पुष्पमग । क्लीबेऽरण । तमाल तमालम्–वृक्षविशेष । नन्दी । कपाल कपालम्–शिरोऽस्थ्यादि । यद्गौड 'शिरसोऽस्थि कपालोऽस्त्री घटादे शकले भेने' । भिक्षाभाजने तु क्लीनपुंसको वक्ष्यते ॥ स्वागता ॥२८॥

कमलप्रवालबलशम्बलोत्पलोपलशीलशैलशकलाङ्कुलाञ्चलाः ।
कमल मल मुसलसालकुण्डलाः कलल नल निगलनीलमङ्गलाः ॥ २९ ॥

एते शब्दा पुंनपुंसका । कवल कवलम्–भक्ष्यपिण्ड । अरुण । प्रवाल प्रवालम्–नवकिसलयम् वीणादण्ड विद्रुमश्च । यद्गौड 'वीणादण्डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे' । 'वा ना प्रवाल स्तम्बेऽपि' इति तु माला । बल बलम्–प्राण । दुर्ग । अर्थप्राधान्यात्सह सहमित्यपि । यद्गौड 'दण्डोत्पला मुद्गपर्णी कुमारी रसभेषजे । सहा स्त्रिया बले ना स्त्री सह प्रान्ते सहा भुवि' । सैन्यस्थौल्यरूपेषु लान्तत्वान्नपुंसकत्वम् । कार्ष्मीरिणोस्तु पुंलिङ्ग । शम्बल शम्बलम्–पाथेयम् । दुर्ग । उत्पल उत्पलम्–सरोजम् । नन्दी । गौडस्तु 'इन्दीवरे मांसशून्ये उत्पल कुष्ठभूरुहे' इत्याह । अर्थप्राधान्यात्कुवल कुवलमित्यपि । पुंसि गौड 'कुवलो बदरोत्पले' । क्लीबे तु 'कुवल चोत्पले मुक्ताफले च बदरीफले' । बदर्या तत्फले च त्रिलिङ्गो वक्ष्यते । उपल उपलम्–पाषाण । दुर्ग । शील शीलम्–सद्वृत्तम् स्वभावश्च । नन्दी । शैल शैलम्–शैण्ट । बुद्धिसागर । शकल शकलम्–खण्डम् । दुर्ग । अङ्कुल अङ्कुलम्–अङ्कुलीमानम् । यन्माला 'ना वाऽङ्कुल' । अञ्चल अञ्चलम्–वस्त्रैकदेश । पुंसि रूढ । क्लीबे हर्ष । कमल कमलम्–सरोजम् । नन्दी । जले तु सनामत्वान्नपुंसक । कृष्णे तु देहिनामत्वात्पुंस्त्वम् । लक्ष्म्या तु स्त्रीत्वमेवोक्तम् । अर्थप्राधान्यान्नालीक नालीकमित्यपि । पुंसि गौड 'नालीकस्तु शरा नयो' । क्लीबे तु 'नालीक पद्मखण्डेऽब्जे' । मल मलम्–किट्ट रज विष्ठा पाप च । यदमर 'मलोऽस्त्री पापविट्किट्टानि' । कृपणे त्वाश्रयलिङ्ग । किट्टे चार्थप्राधान्यात् किट्ट किट्टमित्यपि । पुंसि माला । क्लीबेऽमर । मुसल मुसलम्–आयुध विशेष । दुर्ग । क्षोदनोपकरण च । यद्गौड 'स्त्री तालमूल्या ज्येष्ठायामऽयोऽग्रे

---

[13] कासार इति लघुतडाकम् । [14] पिण्याक इति लोके खलि । [1] अभेद इति नक्षत्रभेद मूलनक्षत्रमित्यर्थ । [2] अधर इति अधोभाग । [3] व्रजे इति समूहे ॥ २८ ॥ [4] भक्ष्यपिण्ड इति लोके कवा । [5] स्तम्बे इति गुल्मे । [6] दण्डोत्पलेति सहदेवीनाम्नी ओषधि । [7] मुद्गपर्णीति लोके मुद्गवी । [8] कुमारीति लोके सेवन्ती । [9] रस भेषजे इति लोके नम्र इति प्रसिद्धि । [10] सीरीति बलभद्र । [11] पाथेयमिति लोके सबलओ । [12] मांसशून्ये इति मासाभावे । [13] कुष्ठभूरुहे इति लोके उपलोट । [14] शैण्ट इति पर्वतभ्रष्ट पाषाण लोके गला इति प्रसिद्धि । [15] पद्मखण्डे इति कमलवने । [16] तालमूलीति लोके मूसलीकन्द । [17] ज्येष्ठायामिति गृहगोधिका

मुसलोऽस्त्रियाम्' । अत्र चार्थप्राधान्यादयोऽग्र. अयोऽग्रमित्यपि । पुंसि माला । अयोऽग्रो मुसल. । 'अयोग्रं मुसलोऽस्त्रियाम्' इत्यमर । साल॰ सालम्—वृक्षविशेष । नन्दी । गौडस्तु 'पुंसि भूरुहमात्रेऽपि साल प्राकारसर्जयो' इत्याह । सर्जे तालव्यादिरयमिति कश्चित् । यदाह 'शालो हालनृपे मत्स्यप्रभेदे सर्जपादपे' । कुण्डल कुण्डलम्—कर्णाभरणविशेषः । नन्दी । गौडस्तु 'काञ्चनद्रौ गुडूच्यां च स्त्रियां पाशे नपुंसकम् । कुण्डल कर्णभूषायाम्' इत्याह । कलल कललम्—शुक्रशोणितयोरीषद्घन परिणाम । यदमर 'कललोऽस्त्रियाम्' । नल नलम्—अन्त शुषिरस्तृण । शाकटायन । अन्यस्तु 'नल पोटगले राज्ञि पितृदेवे कपीश्वरे । नली मन शिलायां च नलिने तु नल मतम्' इत्याह । 'णल गन्धे' इत्यस्येद कृत-ल्त्वानडादस्य विशेष । निगल्यते बध्यतेऽनेनेति निगल॰ निगलम्—पादबन्धने । नन्दी । अयमपि धातुभेदेन कृतलत्वान्निगडान्न सिध्यति । नील नीलम्—वर्णविशेष । शाकटायन । रत्ने निधौ च पुंलिङ्ग उक्त । मङ्गल मङ्गलम्—प्रशस्तम् । नन्दी । सित-दूर्वाया तु तन्नामत्वात्स्त्रीत्वमेव ॥ मञ्जुभाषिणी ॥ २९ ॥

काकोलहलाहलौ हल कोलाहलकङ्कालवल्कलाः ।
सौवर्चलधूमले फल हालाहलजम्बालखण्डलाः ॥ ३० ॥

एते शब्दा पुन्नपुंसका । काकोलः काकोलम्—विषभेद । यदमर 'पुंसि क्लीवे च काकोलकालकूटहलाहला' । हलाहल हलाहलम्—स एव । 'क्ल सह्यो हलाहल' । हल हलम्—सीर । शाकटायनस्य । कोलाहल कोलाहलम्—कलकल । अरुणस्य । कङ्काल कङ्कालम्—शरीरास्थि । पुंसि माला । क्लीबे हर्षारुणौ । वल्कल वल्कलम्—वृक्षादीना त्वक् । यदमर 'वल्कलमस्त्रियाम्' । सौवर्चल सौवर्चलम्—रुचकम् । पुंसि माला । क्लीवेऽमर । धूमल धूमलम्—तूर्यम् । यद्बोड 'तूर्ये धूमलोऽस्त्री' । फल फलम्—प्रयोजनम् । कुसुमादिसम्भव च । दुर्ग । अन्यस्तु 'फल हेतुसमुत्थे स्यात्फलके व्युष्टिलाभयो । जाती-फलेऽपि कक्कोले सस्यबाणाग्रयोरपि ॥ फलिन्यां तु फली प्राहुस्त्रिफलाया फल क्वचित्' इत्याह । हालाहल हालाहलम्—विषभेद । पुंसि वामन । क्लीवे लक्ष्यम्—'स्निग्ध भवत्यमृतकल्प-महो कलत्र हालाहल विषमिवाप्रगुण सदैव' । एकदेशविकृतस्यानन्यत्वाद् हालाहल हाला-हलमित्यपि । 'कामममपायि मयेन्द्रियकुण्डैर्यदपि दुष्कृतहालहलौघ' । जम्बाल जम्बा-लम्—कर्दम शैवल च । 'जम्बाल शैवले पङ्के' इति गौड । 'जम्बाल शैवले पङ्के' इति तु कश्चित् । खण्डल खण्डलम्—खण्डवत् ॥ वैतालीयम् ॥ ३० ॥

लाङ्गूलगरलाविन्द्रनीलगाण्डीवगाण्डिवाः ।
उलः पारशवः पार्श्वापूर्वत्रिदिवताण्डवाः ॥ ३१ ॥

---

याम् । काञ्चनद्रो इति काचणारे । शुक्रशोणितयोरीषद्घन परिणाम इति शुक्रशोणितसमवाय इत्यर्थ । पोटगले इति लोके नलु इति प्रसिद्धे । पितृदेवे इति पितृरूपा देवता यत्र ॥ २९ ॥ फलके इति खेटके । व्युष्टिरिति नियमादिफलम् । कक्कोल इति मरिचकोल । सस्यमिति धान्यम् । फलिन्यामिति प्रियङ्गौ ।

एते शब्दा पुनपुंसका । लाङ्गूल लाङ्गूलम् पुच्छम् । मखित् । गरल गरलम्-विषम् । क्लीबेऽमर । पुंसि वसैव लिङ्गशेष । इन्द्रनील इन्द्रनीलम्-रत्नभेद । पुंसि रूढ । क्लीबे माला । अथ वान्ता एकोनविंशतिः । गाण्डीवः गाण्डीवम्-धनु, पार्थधनुश्च । गाण्डिव गाण्डिवम्-तद्वेव । यद्गौड -'जिष्णोर्धनुषि कोदण्डे न स्त्री गाण्डीवगाण्डिवौ' । उल्व उल्बम्-गर्भवेष्टनं जरायुश्च । पारशव पारशवम्-'लोहम्' । उभयो । पुंसि माला । पण्डेऽरुण । 'शूद्राया विप्रतनये पारशवेयशस्त्रयो । भवेत्पारशव पुंसि' इति गौड । पार्श्व पार्श्वम्-कक्षाध शरीरैकदेश । यदमर 'पार्श्वमस्त्री' । गौडस्तु 'पार्श्वं कक्षाधरे वक्रोपाये पर्शुगणेऽपि च' इत्याह । अपूर्व अपूर्वम्-धर्माधर्मौ । मौनम्य । त्रिदिव त्रिदिवम्-स्वर्ग । क्लीबेऽरुण । पुंसि गौड 'स्त्रिया तैरङ्गिणीभेदे त्रिदिवस्त्रिदशालये' । आकाशे तु तन्नामत्वान्नपुंसकत्वमेव । ताण्डव ताण्डवम्-उद्धत नृत्यम्, तृणविशेषश्च । यद्गौड 'नृत्ते तृणविशेषे च ताण्डव पुंनपुंसकम्' ॥ पथ्यावक्त्रम् ॥ ३१ ॥

निष्ठेवः प्रग्रीवः शरावरावौ भावक्लीवशवानि ।
दैवः पूर्वः पल्लवनल्वौ पाश कुलिश कर्कशकोशौ ॥ ३२ ॥

एते शब्दा पुनपुंसका । निष्ठेव निष्ठेवम्-निष्ठीवनम्[12], यन्माला 'अथाऽस्त्रिया तु निष्ठेव' । अत्र प्राग्रीव केचिदधीयते स वाच्यलिङ्ग । यद्गौड 'यज्ञोपकरणद्रव्ये प्राग्रीव वाच्यलिङ्गकम्' प्रग्रीव प्रग्रीवम्-वातायन, मत्तवारणक च । अरुणस्य । शराव शरावम्-वर्धमान । यदमर 'अस्त्री शराव' । राव रावम्-ध्वनिविशेष । नन्दी । भाव भावम्-स्वभाव, प्रवृत्तिनिमित्त शब्दविषये अभिप्राय आत्मा योनिश्च । दुर्ग । क्लीव क्लीवम्-तृतीया प्रकृति । यद्गौड 'अस्त्री नपुंसके क्लीब वाच्यलिङ्गमविक्रमे' । अयमप्राधान्यानपुंसक नपुंसकमित्यपि । क्लीबे माला । नपुंसको भवेदिति भाष्यवचनात् पुंसि । अविक्रमे त्वाश्रयलिङ्गो । शव शवम्-मृतशरीरम् । यदमर । 'शवमस्त्रियाम्' । दैव दैवम्-विधि । दुर्ग । पूर्व पूर्वम्-प्रथमता । बुद्धिसागर । गुणवृत्तेस्त्वाश्रयलिङ्गता । पल्लव पल्लवम्-किसलयम् । यदमर 'पल्लवोऽस्त्री' । पल्लवान्तत्वात्सपल्लव सपल्लवम्-वास । बुद्धिसागर । गौडस्तु 'पल्लवो विस्तरे खड्गे किसले[17] विटपे[18] बले' इति पुंस्याह । नल्व नल्वम्-हस्तचतुःशती । कात्यस्तु 'नल्व विंश हस्तशतम्' इत्याह । पुंस्यमर । क्लीबे माला । अथ शान्ता अष्ट ।

खण्डवत् इति खण्डशब्दवत् यावन्त खण्डशब्दायास्तावन्त खण्डलस्यापीत्यर्थ । भद्र एकत्र मणिदोष श्वेति प्रयोऽर्था ॥ ३० ॥ पार्थधनुरिति अर्जुनधनु । जिष्णोरिति अर्जुनस्य । कललमिति शुक्रशोणितसमवाय । जरायुरिति लोके जर । शस्त्रमिति लोह । शूद्राया विप्रतनये इति य शूद्रायां विप्रेण जन्यते तत्र । पारशवेय इति पर्यायिया पुत्र । कक्षाधरे इति कक्षाधो वयवे । वक्रोपाये इति वक्रोऽनृजुरुपायो रथादि वक्रोपाय तत्र । धर्माधर्मा इति पुण्यपापे । तैरङ्गिणीभेदे इति नदीभेदे ॥ ३१ ॥ निष्ठीवनमिति लोके थूक्या । वातायनमिति गवाक्ष । मत्तवारणमिति लोके मत्तवारणा । शब्दविषय इति शब्दप्रवृत्तिहेतु । अविक्रमे इति सत्त्वरहिते । किसले इति नवे पत्रे । विटप इति शाखा

पाश' प्राशम्—बन्धनम् । बुद्धिसागर' । कुलिश कुलिशम्—वज्र' । दुर्ग । क्लीबे चाऽमर' । पुंसि भट्टि । [1]'विरुग्णोदग्रधाराग्र. कुलिशो मम वक्षसि । अभिन्न शतधात्मान मन्यते बलिन बली' ॥ १ ॥ कर्कश कर्कशम्—[2]अमृदुत्वम् । बुद्धिसागर । गौडस्तु 'रङ्गसाहसिकक्रूरव्दामसृणनिर्दये । त्रिषु कर्कश इक्षौ ना [3]कपिल[4]काश(स)मर्दयो.' इत्याह् । कोश कोशम्—भाण्डागार कुड्मल शपथश्च । यदमर' 'कोशोऽस्त्री कुड्मले खड्गपिधानेऽ[5]र्थौघ[6]दिव्ययो' । भाण्डागारे चार्थप्राधान्याद्गञ्ज गञ्जमित्यपि । यद्गौड 'भाण्डागारेऽस्त्रिया गञ्ज' । योन्या पात्रविशेषे च दृश्यते, यथा मूत्रकोश । नेत्रकोश । चपके पुलिङ्ग । प्रत्याकारे [7]शिम्बाया च त्रिलिङ्गो वक्ष्यते । तालव्योपान्त्यसमानार्थो मूर्द्धन्योपान्त्य कोषशब्दो वक्ष्यते ॥ आपाबलिकापरान्तिका ॥ ३२ ॥

आकाशकाशकणिशाङ्कुशशेपवेपोष्णीषाम्बरीषविषरौहिषमाषमेषाः ।
प्रत्यूषयूषमथ कोषकरीषकर्ष वर्षामिषा रसबुसेरबुसचिक्कसाश्च ॥ ३३ ॥

एते शब्दा पुन्नपुंसका । आकाश आकाशम्—नभ । यदमर' 'वा तु पुंस्याकाशविहायसी' । काश. काशम्—तृणविशेष । यद्गौड 'वाराणस्या स्त्रिया काश [8]क्षवथौ ना [9]तृणेऽस्त्रियाम्' । कणिश कणिशम्—धान्यशीर्षकम् । यदमर 'कणिश सस्यमञ्जरी' । 'कणिशो ना धान्यशीर्षे'मिति तु पालित. । अङ्कुश' अङ्कुशम्—सृणि । यदमर 'अङ्कुशोऽस्त्री'॥ अथ पान्ताः पञ्चदश । शेप शेपम्—उपयुक्ततरे त्वस्त्री शेषो नाऽ[10]नन्त[11]सीरिणो । प्रसादाभिजनिर्माल्ये शनशेषे वधे च ना' । वेप वेपम्—[12]आकल्प । अरुणस्य । तालव्योपान्त्योऽप्ययम् । उष्णीष उष्णीषम्—[13]शिरोवेष्टन [14]किरीट च । 'उष्णीष शिरोवेष्टकिरीटयो' इत्यमर । षण्ढे गौडः—'स्यान्नपुंसकमुष्णीष शिरोवेष्टकिरीटयो' । अम्बरीष अम्बरीषम्—[15]भ्राष्ट्र । पुंसि पालित । क्लीबे गौड —'भ्राष्ट्रे [16]युध्यम्बरीष ना [17]किशोर[18]रविराजसु' । [19]आम्रातकेऽ[20]नुतापे [21]खण्डपर्शौ च । विष विषम्—गरलम् । जल च । नन्दी । रौहिष रौहिषम्—[22]रक्ततृणम् । पुंस्यजय । 'रौहिषो रोहितमृगे [23]मृगमत्स्यविशेषयो' । क्लीबे तु गौड 'कत्तृणे रोहिष क्लीबम् । माष माषम्—धान्यविशेष । परिमाणविशेषश्च । स्वार्थिके के माषक माषकमित्यपि । यदाह 'गुञ्जा पञ्चाद्यमाषक' । धान्यकणा

पाम् । 'विरुग्णोदग्रधाराग्र कुलिशो मम वक्षसि । अभिन्न शतधात्मान मन्यते बलिन बली' ॥ १ ॥ एतद्व्याख्या । हिरण्यकशिपु प्रत्याह कुलिशो वज्र मम वक्षसि बलिन आत्मान शतधा अभिन्न मन्यते भिन्न न जानातीत्यर्थ । किंविशिष्ट कुलिश विरुग्णोदग्रधाराग्र बली बलवान् ॥ १ ॥ [2]अमृदुत्वमिति कठिनम् । [3]कपिल इति कपीळओ । [4]काश(स)मर्द इति लोके कासन्दव इति प्रसिद्धि । [5]अर्थौघ इति द्रव्य सञ्चय । [6]दिव्यमिति शपथ तत्र यथा 'कक्षानिक्षिप्तलोप्त्रस्य कोशपानमिद तव' इति । [7]शिम्बिकायामिति फलिकायाम् ॥ ३२ ॥ [8]क्षवथौ इति लोके खास । [9]तृणे इति कासनादि । [10]अनन्त इति सर्पराज । [11]सीरीति बलभद्र । [12]आकल्प इति लोके वेस । [13]शिरोवेष्टनमिति लोके पाघडी । [14]किरीटमिति मुकुटम् । [15]भ्राष्ट्र इति लोके भाठि । [16]युधीति सङ्ग्रामे । [17]किशोर इति हयशाव । [18]रविरिति सूर्ये । [19]आम्रातके इति वृक्षे । [20]अनुतापे इति पश्चात्तापे । [21]खण्डपर्शौ इति ईश्वरे ... रोहीस । [22]मृगमत्स्यविशेष

दश । द्व कृष्णले रूप्यमाषक इति । अन्ये त्वाहु, 'माषक सप्तकृष्णला' । दुर्गारुणौ । मेप मेपम्–मेण्ढ । दुर्ग । प्रत्यूप प्रत्यूपम्–प्रभातम् । पुस्यमर । क्लीबे रूढ । यूप यूपम्–मांसमुद्गादिरसविशेष । नन्दी । कोप कोपम्–'कोपोऽस्त्री कुड्मले खड्गपिधानेऽर्थोघदिव्ययो । पेश्या पेशे जातिकोपे' । करीप करीपम्–शुष्कगोमयम् गोमयाग्निश्च । दुर्गम्य । कर्प कर्पम्–पलचतुर्थांश । यन्माला 'कर्पश्च पण्डे वा' । वर्ष वर्षम्–संवत्सर वृष्टि भरतक्षेत्रादि च । यदमर 'स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम्' । आमिष आमिषम्–यद्गौड 'उत्कोचे पल्ले न स्त्री आमिष भोग्यवस्तुनि' । अथ सान्ताः सप्तदश । रस रसम्–मधुरादि शृङ्गारादि निप वीर्यं रागश्च । दुर्ग । बुस बुसम्–कैडङ्गर । पुंसि माला । 'बुस क्लीब' इत्यमरः । इत्थुम इत्थुसम्–वस्तुविशेष । शाकटायन । चिक्कस चिक्कसम्–यवान्नविशेष । दुर्ग । चकारात्पायस पायसम्–परमान्नम् । पुंसि गौड 'पुमांस्तु पायस परमान्नश्रीवेष्टयोरपि' । क्लीबे तु 'पायस परमान्ने स्यात् श्रीवासेऽपि च पायस' इति कश्चित् ॥ वसन्ततिलका ॥ ३३ ॥

कर्पास आसो दिवसावतसवीतसमासाः पनसोपवासौ ।
निर्यासमासौ चमसासकाससनेहानि वर्हो गृहगेहलोहाः ॥ ३४ ॥

एते शब्दा पुनपुंसका । कर्पास कर्पासम्–तूलकारणम् । नन्दी । आस आसम्–धनु अमरलिङ्गशेष । आसा तत्वादिष्वास इष्वासमित्यपि । पुंसि गौड 'इषुक्षेपक इष्वासस्त्विषु स्यात्कार्मुके पुमान्' । क्लीब तु माला । दिवस दिवसम्–दिनम् । यदमर 'वा तु क्लीबे दिवसवासरौ' । अवतस अवतसम्–शेखर कर्णपूरश्च । अवस्य वादेशे वतसः वतसमित्यपि । अर्थप्राधान्यादुत्तस उत्तसमित्यपि । यद्गौड 'शेखरे कर्णपूरे स्त्री स्यादुत्तसोऽवतसवत् । वीतस वीतसम्–पञ्जरम् । पुंस्यमर । क्लीबेऽरुण । मास मासम्–जङ्गलम् । दुर्ग । पनस पनसम–वृक्षविशेष । पुंसि गौड । 'कण्टये कण्टकिफले पनसो रुग्भिदि स्त्रियाम्' । पण्डे नन्दी । उपवास उपवासम्–अहोरात्र निरशनता । नन्दी । निर्यास निर्यासम्–वृक्षादीनि स्यन्द । नन्दी । मास मासम्–पक्षद्वयम् । दुर्ग । चमस चमसम्–यज्ञपात्रविशेष । नन्दी । मसूरादिपिष्टे तु बाहुल्यात्स्त्रीत्वमेव–चमसी । अस असम्–स्कन्ध । यदमर 'असोऽस्त्री' । कास कासम्–भाण्डविशेष । नन्दी ॥ अथ हान्ता नव–स्नेह स्नेहम्–सौहृद तैल च । यन्माला 'वा ना स्नेहम्' । तथा 'स्नेह तैल नृपण्डे द्वौ' । वर्ह वर्हम्–कलाप ।

१ योरिति मृगविशेषे मत्स्यविशेषे चेत्यथ । अर्थोघ इति धनसञ्चय । दिव्यमिति शपथ । पेशीयामिति अण्डके । पेश इति चपके । जातिकोपे इति जातिफले । शुष्क गोमयमिति शुष्क छागक लोके सूका छाणा । गोमयाग्निरिति छगणाग्नि । लोकधात्वंशे इति लोक धत्ते लोकधातु जम्बूद्वीप । तस्यांशो भूखण्डो नवधा । इक्ष्वादिरिति क्षीरस्वामी । उत्कोचे इति लञ्चायाम् । कैडङ्गर इति लोके तुस । परमान्नमिति लोके खीर । श्रीवेष्ट इति सरलद्रव ॥ ३३ ॥ तूलकारणमिति लोके कपास । इषुक्षेपक इति धनुर्धर । शेखर इति पुष्परचितमुकुट लोके सेहरओ । कर्णपूर इति कर्णाभरण कुण्डलमित्यथ । कण्टके इति तीक्ष्णाग्रो वृक्षावयव, लोके कांटओ तन्न । कण्टकिफले इति पनसनाम्नि वृक्षे । भाण्डविशेष

पर्णं च । पुंसि गौड॰ 'शिखिपिच्छे दले बर्ह' । क्लीबे कश्चित् 'बर्हं दले केकिपिच्छे' । परिवारे तु पुंस्त्वमुक्तम् । गृह गृहम्, गृहाः गृहाणि—दारा॰ वेश्म च । गेह गेहम्—मदनम् । द्वयमपि दुर्गारुणयो. । लोह लोहम्—अय , शस्त्रक सर्वतैजसम्, अगरुश्च । यद्गौड 'लोहोऽस्त्री शस्त्रके लोहे सर्वतैजसजोङ्गके' ॥ इन्द्रवज्रा ॥ ३४ ॥

पुण्याहदेहौ पटहस्तनूरुहो लक्षाररिस्थाणुकमण्डलूनि च ।
चाटुश्चटुर्जन्तु कशिप्वणुस्तथा जीवातु कुस्तुम्बुरु जानु सानु च ॥ ३५ ॥

एते शब्दा पुन्नपुंसका॰ । पुण्याह पुण्याहम्—पुण्यदिनम् । शाकटायन । देह देहम्—काय । यन्माला 'ना वा देह च' । पटह पटहम्—आनक । यद्गौड 'पटहो ना समारम्भे आनके पुन्नपुंसकम् । तनूरुह तनूरुहम्—पुंसि गौड 'तनूरुहो गरुल्लोम्नी' । 'तनूरुहो(ह ?) गरुल्लोम्नो॰' इति च कश्चित् । पण्डेऽमर । लक्ष लक्षम्—व्याज । पुंसि माला । क्लीबे त्वमर । वेध्ये प्रतिपदपाठान्नपुंसक । सङ्ख्याया तु स्त्रीनपुंसको वक्ष्यते ॥ अथेदन्त:—अयमररि इदमररि—कपाटम् । पुंसि माला । पण्डेऽरुण ॥ अथोदन्ता एकविंशतिः—अय स्थाणु इद स्थाणु—शङ्कु । दुर्गश्च । शिवे तु पुंस्त्वमेव । अय कमण्डलु इद कमण्डलु—करक । यदमर 'अस्त्री कमण्डलु' । अय चाटु इद चाटु—प्रिय वाक्यम् । अय चटु इद चटु—तैदेव । यदमर —अस्त्री चाटुश्चटु श्लाघाप्रेम्णो । अय जन्तु इद जन्तु—प्राणी । कश्चित् । अय कशिपु इद कशिपु (इद कसिपु॰ इद कसिप्वित्यपि) भोजनाच्छादने समस्ते व्यस्ते वा । पुंसि माला । पण्डे वामनारुणौ । अयमणु इदमणु—सूक्ष्मपरमाणुविशेष धान्यविशेषश्च । अरुणश्च । अय जीवातु इद जीवातु—जीवन औषध च । यद्गौड॰ 'जीवे जीवनभैषज्ये जीवातु पुन्नपुंसकम्' । अय कुस्तुम्बुरु इद कुस्तुम्बुरु—धान्यकम् । अरुण । अय जानु इद जानु—अष्ठीवान् । यत्सुश्रुत 'जानुमस्य मृद्नीयात् । क्लीबे तु माला । अय सानु इद सानु—गिरितटम् । यदमर 'सानुरस्त्रियाम्' । इन्द्रवंशा ॥ ३५ ॥

कम्बुः सक्तुर्दारुवेणुर्गुरुर्नास्तुपलाण्डुहिङ्गुःशिग्रुर्दोस्तितउःशीधुश्च भूमा ।
वेमप्रेमब्रह्मगरुल्लोमविहायः कर्माष्ठीवत्पक्ष्मधनुर्नाममहिम्नी ॥ ३६ ॥

एते शब्दा पुन्नपुंसका । अय कम्बु इद कम्बु—शङ्ख । यद्गौड 'अस्त्री शङ्खे पुमान्कम्बु शम्बूके वलये गजे' । कर्बुरे त्वदन्तत्वात्पुंस्त्वम् । अय सक्तु इद सक्तु—यवादिविकृति । दुर्ग । बहुवचनान्त एवायमिति केचित्—सक्तव सक्तून् । अय दारु इद दारु—काष्ठम् । देवदारुश्च । दुर्ग । दार्वन्तत्वाद्देवदार देवदारु, सुरदार सुरदारु, अमरदार

---

इति लोके कांसी । शिखिपिच्छे इति मयूरपिच्छे । दले इति पत्रे । शस्त्रकमिति प्रहरणम् । सर्वतैजसमिति अष्टौ लोहानि । जोंगके इति अगुरौ ॥ ३४ ॥ समारम्भ इति आदिकर्म । गरुत् इति पिच्छम् । लोमेति रोम । शिवे इति ईश्वरे । । धान्यक इति लोके धाणा । इति लोके गोडा ॥ ३५ ॥ शङ्खे इति ... अम्बुमात्रजे । वलये इति कङ्कणे ।

अमदारु, इन्द्रदारु' इन्द्रदारु, महादारु महादारु, पीतदारुः पीतदारु, भद्रदारु भद्रदारु इत्यपि । एते सर्वेऽप्येकार्थाः । अयमगुरु इदमगुरु–गन्धद्रव्यविशेष । यन्माला 'अगुरु वा ना' । 'अन्तर्दग्धागुरुशुचावापथस्य महीपते' । गौडस्तु 'अगरु क्लीबे शिंशपा जोङ्गके लघुनि त्रिपु' इत्याह । अर्थप्राधान्यादगरु अगर्विल्यपि । 'नौऽगरुचिताश्चन्दनपत्रभङ्गा' । अय वास्तु इद वास्तु–गृहभूमि, गृह च । यदमर 'वेश्मभूर्वास्तुरस्त्रियाम्' । गृहे तु दुर्ग । अय पलाण्डु इद पलाण्डु–कन्दविशेष । कस्यचित् । अय हिङ्गु इद हिङ्गु–रामठम् । पुसि हर्ष । क्लीबेऽमरः । अय शिग्रु इद शिग्रु–शोभाञ्जन । 'पुल्लिङ्ग शाकमात्रे स्याच्छिग्रु शोभाञ्जनेऽपि च' इति गौड । क्लीबे तु हर्षटीका । अथोदन्तप्रक्रम एव छन्दानुरोधात् सन्त' । अय दो इद दो –बाहु' । पुसि व्याडि । क्लीबे लक्ष्यम्–'तमुपाद्रव-दुद्यम्य दक्षिण दोर्निशाचर' । अय तितउ इद तितउ–परिपवनम् । 'तितउ पुमानि'त्यमर । रत्नकोशे मालाया च । क्लीबे हर्षवृत्तौ च । 'न स्त्री तितउ' इति गौडः । अय शीधु इद शीधु–मैरेयम् । दुर्गस्य ॥ अथ व्यञ्जनान्तास्त्रयोदश–अय भूमा इद भूम–बहुत्वम् । पुसि लक्ष्यम् । 'भूमान गमयितुमीषिरे पयासि' । क्लीबे वामन । अय वेमा इद वेम–तन्तुवायोपकरणम । हर्षारुणयो । अय प्रेमा इद प्रेम–स्नेह नर्म च । यद्गौड 'प्रेमाऽस्त्री स्नेहनर्मणो' । अय ब्रह्मा इद ब्रह्म–तप वेदा ब्रह्म आत्मा प्रजापति पुरुषश्च । दुर्गारुणौ । अय गरुत् इद गरुत्–सुवर्णं पिच्छ च । पुसि नन्दी । क्लीबेऽरुण । अय लोमा इद लोम–तनूरुहम् । दुर्गस्य । अयं विहाया इद विहाय –'विहाया शकुनौ पुसि गमने पुनपुसकम्' । अय कर्मा इद कर्म–क्रिया व्याप्य च । यद्गौड 'व्याप्ये क्रियाया कर्माऽस्त्री' । अयमष्ठीवान् इदमष्ठीवत्–जानु । यदमर 'अष्ठीवदस्त्रियाम्' । अयं पक्ष्मा इद पक्ष्म–अक्षिरोम तूल च । बुद्धिसागर । अय धनु इद धनु–चापम् । यद्गौड 'धनुर्द्धनुर्द्धरेऽपि स्याद्धनुरस्त्री शरासने' । अय नामा इद नाम–सञ्ज्ञा । शाकटायन । अय महिमा इद महिम–महत्त्वम् । दुर्गे ॥ मत्तमयूरम् ॥ ३६ ॥

पुन्नपुसकलिङ्ग समाप्त ।

---

विकृतिरिति लोके स्यात् । नौऽगरुचिताश्चन्दनपत्रभङ्गा इति किविशिष्टा चन्दनपत्रभङ्गा ? न अगरु चिता न अगरुयुक्ता इत्यर्थ । पक्षे नागे सर्पं रचिता शोभिता । इह पत्रभङ्गशब्देन स्त्रीणा कपोलस्तनमण्डलादिषु कस्तूरिकादिभि पत्ररचनोच्यते । कन्दविशेषे इति लोके डुगली इति प्रसिद्धि । शोभाञ्जन इति लोके सिरगूअणो । परिपवनमिति लोके चालनी । मैरेयमिति मद्यविशेषोऽयम् । भूमान गमयितुमीषिरे पयासीति माघाष्टमे सर्गे काव्यमिदम् । 'जलकेलौ सख्या अश्रुवर्षं पयासि जलानि भूमान बहुत्व गमयितु प्रापयितु ईषिरे वाञ्छिरे । तन्तुवायोपकरणमिति लोके वासणी इति प्रसिद्धे । नर्मेति क्रीडा । शकुनौ इति पक्षिणि । व्याप्यमिति कारकभेदः ॥ ३६ ॥

इति श्रीज्ञानविमलोपाध्यायशिष्यवाचनाचार्यश्रीवल्लभगणिविरचिते श्रीहेमचन्द्राचार्यकृतलिङ्गानुशासनवृत्तिदुर्गपदप्रबोधे पुन्नपुसका ।



## अथ स्त्रीनपुंसकलिङ्गाः ।

स्त्रीक्लीबयोर्नखं शुक्तौ विश्व मधुकमौषधे ।
माने लक्ष मधौ कल्पं क्रोडोऽङ्के तिन्दुक फले ॥ १ ॥

स्त्रीक्लीबयोर्नख शुक्तौ—शुक्तौ गन्धद्रव्यविशेषे नखशब्दः स्त्रीनपुसकलिङ्ग । नखी नखम्—शुक्तिः । यद्गौड 'स्त्रीक्लीबयोर्नख शुक्तौ नखरे पुन्नपुसकम्' । 'गन्धद्रव्ये नखे नखम्' इति चान्यः ॥ विश्व मधुकमौषधे—विश्वमधुकनामनी औषधे औषधवाचिनी स्त्रीनपुसकलिङ्गे । विश्वा विश्वम्—नागरम् । यदमर 'स्त्रीनपुसकयोर्विश्वम्' । गौडस्तु 'विश्वा विषाया देवेषु ना शुण्ठ्यामतिविषे त्रिषु' इत्याह । एव मधुका मधुकम्—मधुयष्टि । स्त्रियामजय क्लीबेऽमर । औषधे इति किम् ? विश्व जगत् । मधुक त्रपु । प्रतिपदपाठाद्वचनामत्वाच नपुसकत्वम् ॥ माने लक्षम्—लक्षशब्दो माने सङ्ख्याया वाच्ये स्त्रीनपुसकलिङ्ग । लक्षा लक्षम्—सहस्रशतम् । यद्गौड 'सङ्ख्याया तु न ना लक्ष क्लीब व्याजशरव्ययो' । 'कियती पञ्चसहस्री कियती लक्षाऽथ कोटिरपि कियती । औदार्योन्नतमनसा रत्नवती वसुमती कियती' । अन्यत्र वेध्ये प्रतिपदपाठान्नपुसक । व्याजे तु पुन्नपुसक उक्त ॥ मधौ कल्पम्—कल्पशब्दो मधौ मद्ये वाच्ये स्त्रीनपुसकलिङ्ग । कल्पा कल्पम्—मधु । पण्डे रूढ । स्त्रिया तु गौड —'कल्प प्रातः त्रिलिङ्ग तु संज्ञे नीरोगदक्षयो । कल्याणोपायवाचोश्च कौदम्बर्यामपि स्त्रियाम्' ॥ क्रोडोऽङ्के—क्रोडशब्दोऽङ्के उरसि वाच्ये स्त्रीनपुसकलिङ्ग । क्रोडा क्रोडम्—अङ्क । यद्गौड 'स्त्रीनपुसकयो क्रोडा वक्षसि स्यात्किरौ पुमान्' । अन्यत्र क्रोड —सूकर, प्राणिनामत्वात्पुस्त्वम् । तिन्दुकं फले—तिन्दुकशब्द फले वाच्ये स्त्रीनपुसकलिङ्ग । तिन्दुकी तिन्दुकम्—फलविशेषः । स्त्रियाममरलिङ्गशेष । पण्डे तु रूढ । वृक्षे तु स्त्रीपुसलिङ्ग उक्त ॥ पथ्यावक्त्रम् ॥ १ ॥

तरलं यवाग्वां पुष्पे पाटल पटलं चये ।
वसन्ततिलक वृत्ते कपाल भिक्षुभाजने ॥ २ ॥

तरलं यवाग्वाम्—यवाग्वा वाच्याया तरलशब्द स्त्रीनपुसकलिङ्ग । तरला तरलम्—'यवागू तरला च सा' इत्यमर । 'यवागूस्तरल क्लीबे' इति माला । अन्यत्र तु सुरायां तन्नामत्वात्

---

शुक्तिरिति नखनाम गन्धद्रव्यम् । नखरे इति लोके नख अथवा नह इति प्रसिद्धे । नागरमिति शुंठी । विषायामिति अतिविष नामौषध्यम् । देवेष्विति देवेषु वाच्येषु विश्वशब्दो बहुवचनान्त । विश्वे इति । यदाहु — साध्याश्चयोदश प्रोक्ता विश्वे देवाश्चतुर्दशोत्यत्र विश्वे इति छान्दसस्वात्संज्ञायामपि 'जस इ' (१।४।९) । अतिविषे इति समस्ते । मधुयष्टिरिति महुलेठी । व्याजशरव्ययोरिति कपटवेध्ययो । संज्ञे इति सम्बद्धे । कल्याणोपायवाचोरिति कल्याणी चासौ वाक् च । उपायस्य वाक् उपायवाक् तत्र ।

स्त्रीत्वमेव। हारकण्ठमणौ हारे च आभरणविशेषे पुंस्त्वम्। चेलमासुरयोस्तु त्रयवलिङ्ग । पुष्पे पाटलम्—पाटलशब्दः पुष्पे वाच्ये स्त्रीपुंसकलिङ्ग । पाटला पाटली वा । पाटल पुष्पविशेष । यदमर 'पुष्पे स्त्रीयेऽपि पाटला' पाटलीत्यपि । व्रीहौ धान्यविशेषे पुंस्त्वमेव, वर्णे विशेष्यनिघ्नत्वमेव, वर्णवति तु गुणवृत्तित्वादाश्रयलिङ्गता ॥ पटल चये—चये समूहे वाच्ये पटलशब्दः स्त्रीपुंसकलिङ्ग । पटली पटलम्—समूहः । यदमर 'समूहे पटल न ना' । पिटकतिलकपरिच्छदेषु तु स्त्रीनपुंसक । गृहोपरिभागनेत्ररोगयोस्तु त्रिलिङ्गो वक्ष्यते ॥ वसन्ततिलक वृत्ते—वृत्तविशेषे वाच्ये वसन्ततिलकशब्दः स्त्रीनपुंसक । वसन्ततिलका वसन्ततिलकम्—चतुर्दशाक्षरं वृत्तम्। स्त्रिया रूढ । द्वितीयेऽत्र । अन्यत्र तु तिलकलिङ्गेन पुंनपुंसकत्वम्। कपाल भिक्षुभाजने—कपालशब्दो भिक्षुभाजने वाच्ये स्त्रीपुंसकलिङ्ग । कपाली कपालम्—भिक्षुभाजनम्। अवगरा। 'पुण्ये मासे वने वा महति सितपटच्छन्नपाली कपालीम्' । घटावयवे तु पुंनपुंसक उक्त ॥ मतिपुला ॥ २ ॥

अर्द्धपूर्वपदो नावष्यणकर्मनटौ कचित् ।
चोरायमनोज्ञकम् कथानकरुजेरकं ॥ ३ ॥

अर्द्धपूर्वपदो नाव'—अर्द्धशब्दपूर्वपदोऽदसमासान्तो नौशब्द स्त्रीनपुंसकलिङ्ग । अर्द्धनावी अर्द्धनावम् ॥ ष्यणकर्मनटौ कचित्—ष्यणप्रत्ययान्तम्, कर्मणि इति वाक्ये योऽनट्प्रत्ययस्तदन्त च नाम यचिह्नत्वानुसारेण स्त्रीपुंसकलिङ्गम् ॥ ष्यण्—उचितस्य भावः कर्म वा औचिती औचित्यम् । एव यथाकामी याथाकाम्यम्, वैदग्धी वैदग्ध्यम्, मैत्री मैत्र्यम्, आनुपूर्वी आनुपूर्व्यम्, आर्हन्ती आर्हन्त्यम्, चातुरी चातुर्यम्, सामग्री सामग्र्यम्, इत्यादि । कचिद्वचनात्कचित्स्त्रीत्वमेव—श्रीत्मेव श्रौतीयमाचार्यस्य । कचिन्न पुंसकत्वमेव—शुक्लस्य भाव कर्म वा शौक्ल्यम्। एव दार्ढ्यं जाड्य ब्राह्मण्य माणव्य वाडव्यम् ॥ सेनैव सैन्यम्। एव चातुर्वर्ण्यं चातुराश्रम्य त्रैलोक्य सार्ववैद्य चातुर्वैद्य मित्यादि । अनट्कर्मणि—आस्थानी आस्थानम्—राजसभा । राजधानी राजधानम्—स्कन्धावार । चालनी चालनम्—तितउ । एव करणी करणम्, अधिकरणी अधिकरणम्, प्रमाणी प्रमाणमित्यादि । कचिद्वचनात्कचित्स्त्रीत्वमेव । गुणलवनी द्रूव्यम् । धारणी—नाडिका मुद्रोत्तमस्रभेदश्च । भ्रमणी—राज्ञः क्रीडाया क्रिया । प्रसाधनी—कङ्कतिका सिद्धिश्च ।

---

कान्दवयामिति मधे । फलविशेष इति लोके टींट्नामा वृक्षफलस्य फलम् ॥ १ ॥ चेलागूरिति लोके जाडली । चेलमासुरयोरिति चक्षुलसुन्दरयो । पुष्पविशेष इति लोके पाडल । वर्णे इति श्वेतरक्तवर्णे । पिटकमिति पुष्पादिभाण्डम्। तिलक इति लोके टीकओ, यथा 'सा हाटकाकपटल प्रकटीचकार' । परिच्छद इति परिवारः। गृहोपरिभाग इति लोके छाजा। नेत्ररोग इति लोके पडल । २ । अर्द्धनावीति अर्द्ध नाव अर्द्धनावी 'नाव' (७।३।१०४) इत्यदसमासान्तः । औचितीत्यत आरभ्य चातुर्वैद्य यावत् 'भेषजादिभ्यष्ट्यण्' (७।२।१६४) इति ष्यण्प्रत्यय । सार्ववैद्य चातुर्वैद्य इत्यत्र अनुशतिकादित्वादुभयपदवृद्धिः । स्कन्धावार इति कटकम् । करणमिति तृतीय कारकम् । अधिकरणमिति षष्ठ कारकम् । द्रूव्य

वेषे तु नपुंसकम् । गवादनी–गवां घासभुजिस्थानम् । अधिश्रयणी–चुल्लिः । जवनिका–काण्डपटः । अङ्गारधानी–अङ्गारशकटी । क्षेपणी नौदण्डः । क्वचिन्नपुंसकत्वमेव–प्रधीयतेऽस्मिन्निति प्रधानम्, 'प्रकृतौ च महामात्रे प्रज्ञाया परमात्मनि । नपुंसकं प्रधानं स्यादेकत्वे तूत्तमे सदा' । उपधानं उपबर्हणं च–उपधार्हः । उद्धानं चुल्लिः । साध्यतेऽनेन साधनम्–प्रमाणं तुरगादिसमूहश्च । शाश्वतस्तु 'निर्वृत्तौ दापने सिद्धौ गतावनुगमे धने । उपायमृतसंस्कारवधभेदेषु साधनम्' । निवेशनं आवेशनं च–कर्मशाला निःसरणं यानं मरणं मोक्ष उपायः निर्गमः द्वारं च । निस्तरणम्–उपायः तरणं निर्गमश्च । सदानं दाम । छादनं पटलम् । नियानं गोदोहरज्जुः । लक्षणम्–लक्ष्म चिह्नं नाम च, सौमित्रौ तु देहिनामत्वात्पुंसि । औणादिकाणप्रत्ययान्तस्य तु बाहुलकान्नपुंसकत्वम् दोहदलक्षणं गर्भः यौवनसन्धिश्च । लाञ्छनम्–लक्षणमेव, दोषश्च । उपवर्त्तनं देशः, उपावर्त्तनमिति कात्यः । संहननम् शरीरम् । छर्दनम्–'छर्दनं वमने क्लीबं निम्बालम्बुसयोः पुमान्' । वेष्टनम्–'वेष्टनं कर्णशष्कुल्यामुष्णीषे मुकुटे वृतौ । शयनम्–'निद्रायां शयनं क्लीबे शय्यासुरतयोरपि' । शासनम्–'शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशास्तिषु' । उच्छादनं । उत्सादनं उत्साहनं उद्वर्त्तनं च–शरीरमलमार्जनम् । व्याकरणम्–शब्दशास्त्रम् । करणम्–'करणं साधने क्षेत्रे काये कायस्थकर्मणि । गीतेऽङ्गहारसंवेशक्रियाभेदेन्द्रियेषु च' । स्थानम्–'स्थानं स्थितौ च सादृश्ये सन्निवेशावकाशयोः । युक्तार्थे करणार्थे च स्थाने स्यादव्ययं पुनः' । संस्थानम्–'संस्थानमाकृतौ मृत्यौ सन्निवेशे चतुष्पथे' । सवनम्–'सोमनिर्दलने स्नाने क्लीबं सवनमध्वरे' । केतनम्–गृहम्, अवश्यकार्यं च । केतौ तु पुन्नपुंसकः उक्तः, उपनिमन्त्रणे तु भावः इत्येव सिद्धम् । प्रतिमानम्–प्रतिबिम्बं राजदन्तयोर्मध्यम्, तयोः प्रतिमा च । उपणं मरिचादि । मेहनं मेढ्रम् । निदानं हेतुः, अवसानं च । निर्याणम्–करिणोऽपाङ्गदेशः मोक्षः अध्वनिर्गमश्च । सदनं गृहम् । उपसर्जनं

---

मिति लोके सम्ब्रू । गाढिकेति घटिका । प्रकृतिकेति लोके काकसीति प्रसिद्धि । गवां घासभुजिस्थानमिति लोके गवाणि । काण्डपट इति लोके परीयच्छि । अङ्गारशकटीति लोके सिगडी । प्रकृतौ इति सत्त्वरजस्तमसां साम्यावस्थायाम् । महामात्रे इति लोके प्रधान इत्येव प्रसिद्धिः । प्रज्ञायामिति बुद्धौ । एकत्वे उत्तमे इति प्रधानशब्द उत्तमे वाच्ये एकत्वे एकवचने एव भवति । उपधेति लोके ओसीसा । कर्मशालेति शिल्पिशाला । पटलमिति लोके छाजा । गोदोहरज्जुरिति लोके सेलरे । यौवनसन्धिरिति बाल्ययौवनयोः सन्धिरित्यर्थः । अलम्बुस इति राक्षसविशेषः । उष्णीषे इति लोके पाघडी । वृतौ इति लोके वाडि । राजदत्तोर्व्यामिति नृपदत्तभूमौ । शरीरमलमार्जनमिति लोके ऊगटणा । साधने इति साधकतमे । क्षेत्रे इति केदारे । कायस्थकर्मणीति कायस्थकार्ये लिखनादौ । गीतमिति गीतभेदः । अङ्गहारभेद इति स्थिरहस्तपर्यस्तकादिर्द्वात्रिंशत्प्रकारः । संवेशभेद इति संवेशो मैथुनं तस्य भेदो वात्स्यायनोक्तः । अव्ययमिति एकारान्तं अव्ययम् । सोमनिर्दलने इति सोमस्य ओषधिराजस्य निर्दलनं निर्मथनम् । केतौ इति ध्वजे । उपनिमन्त्रणे इति आकारणे । तयोः प्रतिमेति गजदन्तयोः प्रतिमा पित्तलादिमयी लोके खोलीया इति प्रसिद्धिः । करिणोऽपाङ्गदेश इति हस्तिनो नेत्रप्रान्तः । अध्वनिर्गम इति

गोली(रा ?) लक्ष्यानुसारत'। युगली युगलम्—अरुणस्य। अथ शान्तः—बडिशा बडिशम्—मत्स्यबन्धनम्। बडिशीत्यपीत्यमरटीका ॥ अथेदन्तः—इयं छर्दि इदं छर्दि—वान्ति। यन्माला 'छर्दि वा स्त्रियाम्'। स त्वस्तु स्त्रियामुक्त ॥ अथोदन्तास्त्रयः—इयमलाबू इदमलाबु—तुम्बीलता। अरुणस्य। इयं जम्बू इदं जम्बु—जम्बूवृक्षफलम्। यदमर —'फले जम्ब्वा जम्बू स्त्री जम्बु जाम्बवम्'। ऊदन्तोऽयम्, षण्ढे 'क्लीबे' (२।४।९७) इति ह्रस्वे उदन्तता। अन्यत्र कृत इति स्त्रीत्वम्। 'जम्बू सुमेरुसरिति द्वीपद्रुमविशेषयो'। तथा 'स्त्री राजजम्बूर्जम्बूभिरिपिण्डखर्जूरभूरुहो'। इयमुडु इदमुडु—नक्षत्रम्। यदमर 'उडु वा स्त्रियाम्'। अथ व्यञ्जनान्ताः षट्—इयमुषा इदमुष —सन्ध्या। स्त्रिया गौड —'उष प्रत्युषसि क्लीबं पितृप्रस्वाश्च योषिति'। क्लीबे तु कश्चिन्—उष प्रभाते सन्ध्यायाम्'। प्रत्यूषे तु द्विस्वरसन्तत्वान्नपुंसकत्वमेव। आकारान्तस्तु रात्रिवाची। इयं सरसी इदं सर—तडाग। यन्माला 'सरश्च सरसी स्त्रियाम्'। इयं सदा इदं सद —सभा। यदमर 'क्लीनपुंसकयो' सद'। इयं रोदसी इदं रोद —द्यौ पृथ्वी च। यच्छाश्वत 'द्यावापृथिव्योरेकत्रप्रयोगे रोदसीं विदु। दिवि विश्वम्भरायां च रोदसी रोदसा सह'। रोदसीत्यव्ययमप्यस्ति। इयमर्चि इदमर्चि—अग्निशिखा रश्मि च। यदमर 'ज्वालाभासोर्न पुंस्यर्चि'। इयं दामा(म ?) इदं दाम—बन्धनम्। यदमर 'न पुंसि दाम'। गुणे त्वयट्तयट्। पादयोर्द्वयी द्वयम्। वेदानां त्रयी त्रयम्। यदाह 'त्रयी निवेद्या त्रितयं पुरन्ध्र्यां सुमतावपि'। वर्णानां चतुष्टयी चतुष्टयम्। गुणिनि तु गुणवृत्तित्वादाश्रयलिङ्गत्वेन। द्वये पदार्थाः, द्वयी गति, द्वय वस्तु। त्रये लोका, त्रय्यो गुप्तय, त्रयाणि जगन्ति। चतुष्टये कषाया, चतुष्टयी शब्दानां प्रवृत्ति, चतुष्टयं ध्यानम् ॥ उपजाति ॥ ६ ॥

२० इति स्त्रीनपुंसकलिङ्गाः समाप्ताः।

## अथ स्वतस्त्रिलिङ्गाः।

स्वतस्त्रिलिङ्ग सरकोऽनुतर्षे शलल शले।
चरकोऽब्दोपले कोश शिम्बा खड्गपिधानयोः ॥ १ ॥

स्वतस्त्रिलिङ्ग सरकोऽनुतर्षे—स्वतो न तु वाच्यवशात्, अनुतर्षे मद्यपाने वाच्ये

---

मणिक इति श्लोके मत्रणि। प्रत्युषसीति प्रभाते। पितृप्रस्वामिति सन्ध्यायाम्। त्रिवेद्यामिति वेदत्रये। पुरन्ध्र्यामिति स्त्रियाम्। सुमतौ इति शोभना मति सुमतिस्तत्र। चतुष्टयी शब्दानां प्रवृत्तिरिति जातिगुणद्रव्ययदृच्छालक्षणाश्चतस्र शब्दानां प्रवृत्तय इत्यर्थ ॥ ६ ॥

इति श्रीज्ञानविमलोपाध्यायशिष्यवाचनाचार्यश्रीवल्लभगणिविरचिते श्रीहेमचन्द्राचार्यकृतलिङ्गानुशासनवृत्ति-दुर्गपदप्रबोधे स्त्रीनपुंसकलिङ्गा।

सरकशब्दस्त्रिलिङ्ग.—पुंस्त्रीनपुंसकलिङ्ग सरकः सरका सरकम्—अनुतर्ष. । पुंक्लीबे दुर्ग• । स्त्रियामुणादि• । अन्यत्र तु मद्ये मद्यभाजने च पुन्नपुंसक उक्त• । स्वतस्त्रिलिङ्ग इत्यधिकारः । शललः शले—शललशब्द शले श्वाविद्रोमणि वाच्ये स्वतस्त्रिलिङ्ग । शलल शल्ली शललम्—शलम् । यन्माला 'श्वाविच्छलाका शल्ली शलल तु नृपण्डयो '। अन्यत्र तु श्वाविधि देहिनामत्वात्पुंस्त्वम् ॥ करकोऽब्दोपले—मेघपाषाणे वाच्ये करकशब्द स्वतस्त्रिलिङ्ग करक करका करकम्—अब्दोपलः । अरुणस्य । अन्यत्र तु कमण्डलौ करङ्के च पुन्नपुंसक उक्त ॥ कोशः शिम्बाखड्गपिधानयोः—शिम्बा बीजकोश•, खड्गपिधान म्यानाकार । अनयोर्वाच्ययो कोशशब्द स्वतस्त्रिलिङ्ग । कोश• कोशी कोशम्—शिम्बा, खड्गपिधान च । स्त्रीपुंसयोररुण. । 'कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययो[10] । पेश्या पात्रे जातिकोषे' इति गौड । कोशकोषयोरेकार्थ्यम् । चषके पुंलिङ्गो भाण्डागारशपथकुड्मलादौ तु पुन्नपुंसक उक्त ॥ भविपुला ॥ १ ॥

जीवः प्राणेषु केदारे वलजः पवने खलः ।
बहुलं वृत्तनक्षत्रपुराद्याभरणाभिधाः ॥ २ ॥

जीवः प्राणेषु—प्राणा असवस्तेषु वाच्येषु जीवशब्द स्वतस्त्रिलिङ्ग —जीव जीवा जीवम्—प्राणा• । यदाह 'जीवो वृक्षप्रभेदे[14] स्याज्जीवा प्राणिनि गी पतौ । जीवा जीवन्तिका[15]भूम्योर्मौर्वीशिञ्जितवृत्तिषु[16,17,18] । वचायामपि जीवा स्याज्जीव जीवा च जीविते' । 'जीवोऽस्त्री जीविते' इति च गौड । केदारे वलजः—केदारे वाच्ये वलजशब्द स्वतस्त्रिलिङ्ग । वलज वलजा वलजम्—केदार । पुंस्यरुण । क्लीबेऽमर । स्त्रिया भाष —'वलजा पुंपूपता'। अत्र टीका । वलजा क्षेत्रम् । तात्स्थ्यात्तु धान्यम् । अन्यत्र तु सुन्दराकृतौ गुणवृत्तित्वादाश्रयलिङ्ग । द्वारे तु तन्नामत्वान्नपुंसकलिङ्ग । पवने खलः—पूयतेऽत्र धान्यमिति व्याख्यानात्पवन धान्यपवनस्थानम्, तस्मिन्वाच्ये खलशब्द• स्वतस्त्रिलिङ्ग । खल खली खलम्—धान्यपवनस्थानम् । पुंक्लीबे नन्दिधातुपारायणम् । स्त्रिया तु गौड —'खलाधाने खली स्त्रियाम्' ॥ बहुल वृत्तनक्षत्रपुराद्याभरणाभिधाः—वृत्त मात्रादिच्छन्द । वृत्तादीनामभिधा नामानि बहुल लक्ष्यानुसारेण स्वतस्त्रिलिङ्गा । वृत्ताभिधाः—श्लोक पुट पणव पीडा इत्यादि पुंसि । प्रमाणी समानी कलिका आर्या गाथा इत्यादि स्त्रियाम् । उक्त एकाक्षर छन्द अत्युक्त द्व्यक्षर वक्र पथ्यावक्र वितानमित्यादि नपुंसके । दण्डक दण्डकम्—

श्वाविद्रोमणीति लोके सेहला री सिली । श्वाविधीति सेहलानाम्नि । मेघपाषाणे इति गडा इति प्रसिद्धिः । करङ्के इति स्थानविशेषे । ताम्बूलादिस्थानके इत्यर्थ । बीजकोश इति लोके फली । म्यानाकार इति लोके पडीयार । कुड्मले इति लोके डोडा । अर्थौघ इति द्रव्यसञ्चय । दिव्य इति शपथ, लोके सूस । पेश्यामिति मासखण्डे । पात्रे इति मद्यपानभाजने । जातिकोषे इति जातीफले ॥ १ ॥ वृक्षभेदे इति पतजियानामिः वृक्षे । गीष्पतौ इति बृहस्पतौ । जीवन्तिकेति लोके डोडी । भूमिरिति पृथिवी । मौर्वीति लोके पीरज्जनी । शिञ्जितमिति नूपुरध्वनि । वृत्तिरिति ।पुंपूपतेति पवितुमिच्छा । धान्यपवन

भल्लातक आमलको हरीतकविभीतकौ ।
तारकाढकपिटकस्फुलिङ्गा विडङ्गतटौ ॥ ३ ॥

एते शब्दा स्वतस्त्रिलिङ्गा । भल्लातक भल्लातकी भल्लातकम्—यदमर 'भल्लातकी त्रिषु' । आमलक आमलकी ( फले पुन्नपुसक ) आमलकम् । यदमर —'आमलकी त्रिषु' । हरीतक हरीतकी हरीतकम् । वामन । विभीतक विभीतकी विभीतकम् । यन्माला 'त्रिलिङ्ग तु विभीतकम् । सर्वेऽप्येते वृक्षभेदा । तारक तारका तारकम्—नक्षत्रम् । स्त्रीपुसयोररुण । क्लीबे तु—'नक्षत्रे चाक्षिमध्ये च तारक तारकापि च' इति शाश्वत । गौडस्तु—'तारक दृशि ना क्लैबे भक्नीनिकयोर्न ना' । आढक आढकी आढकम्—मानभाण्डविशेष । हर्षस्य । तुवर्यां तु स्त्रीत्वमुक्तम् । पिटक पिटका पिटकम्—भाजनविशेष स्फोटकश्च । आद्ये दुर्ग । अन्त्येऽमर । पिटक त्रिषु । अथ गान्तः—स्फुलिङ्ग स्फुलिङ्गा स्फुलिङ्गम्—अग्निकण । यदमर 'त्रिषु स्फुलिङ्ग' । विडङ्ग विडङ्गा विडङ्गम—कृमिघ्नमौषधम् । यद्गौड —'विडङ्गस्त्रिष्वभिज्ञे स्यात्कृमिघ्ने पुन्नपुसकम् । विडङ्गा जन्तुहन्त्री चेति निघण्टु । अथ टान्ता नव । तट तटी तटम्—रोध । यदमर 'तट त्रिषु' ॥ सङ्कीर्णविपुला ॥ ३ ॥

पटः पुटो वटो वाटः कपाटशकटौ कटः ।
पेटो मठः कुण्डनीडविषाणास्तूणकङ्कतौ ॥ ४ ॥

एते शब्दा स्वतस्त्रिलिङ्गा । पट पटी पटम्—वस्त्रविशेष । स्त्रीपुसयोररुण । पटो-ऽस्त्रीत्यमर । देवनन्दी च । पुट पुटी पुटम्—पत्रमयभाजनम् । यदमरलिङ्गशेष —'त्रिषु पानी पुटी वाटी पेटीकुनलदाडिमौ' । भूर्जोद्यवयवे तु टान्तत्वात्पुस्त्वमेव । वट वटी वटम्—न्यग्रोध । दुर्ग । 'वटी त्रिषु गुणे' इति गौड । तुल्यतायां गोलके भक्ष्यविशेषे च पुन्न-पुसक उक्त । न्यग्रोधफले तु फलनामत्वान्नपुसकत्वम् । वाट वाटी वाटम्—वृतिं । यव-विकारे वैरण्डे अङ्गे च बाहुलकान्नपुसकत्वम् । तथा 'पुसि वर्त्मनि वाट स्यादिक्षुवृतौ वास्तुनो स्त्रियाम्' । कपाट कपाटी कपाटम्—अररि । यदमर 'त्रिषु कपाटम्' । जपादित्वाद्वत्वे, कवाट, कवाटी कवाटा वा, कवाटम् । दुर्ग । शकट शकटी शकटम्—अन । शकटोऽ-स्त्रीत्यमर । स्त्रीक्लीबयोस्त्वरुण । कट कटी कटम्—वीरणादिकृत । दुर्गबुद्धिसागरौ । गजाश्वादिकपोले श्मशानादौ च टान्तत्वात्पुस्त्वम् । औषध्या श्रोणितम्बे तु स्त्रीपुसलिङ्ग । पेट पेटा पेटम्—सङ्घात । परिच्छदश्च । दुर्गस्य । स्वार्थिके के पेटक पेटिका पेटकम्—यदमरटीका—'पेटकस्त्रिषु वृन्देऽपि' मञ्जूषायां तु स्त्रीलिङ्ग उक्त ॥ अथ ठान्तः—मठ मठी मठम्—आश्रयविशेष । हर्षस्य । अथ डान्तौ—कुण्ड कुण्डी कुण्डम्—भाजनविशेष । स्त्रिया रूढ ।

कटककङ्कणभूषणवलयेति पृते कङ्कणवाचका ॥ २ ॥ मानभाण्डविशेष इति ग्रन्थचतुष्टयम् । भाजनविशेष इति लोके पिडओ इति प्रसिद्धि । अभिज्ञे इति पण्डिते ॥ ३ ॥ पत्रमयभाजनमिति लोके पुडओ अथवा पातलि, दोनउ इति वा । न्यग्रोध इति वटनामा वृक्ष । वृतिरिति लोकोक्त्या वाडि । यव विकारे इति लोकोक्त्या वाट इति प्रसिद्धे । वैरण्डे इति हस्त्यादिममूर्द्धे । [illegible] इति अवयवे । इषीकेति

पुन्नपुंसकयोर्दुर्ग । गौडस्तु-'पतिवत्नीसुते जारात्कुण्डो ना पिठरे न ना । कमण्डलौ च कुण्डी स्यात्कुण्ड देवजलाशये' इत्याह । नीड नीडा नीडम्-कुलाय । नीडमस्त्रियामित्यमर । स्त्रीलिङ्गोऽप्ययमिति कश्चित् ॥ अथ णान्तौ-विषाण , विषाणी, विषाणेति वामन । विषाणम्-गवादिशृङ्गम् । दन्तिदन्तश्च । यदमर -'स्वतस्त्रिषु विषाणम्' । तूण तूणा तूणम्-इषुधि । स्त्रीपुंसयोरूणामरौ । तूण तूणीति कश्चित् ॥ अथ तान्तौ-कङ्कत कङ्कती कङ्कतम्-केश-मार्जनम् । पुंस्युणादि । स्त्रिया माला । षण्ढे रूढि । रविपुला ॥ ४ ॥

मुस्तकुथेङ्गुदजृम्भदाडिमाः पिठरप्रतिसरपात्रकन्दराः ।
नखरो वल्लूरो दरः पुरम्छत्रकुवलमृणालमण्डला' ॥ ५ ॥

एते शब्दा स्वतस्त्रिलिङ्गा । मुस्त मुस्ता मुस्तम्-कन्दविशेष । हृपोरुणयो' ॥ अथ थान्तः-कुथ कुथा कुथम्-वर्णकम्बल । रत्नमाला-'कुथ त्रिषु' । दर्भे तु थान्तत्वात्पुंस्त्वम् ॥ अथ दान्तः-इङ्गुद इङ्गुदी इङ्गुदम्-वृक्षविशेष । द्वयोरिङ्गुदीत्यमर । क्लीबे दुर्ग ॥ अथ भान्तः-जृम्भ जृम्भा जृम्भम्-जृम्भणम् । यदमर -'जृम्भस्तु त्रिषु' ॥ अथ मान्तः-दाडिम दाडिमी दाडिमम्-उंचिलिङ्गसार तैरफल तैलकणश्च । अश्णामरलिङ्गशेषयो । वैरवैल्योस्तु मान्तत्वात्पुंसि । यद्गौड -'दाडिम करकैलयो ' ॥ अथ रान्ता नव-पिठर पिठरी पिठरम्-स्थाली । पिठर पुंसीति माला । षण्ढे गौड -'उखायां पिठर क्लीब मुस्त-मन्थानदण्डयो ' । स्त्रिया तु लक्ष्यम्-'जठरपिठरी दुष्पूरेय करोति विडम्बनाम्' । पिठिरस्य तु पुन्नपुंसकत्व दृश्यते । पिठिर पिठिरम्-स्थाली । एतच्च वाहुलकात् । प्रतिसर प्रतिसरा प्रतिसरम्-मङ्गल्यसूत्र वीहिनीजघन च । हृपोरुणयो । गौडस्तु-'व्रणशुद्धौ मन्त्रभेदे चमूपृष्ठे च कङ्कणे । पुंसि प्रतिसरो न स्त्री आरक्षकरसूत्रयो ' । स्त्रीलिङ्गस्तु नियोज्येऽपि । पात्र, पात्री पात्रम्-भाजन कूल्योर्मध्य च । अरुणस्य । योग्ये यज्ञभाण्डे नाट्यानुकर्तरि च सयुक्तान्तत्वान्नपुंसकत्वमेव । योग्ये पुंस्यपीति नन्दी । कन्दर , कन्दरा कन्दरी वा, कन्दरम्-दरी । कन्दरो वा स्त्रीत्यमर । पुन्नपुंसक इति देवनन्दी । अङ्कुशे तु रान्तत्वात्पुंसि । नखर , नखरा नखरी वा, नखरम्-नख । वामनस्य । वल्लूर वल्लूरा वल्लूरम्-शौकर शुष्क वा मासम् । यद्गौड -'स्यादूषरे वनक्षेत्रे वल्लूर वाहनेऽपि च । वल्लूरा त्रिषु सशुष्क-माससूकरमासयो ' । दर दरी दरम्-श्वभ्रम् । यदमर -'दरोऽस्त्रिया भये श्वभ्रे' । श्वभ्रे दर्यपीति सट्टीका । पुर पुरी पुरम्-नगरम् । दुर्गस्य । शरीरागारयोस्तु नपुंसकत्वमुक्तम् ।

---

ओषधिविशेष । वास्तु इति गृहभूमि । चीरणादिकृव इति लोके चिरओ । पतिवत्नीसुते जारादिति जाराज्जीवत्पते स्त्रिया सुते । यदाह-'पत्यौ जीवति कुण्डस्तु इति । पिठरे इति स्थाल्याम् । कुलाय इति लोके माल्ओ । इषुधिरिति लोके भाथओ । केशमार्जनमिति लोके कांकसी ॥ ४ ॥ वर्णकम्बल इति लोके भाथर सेजडी इति वा । वृक्षविशेष इति हिंगोडनामा वृक्ष । जृम्भणमिति लोके वगाईं । उंचि-लिङ्गसाररिति दाडिम । तैरफलमिति दाडिमफलम् । तैलकणश्चेति दाडिमकण । वैरकैलयोरिति लोके दाडिम एलची इति प्रसिद्धयोः । मङ्गल्यसूत्रमिति लोके कांकण इति प्रसिद्धि । वीहिनीजघनमिति

छत्र: छत्री छत्रम्–आतपत्रम् । स्त्रिया रूढि । पुष्टीवे दुर्ग ॥ अथ लान्ता एकादश–कुन्तल कुतली कुवलम्–[1]वृक्षविशेष तत्[2]फल च । अरुण: । मृणाल मृणाली मृणालम्–विसम् । दुर्गारुणयो । मण्डल मण्डली मण्डलम्–देश समूह चन्द्रार्कविम्ब [3]चतुरस्रता कुक्कुरभेद परिधिश्च । समूहे रूढ एव । चन्द्रार्कविम्बेऽमर: । मण्डल त्रिषु । देशचतुरस्रतयोर्दुर्ग । परिधिकुक्कुरभेदयोर्वैजयन्तीकार । [4]सर्पशुनोर्देहिनामत्वात्पुंसि ॥ वैतालीयापरान्तिका ॥ ५ ॥

नालप्रणालपटलार्गलशृङ्खलकन्दलाः ।
पूलावहेलौ कलशकटाहौ षष्टिरेण्विषु ॥ ६ ॥

एते शब्दा: स्वतस्त्रिलिङ्गा । नाल:, नाली नाला वा, नालम्–पद्मादिवृन्तम् । नालो नालमित्यमर । 'पद्मदण्डे न ना नाला स्त्रिया [5]शाकफलम्बके' इति गौड । कण्ठे तु तन्त्रान्तरात्पुंस्त्वमेव । जलनिर्गमे तु वाहुलकात्पुंस्त्वम्–नाल, लत्वाभावे नाड । जलनिर्गम । प्रणाल, प्रणाली प्रणालम्–जलपद्धति । हर्षामरयो । पटल पटली पटलम्–[6]गृहोपरिभाग । [7]अक्षिरोगश्च । स्त्रीनपुंसक इत्यरुण: । पुंनपुंसक इति दुर्ग । समूहे तु स्त्रीनपुंसक उक्त । अर्गल अर्गला अर्गलम्–'अर्गला त्रिषु कल्लोले [8]दण्डे चान्त कपाटयो' । शृङ्खल शृङ्खला शृङ्खलम्–अयोमयी रज्जु, बन्धनम्, पुरुषकट्या काञ्ची । आद्ययोर्हर्ष । अन्त्ये तु 'पुरुषकट्या शृङ्खल त्रिषु' इत्यमर । कन्दल कन्दली कन्दलम्–उपरागादि । यद्गौड –'त्रिलिङ्गमु[9]परागेऽपि [10]कलापे च नवाङ्कुरे । मृगजातिप्रभेदे च कन्दली तु [11]द्रुमान्तरे' । पूल, पूला पूली वा, पूलम्–बद्धतृणसञ्चयविशेष । दुर्गारुणयो । अवहेल अवहेला अवहेलम्–अवज्ञा । पुंसि माला । क्लीबेऽमर । स्त्रिया वट्टीका ॥ अथ शान्त:–कलश कलशी कलशम्–जलाद्याधारविशेष । यदमर –'कलशस्त्रिषु' । [12]मान चेति बुद्धिसागर । अय दन्त्योपान्त्योपि । यद्गौड –'कलश: कलसोऽपि च' ॥ अथ हान्त:–कटाह कटाही कटाहम्–[13]भाण्डविशेष । पुंसि यथा–'कटाहो घृततैलादिपाकपात्रेऽपि कर्परे । कटाह कूर्मपृष्ठे स्यात्सैकूपे च महिषीशिशौ' । स्त्रीनपुंसकयो कश्चित् ॥ अथेदन्त:–अय षष्टि इय षष्टि इद षष्टि–सङ्ख्याविशेष ॥ अथोदन्तौ–अय रेणु इय रेणु इद रेणु–धूलि । अयमिषु इयमिषु इदमिषु–शर । अयोऽपि शाकटायनस्य ॥ सङ्कीर्णविपुला ॥ ६ ॥

स्वतस्त्रिलिङ्गा समाप्ता ।

---

सेनापश्चाद्भाग । [15]आरक्ष इति गजकुम्भमध्य । [16]नियोज्य इति' किङ्कर । [17]श्वभ्रमिति गर्त्ता । [1]वृक्षविशेष इति लोके थोरि । [2]तत्फलमिति बदरीफलम् । [3]चतुरस्रतेति लोकोक्त्या यज्ञादि उपलेपादि च । तत्र यज्ञादौ यथा–'तथ्रावापविदायोगैर्मण्डलान्यधितिष्ठते' । उपलेपादौ यथा–'चतुरस्र मण्डल तु काय विप्रस्य भोजने' । लोकोक्त्या उभयोरपि गृहली चउकउ इति वा उच्यते । [4]सर्पशुनोरिति सर्पकुक्कुरयो ॥ ५ ॥ [5]शाकफलम्बके इति कलम्बाख्ये शाकविशेषे । [6]गृहोपरिभाग इति लोके छाजा । [7]अक्षिरोग इति लोके पडल इति प्रसिद्धि । [8]दण्डे चान्त कपाटयोरिति कपाटयोरन्तर्मध्ये दण्ड, लोके आगळि । [9]उपरागे इति सूर्यचन्द्रयोर्ग्रहणे । [10]कलापे इति समूहे । [11]द्रुमान्तरे इति रम्भायाम् । [12]मानमिति कणकलसी । [13]भाण्डविशेष इति



# अथ परलिङ्गाः ।

परलिङ्गो द्वन्द्वोऽंशी देऽर्थो वाच्यवदपत्यमिति नियताः ।
अध्यारोपाभावे गुणवृत्तेराश्रयाद्वचनलिङ्गे ॥ १ ॥

परलिङ्गो द्वन्द्व—द्वन्द्वसमासो द्वन्द्वस्यैव यत्परमुत्तरपदं तत्समानलिङ्गो भवति । स च समाहारादन्यो भिन्नलिङ्गवर्त्तिपदो वेदितव्यः प्रयोजनवति । समाहारो हि नपुंसक एव, समानलिङ्गवर्त्तिपदोऽपि सिद्धलिङ्ग एव । इमौ मयूरीकुक्कुटौ, इमे कुक्कुटमयूर्यौ । इमे न्यग्रोधशिंशपे । इमौ शिंशपान्यग्रोधौ । इह त्रीणि दर्शनानि अवयवार्था एवाऽपेक्षितपरस्परा द्वन्द्वार्थो न तु तद्व्यतिरिक्तः समुदाय । तत्र दर्शनेऽवयवार्थप्राधान्यात्पर्यायेण तल्लिङ्गभातो

लोपे कडाहभो । देवे इति मद्रादिपूर्वे एोक पूभ । महिषीदितौ इति पक्रमाति ॥ ६ ॥

इति श्रीज्ञानविमलोपाध्यायशिष्यवाचनाचार्यश्रीवल्लभगणिविरचिते श्रीहेमचन्द्राचार्यकृतलिङ्गानुशासनवृत्ति-
दुर्गपदप्रबोधे स्वतस्त्रिलिङ्गाः ।

परलिङ्ग इति परस्य इव परवत् लिङ्गं यस्य स परलिङ्गः । द्वन्द्वसमास इति समाहारद्वन्द्वस्य नपुंसकत्वादत्र इतरेतरद्वन्द्वो गृह्यते । द्वन्द्वस्य सर्वपदार्थप्राधान्यात्सर्वपदलिङ्गत्वे प्राप्ते नियमार्थं इतरेतरयोगो द्वन्द्वसमास । द्वन्द्वस्यैवेति इतरेतरयोगद्वन्द्वसमासस्यैव उत्तरपदमिति पाश्चात्यपदात् क्रमेण पदम् । तत्समानलिङ्ग इति अन्त्येवनपदलिङ्गसदृशलिङ्गो भवति, कोऽर्थः ? यदि पूर्वं स्त्रीलिङ्गपदं पश्चात्पुंलिङ्गपदं तदा पुंलिङ्गसमानमेव । यदा पुंलिङ्गपदं पूर्वं स्त्रीलिङ्गपदं पश्चात्तदा स्त्रीलिङ्गसमानमेव भवतीत्यर्थः । उदाहरणं तु अग्रे ग्रन्थकृद्दर्शयिष्यत्येव । स चेति समानलिङ्गः । समाहारादिति समाहारद्वन्द्वात् । अन्योऽपरः भिन्नलिङ्गवर्त्तिपद इति भिन्नलिङ्गानि वर्त्तिपदानि समासोच्चारणपदानि । देवि कुक्कुभो कुक्कुभो देवि इति लक्षणानि यत्र द्वन्द्वे स भिन्नलिङ्गवर्त्तिपदः । प्रयोजनमिति परलिङ्गतालक्षणम् । समानलिङ्गवर्त्तिपदोऽपि सिद्धलिङ्ग एवेति सदृशलिङ्गवर्त्तिपदोऽपि इतरेतरयोगद्वन्द्वसमासो निष्पन्नलिङ्ग एव । यथा मयूरकुक्कुटौ इति । इमौ मयूरीकुक्कुटौ इतीदं स्त्रीलिङ्गपूर्वपदपश्चात्पुंलिङ्गपदोदाहरणम् । इमे कुक्कुटमयूर्यौ इतीदं पुंलिङ्गपूर्वपदपश्चात्स्त्रीलिङ्गपदोदाहरणम् । एवं इमे न्यग्रोधशिंशपे इह पूर्वपुंलिङ्गपदपश्चात्स्त्रीलिङ्गपदोदाहरणम् । इमौ शिंशपान्यग्रोधौ इह स्त्रीलिङ्गपूर्वपदपश्चात्पुंलिङ्गपदोदाहरणमिति । पूर्वपदस्य पुंलिङ्गत्वे इमौ कुक्कुटमयूरौ, इमौ न्यग्रोधशिंशपौ इति प्रयोगौ स्यातामिति । इह त्रीणि दर्शनानीति इह द्वन्द्वे त्रीणि मतानि । अवयवार्था एवापेक्षितपरस्परा द्वन्द्वार्थो न तु तद्व्यतिरिक्तः समुदाय इत्येकमतस्यार्थः । अवयवार्थाः मयूरीकुक्कुटौ इत्याद्या द्वन्द्वाः अथवा देविकुक्कुटौ इत्यादय इति द्वन्द्वे अवयवार्थाः । अथवा अवयवा एव मयूरीकुक्कुटाद्या एव येषां पदार्था अवयवार्थाः । अपेक्षित वाञ्छित परस्परं अन्योन्यं कर्माणि अपेक्षितपरस्पराः । तुल्यतया एकक्रियाभिसम्बन्ध इतरेतर इत्यर्थः । यदा मयूरी करोति तदा कुक्कुटोऽपि, यदा कुक्कुटः करोति तदा मयूर्यपीति भावार्थः द्वन्द्वशब्दस्यार्थः । कोऽर्थः ? । द्वन्द्वशब्देनात्र अपेक्षितपरस्परा अवयवार्थाः कथ्यन्ते । न तु तद्व्यतिरिक्तः अवयवार्थव्यतिरिक्तः समुदायः । तत्र दर्शने इति अवयवार्था एवापेक्षितपरस्परा द्वन्द्वार्थो न तु तद्व्यतिरिक्तः समुदाय इत्येव लक्षणे । अवयवार्थप्राधान्यादिति मयूरीकुक्कुटौ इत्याद्यवयवार्थप्राधान्यात् । पर्यायेणेति अनुक्रमेण । तल्लिङ्गभाक्त्वो इति मयूरी च कुक्कुटश्च मयूरीकुक्कुटौ इति पूर्वक्रम । मयूरी च कुक्कुटश्च मयूरीकुक्कुटौ इति

नियमार्थमिदम् । येनैवाऽनेनवावस्थाभेदाश्रयणात् समुदायाभावेपि उपमानोपमेयभावः । अवयवार्थव्यतिरिक्तो वा समुदायो द्वन्द्वार्थः । स चाऽवयवलिङ्गेनैव लिङ्गवानित्यत्रापि दर्शने पर्यायेण लिङ्गप्राप्तौ वचनं नियमार्थम् । यदा तु समुदायो द्वन्द्वार्थः स चाऽलिङ्ग इति दर्शनम्, तदा विध्यर्थमिदम् । अत्र च पक्षे व्यतिरिक्तसमुदायरूपद्वन्द्वार्थाभ्युपगमेऽप्यवयवानां कार्यसम्बन्धात्फलतः प्राधान्यमेवेति गौणत्वाभावात्कुक्कुटमयूर्यावित्यादौ 'गोश्चान्त०' (२।४।९६) इति न ह्रस्वः । अंशी—अंशितत्पुरुषः समासः परलिङ्गो भवति । अर्द्धं पिप्पल्या अर्द्धपिप्पलीयम्, अर्द्धमृद्धेयम् 'समेंऽशेऽर्द्धं न वा' (३।१।५४) इत्यंशिसमासः । अर्धो जरत्या अर्द्धजरतीयम् 'जरत्यादिभिः' (३।१।५५) इति समासः । द्वितीयं भिक्षाया द्वितीयभिक्षा । एवं तृतीयभिक्षा । 'द्वित्रि०' (३।१।५६) इति समासः । पूर्वाह्णपूर्वरात्रादीनामह्नेति रात्रेति च पुंस्त्वमेव ॥ ङेऽर्थो वाच्यवत्—ङेऽर्थश्चतुर्थ्यर्थोऽर्थशब्दो यत्र प्रक्रमात्तत्पुरुषसमासे स वाच्यस्य यल्लिङ्गं तत्समानलिङ्गो भवति । ब्राह्मणाय ब्राह्मणार्थः सूपः । एवं ब्राह्मणार्था पेया । ब्राह्मणार्थं पयः । ङेऽर्थ इति किम् ? धान्येनार्थो धान्यार्थः । अर्थ इति किम् ? कुण्डलाय हिरण्यं कुण्डलहिरण्यम् । पुंस्त्वापवादो योगः ॥ अपत्यमिति नियताः—अपत्यमित्यनुक्तनियतलिङ्गवचना अपत्यादयो

---

द्वितीयपक्षम् । इति अवयवार्थलिङ्गप्राप्तौ । नियमार्थमिति निश्चयार्थम् । इदमिति परलिङ्गो द्वन्द्व इति वचनम् । ननु मयूरी च कुक्कुटश्च इति अवयवशब्दवाच्यस्य द्वन्द्वस्य पृथग्भूतस्याभावात् नास्ति उपमानोपमेयभाव इत्याशङ्कायामाह केवलावयवावस्थेति । इह अवस्थाशब्दः प्रत्येकं सम्बध्यते । केवलावस्था मयूरी च कुक्कुटश्चेति लक्षणा इत्यर्थः । अनेनावस्था समासावस्था मयूरीकुक्कुट इति निर्विभक्तिकलक्षणेत्यर्थः । तयोर्भेदाश्रयणात्समुदायाभावेऽपि मयूरी च कुक्कुटश्चेति वाक्यावस्था । मयूरीकुक्कुट इति समासावस्थाद्वयलक्षणः समुदाय उच्यते । तस्याऽभावो वाक्यावस्थासमासावस्थयोः पार्थक्यमित्यर्थस्तस्मिन् । उपमानोपमेयभावः मयूरीकुक्कुटौ इति लक्षणावयवपदस्योपमानता । द्वन्द्वसमासस्योपमेयता इति पूर्वमवसेयादकमिदं वाक्यम् । यथा—मयूरी च कुक्कुटश्च मयूरीकुक्कुटौ इत्येकवारं कुक्कुटशब्दस्योपमानता, द्वितीयवारं कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ इति मयूरीशब्दस्योपमानतेति । अथ द्वितीयमतव्याख्या—अवयवार्थव्यतिरिक्तो वा समुदायो द्वन्द्वार्थ इति । वा इत्यव्ययं पक्षान्तरद्योतकम्, अवयवार्थव्यतिरिक्तो अवयवार्थरहितः समुदायः मयूरीकुक्कुट इति लक्षणो यः स द्वन्द्वार्थः । स च अवयवार्थव्यतिरिक्तः समुदायः । अवयवलिङ्गेनैवेति मयूरीकुक्कुटौ इत्याद्यवयवलिङ्गेनैव इत्यत्रापि । दर्शनेऽपीति अस्मिन्नपि मते । पर्यायेणेति अनुक्रमेण । लिङ्गप्राप्ता इति—मयूरी च कुक्कुटश्च मयूरीकुक्कुट्यौ । मयूरीकुक्कुटौ इति लिङ्गप्राप्तौ । वचनमिति परलिङ्गो द्वन्द्व इति लक्षणम् । नियमार्थमिति निश्चयार्थम् । अथ तृतीयमतव्याख्या । समुदाय इति मयूरीकुक्कुट इति निर्विभक्तिकलक्षणः । [illegible] चेति समुदाय । अलिङ्ग इति मयूरीशब्दस्य योनिमन्नामत्वात्स्त्रीत्वं कुक्कुटस्य देहिनामत्वात् पुंस्त्वम् । अनयोर्यो मयूरीकुक्कुट इति निर्विभक्तिकलक्षणः समुदायस्तस्य न किञ्चिल्लिङ्गमुक्तमस्तीति । इति दर्शन इति मतम् । विध्यर्थमिदमिति सभीपतरलिङ्गविधानार्थं परलिङ्ग इति वचनम् । अत्र च पक्षे इति अस्मिन् अन्त्यमतद्वये । व्यतिरिक्तसमुदायरूपद्वन्द्वार्थाभ्युपगमेऽपीति अवयवार्थव्यतिरिक्तसमुदायलक्षणे द्वन्द्वार्थे समुदायलक्षणे द्वन्द्वार्थे च अवयवानाम् । कार्यसम्बन्धादिति मयूरीकुक्कुट इत्याद्यवयवानां कार्यसम्बन्धात् न तु समुदायस्य । फलत इति क्रियाद्वारेण । प्राधान्यमेवेति प्रधानतैव । ङेऽर्थ इति ङे इत्यनेन चतुर्थी लक्ष्यते । यथा 'ङसोऽपत्ये' इत्यादिषु (षष्ठी ?) । चतुर्थ्यर्थेति अर्थशब्दस्य विशेषणं नोपपद्यते । अतोऽर्थावगतिः । ततश्चतुर्थ्यर्थस्तादर्थ्यं यत्र वर्त्तमानोऽर्थशब्दो यस्मिन् समासे स तत्पुरुषः । धान्येनार्थ इति धान्येन प्रयोजनं धान्यार्थः । अपत्यमितीति इह

नियता । नियते अजहद्वृत्तिनी व्यस्ते समस्ते वा लिङ्गवचने येषां ते तथा। अपत्यं दुहिता पुत्रश्च । इतिशब्दस्य आद्यर्थत्वात् । एवं तोकं रक्षः —पुमान् स्त्री वा । सारथिः पुमान् स्त्री कुलं वा । एवं सादी निषादी अतिथिः । स्याद्वादः प्रमाणम् । वेदाः प्रमाणम् । स्मृतयः प्रमाणम् । अनेकान्तात्मकं वस्तु गोचरः सर्वविदाम् । आवपनमियमुष्ट्रिका । दण्ड उपसर्जनम् । विद्या गुणः । शौर्यं गुणः । गौः प्रकाण्डम् । कुमारी रत्नम् । अश्वो मतल्लिका । ब्राह्मणो मचर्चिका । स्वार्थिकप्रत्ययान्तास्तु प्रकाण्डादयः क्वचिद्वाच्यलिङ्गा अपि । वीरो रक्षः प्रकाण्डको । कुमारीतल्लजेत्यादि । बाहुलकात्क्वचिदाश्रयलिङ्गतापि—प्रमाणी ब्राह्मणी । स्त्री प्रमाणं येषां ते स्त्रीप्रमाणाः कुटुम्बिन इत्यादि ॥ अध्यारोपाभावे गुणवृत्तेराश्रयाद्वचनलिङ्गे—गुणो विशेषणं तस्मात्प्रवृत्तिनिमित्ताद्विशेष्ये वृत्तिर्यस्य शब्दस्य स गुणवृत्तिः शब्दः । तस्याश्रयाद्विशेष्यवशाद्वचनलिङ्गं च भवतः । परत्वात्सकललिङ्गशास्त्रापवादो योगः । वचनमिति पूर्वाचार्याणां संज्ञाया संज्ञा । आरोपोऽर्थान्तरे निवेशनम्, अधिकमारोपोऽध्यारोपः । तस्याभावे सति । गुणवृत्तिश्च गुणद्रव्यक्रियोपाधिभेदात्त्रेधा ॥ गुणोपाधिः—शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम् । मूर्खो ना, मूर्खा स्त्री, मूर्खं कुलम् । एवं विद्वान् विदुषी विद्वत् । निजः निजा निजमित्यादि ॥ द्रव्योपाधिः—दण्डी ना । दण्डिनी स्त्री । दण्डि कुलमित्यादि । क्रियोपाधिः—कर्तरि कृदन्तः—पाचकः ना, पाचिका स्त्री, पाचकं कुलम् । क्षीरपा ना, क्षीरपा स्त्री, क्षीरपं कुलम् । एवं ग्रामणीः, खलपूः, वातप्रमीरित्यादि । कर्मकर्मादौ कृत्यान्तश्च—रुच्यः रुच्या रुच्यम् । अव्यथ्यः अव्यथ्या अव्यथ्यम् । वास्तव्यः वास्तव्या वास्तव्यमित्यादि । कार्यः कार्या कार्यम् । एवं कर्तव्यः करणीयः देयः कृत्यः इत्यादि । स्नात्यनेन स्नानीयः, स्नानीया स्नानीयमित्यादि । दीयतेऽस्मै दानीयः, दानीया दानीयमित्यादि । एवं अनट्, घञ्, क्ति, भावाकर्त्रोः, अल्, भावकर्म, क्युक्तः भावकृत्य, क, आन अनट् अन खल् नि वर्जेषु शेषप्रत्ययेष्वप्युदाहार्यम् । राजभोजनः शालिः, राजभोजनी द्राक्षा, राजभोजनमन्नम् । एवं सुप्रापः सुप्रापा सुप्रापम् । सुपानः सुपाना

---

इतिशब्द आद्यर्थः । तेन अपत्यं इति आदिर्येषां ते अपत्यमिति इति यदुक्तं तदत्र विभक्त्या लिङ्गं वचनं च अनुवृत्तं भवतीति । अनुवृत्ते च नियते च अनुवृत्तनियते । अनुवृत्तनियते लिङ्गवचने येषां ते अनुवृत्तनियतलिङ्गवचनाः । एवं सादी निषादी अतिथिः इत्यादिषु लिङ्गनिर्णयः । स्याद्वादः प्रमाणमिति अत्र लिङ्गनियतत्वम् । वेदाः प्रमाणं स्मृतयः प्रमाणमिति उभयत्रापि लिङ्गवचनयोर्नियतत्वम् । एवं अनेकान्तात्मकं वस्तु गोचर इत्यत्रापि लिङ्गवचननियतत्वम् । उष्ट्रिकेति पात्रमुखी कुतूः, आवपो इति लोके घृतादिभाजनम् । स्त्रीप्रमाणा इत्यत्र 'प्रमाणीसङ्ख्याड्डः' (७।३।१२९) इति डः । तस्मादिति गुणात् विशेषणादित्यर्थः । प्रवृत्तिनिमित्तादिति व्यापारनिमित्तात् । वृत्तिरिति वर्तनम् । तस्येति शब्दस्य । अर्थान्तरे निवेशनमिति एकस्मादर्थाद् योऽन्योऽर्थान्तरं तत्र निवेशनं स्थापनम्, यथाऽग्निर्माणवकः । अधिकमिति न स्त्री अधी तस्याम् । तस्येति अध्यारोपस्य । निजं इति निजशब्देन आत्मीयत्वं नाम गुण उच्यते । कर्तृकर्मादौ इत्यत्र आदिग्रहणात्करणं गृह्यते । रुच्यं इति नित्यं रोचते रुच्यः । न व्यथ्यते अव्यथ्यः । वास्तव्यमिति वसनाय योग्यम् । इत्यादीति इत्यादिप्रयोगाः कर्तरि ज्ञेयाः । कृत्य इत्यादीति कृत्य इत्यादिप्रयोगाः कर्मणि ज्ञेयाः ।

सुपानम् । सर्वादिः केवलस्तदन्तश्च गुणवृत्तिः; एवं सङ्ख्यापि । सर्वः सूपः, सर्वा यवागूः, सर्वं अन्नम् । एवं स सा तत् । अन्यः अन्या अन्यत् । द्वाभ्यामन्यः द्व्यन्यः, द्व्यन्या द्व्यन्यत् । एकः पटः, एका पटी, एकं वस्त्रम् । एवं द्वौ द्वे द्वे । त्रयः तिस्रः त्रीणि । चत्वारः चतस्रः चत्वारि ॥ बहुव्रीहिरदिग्वृत्तिर्गुणवृत्तिः—चित्राः गावोऽस्य चित्रगुर्नां, चित्रगु स्त्री, चित्रगु कुलम् । ऊनास्त्रयस्तिस्रस्त्रीणि वा येषां ते ऊनत्रयः ऊनतिस्रः ऊनत्रयो वा पुरुषाः । ऊनास्त्रयस्तिस्रस्त्रीणि वा यासां ता ऊनत्रयः ऊनतिस्रः ऊनत्रयो वा स्त्रियः । ऊनास्त्रयस्तिस्रस्त्रीणि वा येषां तानि ऊनत्रीणि ऊनतिसृणि ऊनत्रीणि वा कुलानि । दिग्वाची तु दिशामत्वात्स्त्रीलिङ्ग उक्त एव । दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा । एवं दक्षिणपश्चिमा दिक् ॥ तत्पुरुषः पूर्वपदप्रधानस्तद्धितार्थद्विगुश्च गुणवृत्तिः । अतिक्रान्तः खट्वां अतिखट्वम्, अतिखट्वा, अतिखट्वम् । अवक्रुष्टः कोकिलया अवकोकिलः, अवकोकिला, अवकोकिलम् । परिग्लानोऽध्ययनाय पर्यध्ययनः पर्यध्ययना पर्यध्ययनम् । अलं जीविकायै अलञ्जीविकः, अलञ्जीविका अलञ्जीविकम् । निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः, निष्कौशाम्बी निष्कौशाम्बि । प्राप्तो जीविकां प्राप्तजीविकः । प्राप्ता जीविकां प्राप्तजीविका । प्राप्तं जीविकां प्राप्तजीविकम् । शतात्परे इमे परःशताः । एवं इमाः परःशताः । इमानि परःशतानि । एवं परःसहस्राः । परोलक्षाः । उत्तरपदप्रधानस्य तु यथास्वं लिङ्गम् । द्विगुः खल्वपि—पञ्चसु कपालेषु संस्कृतः पञ्चकपालः, पञ्चकपाला पञ्चकपालम् । समाहारद्विगोस्तु यथायोगं स्त्रीत्वनपुंसकत्वे उक्ते । उत्तरपदद्विगोरत्तूत्तरपदलिङ्गत्वे आश्रयलिङ्गत्वे वा न विशेषः । समासान्तरे तूक्तमेव लिङ्गम् । रक्ताद्यर्थेऽणाद्यन्ताश्च गुणवृत्तयः । हरिद्रया रक्तः हारिद्रः पटः, हारिद्री शाटी, हारिद्रं वस्त्रम् । एवं लाक्षिकः लाक्षिकी लाक्षिकम् । पीतकः पीतिका पीतकम् । कृत्तिकाभिश्चन्द्रयुक्ताभियुक्तः कार्त्तिकः दिवसः, कार्त्तिकी पौर्णमासी, कार्त्तिकमहः । एवं राधानुराधीयः राधानुराधीया राधानुराधीयम् । इन्द्रो देवताऽस्य ऐन्द्रो मन्त्रः, ऐन्द्री ऋक्, ऐन्द्रं हविः । शरावेषूद्धृतः शारावः शारावी शारावम् ॥ एवमपवादवर्जं सर्वतद्धितेषूदाहार्यम् ॥ आरोपाभाव इति किम् ? चञ्चेव चञ्चापुरुषः । खरकुटीवं खरकुटी-

शालीयमित्यादीति शालीयः इत्यादिप्रयोगाः करणे ज्ञेयाः । अदिग्वृत्तिरिति अनेन किमुक्तं भवति अन्यपदार्थोऽपि स्त्रीलिङ्ग एवायम् । तद्धितार्थद्विगुरिति तद्धितप्रत्ययलोपेन यो द्विगुः स तद्धितार्थद्विगुः 'अन्यस्तु सर्वो नपुंसकः' इति नपुंसकत्वं माभूदिति ख्यापनमात्रम् । अवक्रुष्ट इति कश्चित्प्रदेशः सशब्दं कृतः कोकिलया स अवकोकिलः । अलं इति समर्थः । निष्कौशाम्बीत्यत्र 'ङ्यो ऽन्त्यस्याऽत्' (२।४।९२) इति ह्रस्वी । पञ्चकपाल इत्यत्र अण्प्रत्ययलोपः । उत्तरपदद्विगो इति यदा उत्तरपदं प्रधानं तदा तस्य लिङ्गविधानं एव । अथाश्रयलिङ्गता तदापि उत्तरपदमेव आश्रयलिङ्गेनाऽन्यो विशेषः कश्चिदिति यथा पञ्च गावो धनमस्य पञ्चगवधनः । पञ्चनावः प्रिया अस्य पञ्चनावप्रियः इत्यत्र ग्राधन्ते स्वार्थिका इत्यनेन ङीप्रत्ययाभाव इति । समासान्तरे इति द्वन्द्वादौ । रक्ताद्यर्थेऽणाद्यन्ताश्चेति अपत्यप्रत्ययस्य तु स्त्रीपुंसतोक्ता, रक्ताद्यर्थे ये अणादयः प्रत्ययास्ते आश्रयलिङ्गाः इत्यर्थः । राधानुराधीय इति राधा विशाखा अनुराधा मैत्री अनयोर्द्वन्द्वे 'द्वन्द्वादीयः' (६।३।१७) इतीयः । शरावेष्विति शिरावला इति प्रसिद्धिरेषु । चञ्चेति

ब्राह्मणः। 'शय्यावन्ति हरिचन्दनपत्राणि निरीक्षणो जलदा भवन्ति' एषु समतया आरोपः। पञ्चालानां निवासः पञ्चालाः जनपदः। एवमङ्गा वङ्गाः कलिङ्गाः सुह्मा सुराष्ट्राः कुरवः मत्स्याः पुण्ड्राः मगधाः। वरणानामदूरभवं वरणानगरम्। (वरणाः?) कङ्किशाल्मलीनां कङ्किशाल्मलयो ग्रामः। गोदयोरदूरे गोदौ ग्रामः। आलम्बायनपर्णानामालम्बायनपर्णा ग्रामः। गयानां गयाः, इत्यादिषु निवसनादिनिमित्त आरोपः। अन्नं प्राणा इति साधननिमित्तः। तुला चन्दनमिति धारणनिमित्तः। नगरमयमिन्द्राधिपत्यनिमित्तः, आढ्यः सत्यः इति मानानिमित्त इति आश्रयवल्लिङ्गवचने न भवत इति। अस्त्रीति किम्? वरणानां योगात्तद्भार्यायामध्यारोपे आश्रयलिङ्गतैव। प्रकृत्या भार्या न एवेन्द्राग्न्योर्भेदोपचारेण मधी। एव वरुणानी इन्द्राणी इत्यादि ॥ गौणार्थे ॥ १ ॥

प्रकृतेर्लिङ्गवचने बाधन्ते स्वार्थिकाः क्वचित्।
प्रकृतिर्हरीतक्यादिर्न लिङ्गमतिवर्त्तते ॥ २ ॥

प्रकृतेर्लिङ्गवचने बाधन्ते स्वार्थिकाः क्वचित्—स्वार्थे प्रकृत्युपात्त एवार्थेऽभिधेये ये प्रत्यया भवन्ति ते स्वार्थिकाः। ते च क्वचिल्लक्ष्यानुसारेण प्रकृतेः सम्बन्धि लिङ्गं वचनं च बाधन्ते—अतिवर्त्तन्ते। बाधिते च लिङ्गे बहुलं लिङ्गव्यवस्था। होत्रैव होत्रीयम्। सन्दिष्टा वाग् वाचिकम्। विनय एव वैनयिकम्। उपाय एव औपयिकम्। योग्यवाचिनस्त्वौपयिकस्याश्रयलिङ्गतैव। यद्भट्टिः—'न्याय्यमौपयिकं रिपुः'। वृत्तिरेव वार्त्तिकम्। प्रकृता अपूपा आपूपिकम्। ईषदसमाप्ता वाग् वाक्कल्पोऽयम्। गुडकल्पा द्राक्षा। ह्रस्वा शुण्डा शुण्डारः। शमीरः। शमीरुः। कुतुपः। क्वचिद्ग्रहणादननुवृत्तेऽपि—राज्ञो धूः राजधुरा। मृदेव मृत्तिका। मृत्सा मृत्स्ना। बहुतैलं भैमजा। बहुपया यवागूः। बहुवर्षो जयः कालः। क्वचिद्विकल्पः। प्रकृता यवागूः यवागूमयी यवागूमयम्। ईषदसमाप्तो गुडो बहुगुडो बहुगुडा वा द्राक्षा। प्रकृत्यर्थेऽभिधानात्तल्लिङ्गवचना एवामी भवन्तीति प्रतिपत्तिव्युदासार्थं वचनम् ॥

प्रकृतिर्हरीतक्यादिर्न लिङ्गमतिवर्त्तते—हरीतक्यादिका प्रकृतिः प्रत्ययार्थे वर्त्तमानापि प्रकृत्यर्थलिङ्गं नातिवर्त्तते। हरीतक्या विकारोऽवयवो वा फलं हरीतकी, हरीतक्यौ हरी-

---

सभाशब्दस्य पुरुषलिङ्गत्वं न भवति किं तु पुरुषशब्दविशेषणम्। किंभूतः पुरुषः? सभा अविद्यमानकरत्वा तुल्यता। वैरकुणीयेति मालिन्यतुल्यता। शय्याया नवाभीति शय्यायामारोपो। हरिचन्दनपत्राणी साक्षुमायात्। निरीक्षणिय इति लोके परिदृष्टा। समतयेति तुल्यतया। वरणानामिति वृक्षाणाम्। कङ्किशाल्मलीनामिति विशालशिशपाणाम्। आलम्बायनपर्णानामिति वृक्षविशेषाणाम्। गयानामिति गयानगरीणाः पुरुषाः गया। अन्न प्राणाः इति यथा प्राणा इति न भवति। नगरमयमिति अयं पुरुषो नगर इति भवति न [redacted] नगरोऽयं पुरुष इति ॥ १ ॥ प्रकृत्युपात्ते इति उपात्तेऽङ्गीकृते उक्ते इति यावत्। अभिधेये इति वाच्ये। अतिवर्त्तन्ते इति अधिका भवन्ति। बहुलमिति प्रायेण। होत्रीयमित्यत्र 'होत्राभ्य ईय' (७।१।७६) इतीयः। वाचिकमित्यत्र 'वाच इकण्' (७।२।१४८) इतीकण्। वैनयिकमिति 'विनयादिभ्यः' (७।२।१६९) इतीकण्। औपयिकमित्यत्र 'उपायात् ह्रस्वश्च (७।२।१७०) इति इकण् ह्रस्वश्च। न्याय्यमिति योग्यम्। आपूपिकं इत्यत्र तयोः समूहः (?)। 'क्वचि०' (६।२।१७) तीकण्। मसंज्ञेति सुरा।

तक्यः। फलानि। एव पिप्पली कोशातकी नखरजनी शंखकण्डी दांडीदोडी श्वेतपाकी अर्जुनपाकी कणा चला द्राक्षा धा(ध्मा ?)ह्वा गंगेरिका कण्टकारिका शेफालिका। मल्लिकाया निकारोऽवयवो वा पुष्प मल्लिका। मालती यूथिका मागधी नवमालिका। विदार्या मूल विदारी। अंशुमती बृहती॥ सङ्कीर्णविपुला॥ २॥

वचन तु खलतिकादिर्बह्वर्थात्येति पूर्वपदभूता।
स्त्रीपुन्नपुमकाना सहवचने स्यात् पर लिङ्गम्॥ ३॥

**वचनं तु खलतिकादिः**–तुरेवार्थे, खलतिकादिका प्रकृतिरदूरभवत्वादिना निमित्तेनाऽन्यत्राऽध्यारोपितापि स्वगत वचनमेव नातिवर्त्तते। लिङ्ग त्वतिक्रामत्येव–आश्रयगतमेव तदुपादत्त इत्यर्थ। खलतिको नाम पर्वत, तस्यादूरभवानि वनानि खलतिक वनानीति॥ **बह्वर्थात्येति पूर्वपदभूता**–बह्वर्था बहुविषया प्रकृति पञ्चालादिका पूर्वपदभूता सती स्वगत वचन सङ्क्रामत्येति अतिक्रामति। समारोपेऽप्याश्रयवद्वचन प्रतिपद्यत इत्यर्थ। अध्यारोपाभावे इत्यस्यापवाद। पञ्चालाश्च निवास मथुरा च, पञ्चालमथुरे। बह्वर्थेति किम्? गोदौ च ग्राम मथुरा च गोदमथुरा। पूर्वपदभूतेति किम्? उत्तरपदभूता नान्येति। मथुरा च पञ्चालाश्च निवास मथुरापञ्चाला॥ **स्त्रीपुन्नपुसकानां सहवचने स्यात्पर लिङ्गम्**–स्त्रीपुन्नपुसकलिङ्गाना सहवचने पर पुलिङ्ग नपुसकलिङ्ग वा भवति। स्त्रीपुसयो सहवचने पुलिङ्ग भवति। सा च पटश्च तौ। स च शाटी च तौ। स्त्रीनपुसकयो-र्नपुसकम्–सा च वस्त्र च ते। तच्च शाटी च ते। पुन्नपुसकयोर्नपुसक च–स च वस्त्र च ते। तच्च पटश्च ते। स्त्रीपुन्नपुसकाना नपुसकम्–सा च पटश्च वस्त्र च तानि। स च शाटी च वस्त्र च तानि। तच्च शाटी च पटश्च तानि। युगपत्सर्वलिङ्गोपादानायोगे सति पर्याये शिष्यमाणलिङ्गे वा प्रसक्ते नियमार्थं च वचनम्। एतच्चाऽद्वन्द्वतत्पुरुषविशेषणाना वेदितव्यम्, द्वन्द्वतत्पुरुषविशेषणाना तु विशेष्यलिङ्गतैव। स च कुक्कुट, सा च मयूरी कुक्कुटमयूर्यौ ते। अर्द्धं च पिप्पल्यास्तदर्द्धपिप्पली च सा ते साध्व्यौ। यद्यप्येतदस्ति

प्रतिपत्तिव्युदासार्थमिति प्रकारनिरासार्थम्। कोशातकीति लोके घीसोडी। नखरजनीति लोके महिंदी। शंखकण्डीति ओषधिविशेष। दांडीदोडीति वनस्पतिविशेषौ। श्वेतपाकी अर्जुनपाकीति ओषधिविशेषौ। कणेति पिप्पली। चलेति अतिबल। द्राक्षा ध्माह्वा इति उभयोर्लोके द्राख इति प्रसिद्धि। गंगेरिकेति निलोवणा गोली। कण्टकारिकेति रींगणी। शेफालिकेति सेहाली। मल्लिकाया इति विचकिलस्य। मालतीति लोके जाइफूल। यूथिका मागधी इत्युभौ लोके जूहीनाचकौ। नवमालिकेति लोके नीमाली। अंशुमतीति साल्वनी। बृहतीति रींगणी॥ २॥ अध्यारोपितापीति स्थापितापीति। आश्रयगतमिति विशेष्यगतम्। तदिति लिङ्गम्। पर्याये इति नामसमूहे। शिष्यमाणलिङ्ग इति स्थाप्यमानलिङ्गे। एतदिति परलिङ्गलक्षणम्। अद्वन्द्वतत्पुरुषविशेषणानामिति कोऽर्थ? द्वन्द्वविशेषण तत्पुरुषविशेषण च वर्जयित्वेत्यर्थ। अर्द्धं च पिप्पल्यास्तत् अर्द्धपिप्पली च सा ते साध्व्यौ इति। अत्र अर्द्धपिप्पलीमध्यस्थितार्थ सम्बन्धे अर्द्धपिप्पलीसम्बन्धे च तच्च सा चेति कस्यचिद्वक्तुर्विवक्षाया स्यदादीत्यनेन ते साधुनी इति क्लीबलिङ्ग प्राप्नोतीति तत्पुरुषविशेषण परिहृत्यानोसरेण सम्बन्धे ते साध्व्यौ इत्येव भवति।

भेदेनोपक्रम्य समुदितयोरभिधानम्—यथा त्वं चाहं च वृत्रहन्नुभौ सयुज्यावहे इति। समुदितौ च प्रक्रम्य भेदेनाभिधानं यथा—प्लक्षन्यग्रोधावानय तं च तं चेति। तथापीह सदादीनामेकशेषे समुदितयोरेव विवक्षा कर्तव्या। अर्द्धपिप्पल्यौ ते इति, ननु भेदेन प्रक्रमितव्यमिति बहुविद्। ततश्च सा च सा चेत्येव विग्रह इति न्यायप्राप्तमेव लिङ्गम् ॥ आर्या ॥ ३ ॥

न्नन्ता सङ्ख्या डतिर्युष्मदस्मच्च स्युरलिङ्गकाः।
पदं वाक्यमव्ययं चेत्यसंख्यं च तद्बहुलम् ॥ ४ ॥

न्नन्ता सङ्ख्या डतिर्युष्मदस्मच्च स्युरलिङ्गकाः—नकारान्ता सङ्ख्या डतिप्रत्ययान्ता युष्मदस्मदी चेत्येतेऽलिङ्गाः स्युः। पञ्चकुमार्यः सप्तरोहिण्यः—अत्र ङीर्न भवति। नन्तेति किम्? एकद्वित्रिचत्वारो विशेष्यलिङ्गा भवन्ति। एकः पटः, एका शाटी, एकं वस्त्रम्। द्वौ पटौ, द्वे शाट्यौ वस्त्रे वा। पंचो लिङ्गोपादानाऽनुपादानयोरविशेष इत्यनुपादानम्। कति यति तति स्त्रियः—अत्र ङीर्न भवति। युष्मभ्यं अस्मभ्यं स्त्रीभ्यो देहि। त्वत् मत् स्त्रिया गतं। युष्मत् अस्मत् स्त्रीभ्यो भयम्—अत्राप् न भवति ॥ पदं वाक्यमव्ययं चेत्यसङ्ख्यं च—विभक्त्यन्तं पदम्, सविशेषणमाख्यातं वाक्यम्, स्वराद्यव्ययम्, इत्येतेऽसङ्ख्याः अलिङ्गाश्च। काण्डे, कुड्ये, कुलं पचते, काण्डीभूतं कुलम्, एषु क्लीब इति ह्रस्वो न भवति। तद्बहुलम्—तत्पूर्वोक्तं लिङ्गलक्षणं बहुलं द्रष्टव्यम्। तेन कठानां धर्म आम्नायो वा काठकम्। कालापकं बाह्वृच्यम्। तथा 'पिङ्गः पिशङ्गे पिङ्गी तु शम्या पिङ्गं तु बाल्हकम्। रामठनालिकायां तु पिङ्गा गोरोचनोमयोः'। तथा 'धनञा मुद्गपर्ण्यां स्त्री मुम्बे ना क्लीबमम्बुजे'। तथा 'पिण्डः सान्द्रे बले बोले गृहांशे जीवनायसोः। पिण्डो देहे जपापुष्पे निर्वापे सिह्लकेऽपि च॥ पिण्डी स्यात्तगरेऽलाबूखर्जूरीभेदयोरपि'। तथा 'द्रुणं चापे च खङ्गे च द्रुणो वृश्चिकभृङ्गयोः।

---

समुदितयोरिति अर्द्धपिप्पली अर्द्धपिप्पलीसेवरूपयोः। तं च तं चेति गुरुं स्त्रं चेति। ननु भेदेनेति अर्द्धं च पिप्पल्यास्तत् अर्द्धपिप्पली च सेति भेदेन कृतस्य। सा च सा चेत्येवेति सा च सा चेति तत्पुरुषविशेषणे प्रत्यय न द्वन्द्वविशेषणे एतच्च तत्पुरुषविशेषणे भेदेनापि कृते न किमपि विनश्यति इति दर्शितम्। अन्यथा समुदितस्यैव विशेष्यतच्छब्देन परामर्शात् भेदविवक्षा न कर्तव्यैव ॥ ३ ॥ पंच इति—अत्र प्रिया स्त्रियः पदं येषां ते प्रियपदं इत्यत्र यदाऽलिङ्गत्वं तदा न पुंवद्भावः। यदा तु वाच्यलिङ्गता तदा क्यैकार्थ्याद्चरपदे परतः स्त्रीति पुंवद्भावप्रसङ्ग इति विशेषोऽस्त्येवेति चेत्तत्र अलिङ्गत्वेऽपि 'ङ्यापो बहुल०' (२।४।९९) इति ह्रस्वत्वात्। प्रिया पञ्च येषामित्यादौ तु प्रिया पञ्चान इत्यादेव भवति न पुंवद्भावो नापि ह्रस्व इति। अनुपादानमिति लिङ्गाग्रहणम्। असङ्ख्यमिति यत्सूत्रे पदं तत् अव्ययविशेषणं द्रष्टव्यम्। कालापकमिति कलापानां धर्म आम्नायो वा इहाम्नायशब्देन गुरुसम्प्रदाय उच्यते। बाह्वृच्यमिति बह्वृचां धर्म आम्नायो वा। 'छन्दोगौक्थिक०' (६।३।१६६) इति साधु। पिङ्ग इति पिङ्गादिषु वक्ष्यमाणेषु प्रायो बाहुलकाद् यथोक्तं लिङ्गं ज्ञेयम्। पिशङ्गे इति पीतरक्ते वर्णे। शम्यामिति खेजडीनाम्नि वृक्षे। बाल्हकमिति लोके बाल्हो। रामठनालिकायामिति हिङ्गुनाली औषधिलक्षणम्। गोरोचनेति मङ्गलोपकरणद्रव्यम्। उमेति अतसी। मुद्गपर्ण्यामिति मुदगवनी। मुम्बेति लोके मोथ। सान्द्रे इति दृढे। बले इति पराक्रमे। बोले इति बीजाबोलऔषधे। गृहांशो इति वेश्मैकदेशे। जीवनायसोरिति जललोहयोः। निर्वापे इति पितृ

